अन१ नीहिमसंहतिः। शीतंगुणेतद्वदर्थाः सुषीमः शिशिरो जडः ॥ ९१ ॥ तु
ख १ षारः शीतलः शीतो हिमः सप्तान्यलिङ्गकाः। ध्रुव औत्तानपादिः स्यादगस्त्यः
कुम्भसम्भवः ॥ ९२॥ मैत्रावरुणिरस्यैव लोपामुद्रा सधर्मिणी। नक्षत्रमृक्षं
भं तारा तारकाप्युडु वा स्त्रियाम् ॥ ९३ ॥ दाक्षायण्योऽश्विनीत्यादि तारा अ
श्वयुगश्विनी। राधा विशाखा पुष्ये तु सिध्यतिष्यौ श्रविष्ठया ॥ ९४॥ समा
धनिष्ठाः स्युः प्रोष्ठपदा भाद्रपदाः स्त्रियः। मृगशीर्षं मृगशिरस्तस्मिन्नेवाग्रहा
यणी ॥ ९५॥ इल्वलास्तच्छिरोदेशे तारका निवसन्ति याः। बृहस्पतिः सुरा
चार्यो गीष्पतिर्धिषणो गुरुः ॥ ९६॥ जीव आङ्गिरसो वाचस्पतिश्चित्रशि
खण्डिजः। शुक्रो दैत्यगुरुः काव्य उशना भार्गवः कविः ॥ ९७॥ अङ्गार
कः कुजो भौमो लोहिताङ्गो महीसुतः। रौहिणेयो बुधः सौम्यः समौ सौरिश
नैश्चरौ ॥ ९८ ॥ तमस्तु राहुः स्वर्भानुः सैंहिकेयो विधुन्तुदः। सप्तर्षयो म
रीच्यत्रिमुखाश्चित्रशिखण्डिनः ॥ ९९॥ राशीनामुदयो लग्नं ते तु मेषवृ
षादयः। सूरसूर्य्यार्यमादित्यद्वादशात्मदिवाकराः ॥ १०० ॥ भास्करा
हस्करब्रध्नप्रभाकरविभाकराः। भास्वद्विवस्वत्सप्ताश्वहरिदश्वोष्णरश्म
यः ॥ १०१ ॥ विकर्तनार्कमार्तण्डमिहिरारुणपूषणः। द्युमणिस्तरणिर्मि
त्रश्चित्रभानुर्विरोचनः ॥ १०२ ॥ विभावसुर्ग्रहपतिस्त्विषांपतिरहर्पतिः
। भानुर्हंसः सहस्रांशुस्तपनः सविता रविः ॥ १०३ ॥ माठरः पिङ्गलो द
ण्डश्चण्डांशोः पारिपार्श्विकाः। सूरसूतोऽरुणोऽनूरुः काश्यपिर्गरुडा

ग्रजः ॥१०४॥ परिवेषस्तुपरिधिरुपसूर्य्यकमण्डले। किरणोस्रमयूखां अम१
शुगभस्तिघृणिधृष्णयः ॥ १०५ ॥ भानुःकरोमरीचिःस्त्रीपुंसयोर्दीधि ख१
तिःस्त्रियाम्। स्युःप्रभारुग्रुचिस्त्विड्भाभाश्छविद्युतिदीप्तयः ॥१०६॥ रो
चिःशोचिरुभेक्लीबेप्रकाशोद्योतआतपः। कोष्णंकवोष्णंमन्दोष्णंकदुष्णं
त्रिषुतद्वति ॥ १०७॥ तिग्मंतीक्ष्णंखरंतद्वन्मृगतृष्णामरीचिका। कालो
दिष्टोप्यनेहापिसमयोप्यथपक्षतिः ॥१०८॥ प्रतिपद्द्वेइमेस्त्रीत्वेतदा
द्यास्तिथयोद्वयोः। घस्रोदिनाहनीवातुक्लीबेदिवसवासरौ॥ १०९॥ प्र
त्यूषोऽहर्मुखंकल्यमूषःप्रत्यूषसीअपि। प्रभातञ्चदिनान्तेतुसायःसंध्यापि
तृप्रसूः ॥११०॥ प्राह्णापराह्णमध्याह्नास्त्रिसंध्यमथशर्वरी। निशानि
शीथिनीरात्रिस्त्रियामाक्षणदाक्षपा ॥ १११॥ विभावरीतमस्विन्यौर
जनीयामिनीतमी। तमिस्रातामसीरात्रिर्ज्योत्स्नीचन्द्रिकयान्विता
॥ ११२ ॥ आगामिवर्त्तमानाहर्युक्तायांनिशिपक्षिणी। गणरात्रंनिशा
बह्व्यःप्रदोषोरजनीमुखम्॥ ११३॥ अर्द्धरात्रनिशीथौद्वौद्वौयामप्रहरौ
समौ। सपर्व्वसन्धिःप्रतिपत्पञ्चदश्योर्यदन्तरम्॥ ११४ ॥ पक्षान्तौप
ञ्चदश्यौद्वेपौर्णमासीतुपूर्णिमा। कलाहीनेसाऽनुमतिःपूर्णेराकानिशा
करे॥११५॥ अमावास्यात्वमावस्यादर्शःसूर्य्येन्दुसंगमे। सादृष्टेन्दुः
सिनीवालीसानष्टेन्दुकलाकुहूः॥ ११६॥ उपरागोग्रहोराहुग्रस्तेत्विन्दौ
चपूष्णिच। सोपप्लवोपरक्तौद्वावग्न्युत्पातउपाहितः ॥११७॥ एकयो

अम १ क्यापुष्पवन्तौदिवाकरनिशाकरौ। अष्टादशनिमेषास्तुकाष्ठात्रिंशत्तुताः

स्व १ कलाः॥११८॥ तास्तुत्रिंशत्क्षणस्तेतुमुहूर्त्तोद्वादशास्त्रियाम्। तेतुत्रिं

शदहोरात्रःपक्षस्तेदशपञ्च च ॥ ११९ ॥ पक्षौपूर्व्वापरौशुक्लकृष्णौ

मासस्तुतावुभौ। द्वौद्वौमाघादिमासौस्यादृतुस्तैरयनंत्रिभिः॥ १२० ॥ अ

यनेद्वेगतिरुदग्दक्षिणार्कस्यवत्सरः। समरात्रिन्दिवेकालेविषुवद्विषुव

च्चतत्॥ १२१ पुष्ययुक्तापौर्णमासीपौषीमासेतुयत्रसा। नाम्नासपौषोमा

घाद्याश्चैवमेकादशापरे ॥ १२२॥ मार्गशीर्षेसहामार्गआग्रहायणिक

श्चसः। पौषेतैषसहस्यौद्वौतपामाघेऽथफाल्गुने॥ १२३॥ स्यात्तपस्यः

फाल्गुनिकःस्याच्चैत्रेचैत्रिकोमधुः। वैशाखेमाधवोराधोज्येष्ठेशुक्रःशुचि

स्त्वयम्॥ १२४ ॥ आषाढेश्रावणेतुस्यान्नभाःश्रावणिकश्चसः। स्युर्नभस्यः

प्रौष्ठपदभाद्रभाद्रपदाःसमाः ॥ १२५॥ स्यादाश्विनइषोप्याश्वयु

जोपिस्यात्तुकार्त्तिके। बाहुलोर्ज्जौकार्त्तिकिकोहेमन्तःशिशिरोऽस्त्रिया

म्॥ १२६॥ वसन्तेपुष्पसमयःसुरभिर्ग्रीष्मऊष्मकः। निदाघउष्णो

पगमउष्णऊष्मागमस्तपः ॥ १२७॥ स्त्रियांप्रावृट्स्त्रियांभूम्निवर्षाअ

थशरत्स्त्रियाम्। षडमीऋतवःपुंसिमार्गादीनांयुगैःक्रमात्॥ १२८॥

संवत्सरोवत्सरोऽब्दोहायनोऽस्त्रीशरत्समाः। मासेनस्यादहोरात्रःपैत्रो

वर्षेणदैवतः ॥ १२९ ॥ दैवेयुगसहस्रेद्वेब्राह्मःकल्पौतुतौनृणाम्। म

न्वन्तरंतुदिव्यानांयुगानामेकसप्ततिः ॥ १३० ॥ संवर्तःप्रलयःकल्पः

श्वयः कल्यान इत्यपि । अस्त्री पङ्कं पुमान्पाप्मा पापं किल्बिषकल्मषम् अम १
॥ १३१ ॥ कलुषं वृजिनैनोघमंहो दुरितदुष्कृतम् । स्याद्धर्ममस्त्रियां पु स्व १
ण्यश्रेयसी सुकृतं वृषः ॥ १३२ ॥ मुत्प्रीती प्रमदो हर्षः प्रमोदामोदस
म्मदाः । स्यादानन्दथुरानन्दः शर्मशातसुखानि च ॥ १३३ ॥ श्वः
श्रेयसं शिवं भद्रं कल्याणं मङ्गलं शुभम् । भावुकं भविकं भव्यं कुशलं क्षेम
मस्त्रियाम् ॥ १३४ ॥ शस्तं चाथ त्रिषु द्रव्ये पापं पुण्यं सुखादि च ।
मतल्लिका मचर्चिका प्रकाण्डमुद्घतल्लजौ ॥ १३५ ॥ प्रशस्तवाचका
न्यमून्ययः शुभावहो विधिः । दैवं दिष्टं भागधेयं भाग्यं स्त्री नियतिर्विधिः
॥ १३६ ॥ हेतुर्ना कारणं बीजं निदानं त्वादिकारणम् । क्षेत्रज्ञ आत्मा पु
रुषः प्रधानं प्रकृतिः स्त्रियाम् ॥ १३७ ॥ विशेषः कालिकोऽवस्था गुणाः
सत्त्वं रजस्तमः । जनुर्जननजन्मानि जनिरुत्पत्तिरुद्भवः ॥ १३८ ॥
प्राणी तु चेतनो जन्मी जन्तुजन्युशरीरिणः । जातिर्जातं च सामान्यं व्य
क्तिस्तु पृथगात्मिका ॥ १३९ ॥ चित्तं तु चेतो हृदयं स्वान्तं हृन्मानसं म
नः । बुद्धिर्मनीषा धिषणा धीः प्रज्ञा शेमुषी मतिः ॥ १४० ॥ प्रेक्षोपल
ब्धिश्चित्संवित्प्रतिपज्ज्ञप्तिचेतनाः । धीर्धारणावती मेधा संकल्पः कर्म
मानसम् ॥ १४१ ॥ चित्ताभोगो मनस्कारश्चर्चा संख्या विचारणा । अ
ध्याहारस्तर्क ऊहो विचिकित्सा तु संशयः ॥ १४२ ॥ संदेहद्वापरौ चा
थ समौ निर्णयनिश्चयौ । मिथ्यादृष्टिर्नास्तिकता व्यापादो द्रोहचिन्तन

अम१ म्॥ १४३॥ समौसिद्धान्तराद्धान्तौ भ्रान्तिर्मिथ्यामतिर्भ्रमः। संविदा
स्व १ गूःप्रतिज्ञानंनियमाश्रवसंश्रवाः॥ १४४॥ अङ्गीकाराभ्युपगमप्रतिश्र
वसमाधयः। मोक्षेधीर्ज्ञानमन्यत्रविज्ञानंशिल्पशास्त्रयोः॥ १४५॥
मुक्तिःकैवल्यनिर्वाणश्रेयोनिःश्रेयसामृतम्। मोक्षोऽपवर्गोऽथाज्ञान
मविद्याहंमतिस्त्रियाम्॥ १४६॥ रूपंशब्दोगन्धरसस्पर्शाश्चविषया
अमी। गोचराइन्द्रियार्थाश्चहृषीकंविषयीन्द्रियम्॥ १४७॥ कर्मे
न्द्रियन्तुपाय्वादिमनोनेत्रादिधीन्द्रियम्। तुवरस्तुकषायोऽस्त्रीमधु
रोलवणःकटुः॥ १४८॥ तिक्तोऽम्लश्चरसाःपुंसितद्वत्सुषडमीत्रिषु
। विमर्दोत्थेपरिमलोगन्धेजनमनोहरे॥ १४९॥ आमोदःसोऽ
तिनिर्हारीवाच्यलिङ्गत्वमागुणात्। समाकर्षीतुनिर्हारीसुरभिर्घ्राण
तर्पणः॥ १५०॥ इष्टगन्धःसुगन्धिःस्यादामोदीमुखवासनः। पू
तिगन्धस्तुदुर्गन्धोविस्रंस्यादामगन्धियत्॥ १५१॥ शुक्लशुभ्रशुचि
श्वेतविशदश्येतपाण्डराः। अवदातःसितोऽगौरोऽवलक्षोधवलोऽ
र्जुनः॥ १५२॥ हरिणःपाण्डुरःपाण्डुरीषत्पाण्डुस्तुधूसरः। कृ
ष्णेनीलासितश्यामकालश्यामलमेचकाः॥ १५३॥ पीतोगौरोहरि
द्राभःपालाशोहरितोहरित्। लोहितोरोहितोरक्तःशोणःकोकनद
च्छविः॥ १५४॥ अव्यक्तरागस्त्वरुणःश्वेतरक्तस्तुपाटलः। श्यावः
स्यात्कपिशोधूम्रधूमलौकृष्णलोहिते॥ १५५॥ कडारःकपिलःपिङ्ग

पिशङ्गौकद्रुपिङ्गलौ । चित्रंकिर्मीरकल्माषशबलैताश्चकर्बुरे ॥ १५६ ॥ अम१
गुणेशुक्लादयःपुंसिगुणिलिङ्गास्तुतद्वति । ब्राह्मीतुभारतीभाषागीर्वाग्वा ख १
णीसरस्वती ॥ १५७ ॥ व्याहारउक्तिर्लपितंभाषितंवचनंवचः । अ
पभ्रंशोऽपशब्दःस्याच्छास्त्रेशब्दस्तुवाचकः ॥ १५८ ॥ तिङ्सुबन्त
चयोवाक्यंक्रियावाकारकान्विता । श्रुतिःस्त्रीवेदआम्नायस्त्रयीधर्मस्तुत
द्विधिः ॥ १५९ ॥ स्त्रियामृक्सामयजुषीइतिवेदास्त्रयस्त्रयी । शि
क्षेत्यादिश्रुतेरङ्गमोङ्कारप्रणवौसमौ ॥ १६० ॥ इतिहासःपुरावृत्तमु
दात्ताद्यास्त्रयःस्वराः । आन्वीक्षिकीदण्डनीतीतर्कविद्यार्थशास्त्रयोः
॥ १६१ ॥ आख्यायिकोपलब्धार्थापुराणम्पञ्चलक्षणम् । प्रबन्धक
ल्पनाकथाप्रवह्लिकाप्रहेलिका ॥ १६२ ॥ स्मृतिस्तुधर्मसंहितासमाहृ
तिस्तुसंग्रहः । समस्यातुसमासार्थाकिंवदन्तीजनश्रुतिः ॥ १६३ ॥
वार्ताप्रवृत्तिर्वृत्तान्तउदन्तःस्यादथाह्वयः । आख्याह्वेचाभिधानञ्चना
मधेयञ्चनामच ॥ १६४ ॥ हूतिराकरणाह्वानंसंहूतिर्बहुभिःकृता ।
विवादोव्यवहारःस्यादुपन्यासस्तुवाङ्मुखम् ॥ १६५ ॥ उपोद्घातउ
दाहारःशपनंशपथःपुमान् । प्रश्नोऽनुयोगःपृच्छाचप्रतिवाक्योत्तरे
समे ॥ १६६ ॥ मिथ्याभियोगोभ्याख्यानमथमिथ्याभिशंसनम् । अभि
शापःप्रणादस्तुशब्दस्स्यादनुरागजः ॥ १६७ ॥ यशःकीर्तिःसम
ज्ञाचस्तवःस्तोत्रंनुतिःस्तुतिः । आम्रेडितंद्विस्त्रिरुक्तमुच्चैर्घुष्टन्तुघोषणा

अम१ ॥ १६८ ॥ काकुःस्त्रियांविकारोयःशोकभीत्यादिभिर्ध्वनेः। अवर्णाक्षे
ख १ पनिर्वादपरीवादापवादवत् ॥ १६९ ॥ उपक्रोशोजुगुप्साचकुत्सा
निन्दाचगर्हणे। पारुष्यमतिवादःस्याद्भर्त्सनंत्वपकारगीः॥ १७० ॥
यःसनिन्द उपालम्भस्तत्रस्यात्परिभाषणम्। तत्रत्वाक्षारणायः
स्यादाक्रोशोमैथुनंप्रति ॥ १७१॥ स्यादाभाषणमालापःप्रलापोऽनर्थ
कंवचः। अनुलापोमुहुर्भाषाविलापःपरिदेवनम्॥ १७२ ॥ विप्र
लापोविरोधोक्तिःसंलापोभाषणंमिथः। सुप्रलापःसुवचनमपलाप
स्तुनिह्नवः ॥ १७३ ॥ संदेशवाग्वाचिकंस्याद्वाग्भेदास्तुत्रिषूत्तरे।
। उशतीवागकल्याणीस्यात्कल्यातुशुभात्मिका ॥ १७४ ॥ अत्यर्थम
धुरंसान्त्वंसङ्गतंहृदयङ्गमम्। निष्ठुरंपरुषंग्राम्यमश्लीलंसूनृतंप्रिये
॥ १७५ ॥ सत्येऽथसंकुलक्लिष्टेपरस्परपराहते। लुप्तवर्णपदंग्रस्तं
निरस्तंत्वरितोदितम् ॥ १७६॥ अम्बूकृतंसनिष्ठेवमबद्धंस्यादनर्थ
कम्। अनक्षरमवाच्यंस्यादाहतंतुमृषार्थकम् ॥ १७७ ॥ अथम्लिष्ट
मविस्पष्टंवितथंत्वनृतंवचः। सत्यंतथ्यमृतंसम्यगमूनित्रिषुतद्वति
॥ १७८ ॥ शब्देनिनादनिनदध्वनिध्वानरवस्वनाः। स्वाननिर्घो
षनिर्ह्रादनादनिस्वाननिस्वनाः ॥ १७९ ॥ आरवारावसंरावविरावा
अथमर्मरः। स्वनितेवस्त्रपर्णानांभूषणानांतुशिञ्जितम् ॥ १८० ॥
निक्वाणोनिक्वणःक्वाणःक्वणःक्वणनमित्यपि। वीणायाःक्वणितेप्रादेः

प्रक्वाणः प्रक्वणादयः ॥ १८१ ॥ कोलाहलः कलकलस्तिरश्चांवाशि अम १
तंरुतम् । स्त्रीप्रतिश्रुत्प्रतिध्वानेगीतंगानमिमेसमे ॥ १८२ ॥ निषाद स्व १
र्षभगान्धारषड्जमध्यमधैवताः । पञ्चमश्चेत्यमीसप्ततन्त्रीकण्ठोत्थि
ताःस्वराः ॥ १८३ ॥ काकलीतुकलेसूक्ष्मेध्वनौतुमधुरास्फुटे । कलो
मन्द्रस्तुगम्भीरेतारोऽत्युच्चैस्त्रयस्त्रिषु ॥ १८४ ॥ समन्वितलयस्त्वे
कतालोवीणातुवल्लकी । विपञ्चीसातुतन्त्रीभिःसप्तभिःपरिवादिनी
॥ १८५ ॥ ततंवीणादिकंवाद्यमानद्धंमुरजादिकम् । वंश्यादिकंतुशु
षिरंकांस्यतालादिकंघनम् ॥ १८६ ॥ चतुर्विधमिदंवाद्यंवादित्रातोद्य
नामकम् । मृदङ्गामुरजाभेदास्त्वङ्क्यालिङ्ग्योर्द्ध्वकास्त्रयः ॥ १८७ ॥
स्याद्यशःपटहोढक्काभेर्यामानकदुन्दुभी । आनकःपटहोऽस्त्री
स्यात्कोणोवीणादिवादनम् ॥ १८८ ॥ वीणादण्डःप्रवालःस्यात्क
कुभस्तुप्रसेवकः । कोलम्बकस्तुकायोस्याउपनाहोनिबन्धनम् ॥ १८९ ॥
वाद्यप्रभेदाडमरुमड्डुडिण्डिमझर्झराः । मर्द्दलःपणवोऽन्येचन
र्त्तकीलासिकेसमे ॥ १९० ॥ विलम्बितंद्रुतंमध्यंतत्त्वमोघोघनंक्रमात्
। तालःकालःक्रियामानंलयःसाम्यमथास्त्रियाम् ॥ १९१ ॥ ताण्डवं
नटनंनाट्यंलास्यंनृत्यंचनर्त्तनं । तौर्य्यत्रिकंनृत्यगीतंवाद्यंनाट्यमिद
न्त्रयम् ॥ १९२ ॥ भ्रकुंसश्चभ्रुकुंसश्चभ्रूकुंसश्चेतिनर्त्तकः । स्त्रीवेषधा
रीपुरुषोनाट्योक्तौगणिकाज्जुका ॥ १९३ ॥ भगिनीपतिरावुत्तोभावोविद्वा

अम१ नयावुकः। जनकोयुवराजस्तुकुमारोभर्तृदारकः॥१९४॥ राजाभट्टार
ख १ कोदेवस्तत्सुताभर्तृदारिका। देवीकृताभिषेकायामितरासुचभट्टिनी
॥१९५॥ अब्रह्मण्यमवध्योक्तौराजश्यालस्तुराष्ट्रियः। अम्बामाताऽ
थबालास्याद्वासूरार्य्यस्तुमारिषः॥१९६॥ अत्तिकाभगिनीज्येष्ठानि
ष्ठानिर्वहणेसमे। हण्डेहञ्जेहलाऽह्वानंनीचंचेटींसखींप्रति॥१९७॥
अङ्गहारोऽङ्गविक्षेपोव्यञ्जकाभिनयौसमौ। निर्वृत्तेत्वङ्गसत्वाभ्यांद्वेत्रि
ष्वाङ्गिकसात्विके॥१९८॥ शृङ्गारवीरकरुणाद्भुतहास्यभयानकाः
। वीभत्सरौद्रेचरसाःशृङ्गारःशुचिरुज्वलः॥१९९॥ उत्साहव
र्द्धनोवीरःकारुण्यंकरुणाघृणा। कृपादयानुकम्पास्यादनुक्रोशोऽप्य
थोहसः॥२००॥ हासोहास्यञ्चवीभत्संविकृतंत्रिष्विदंद्वयम्। विस्मयो
ऽद्भुतमाश्चर्य्यंचित्रमप्यथभैरवम्॥२०१॥ दारुणंभीषणंभीष्मंघोरं
भीमंभयानकम्। भयङ्करंप्रतिभयंरौद्रन्तूग्रममीत्रिषु॥२०२॥ चतुर्द्द
शदरस्त्रासोभीतिर्भीःसाध्वसंभयम्। विकारोमानसोभावोऽनुभावोभा
वबोधकः॥२०३॥ गर्वोऽभिमानोऽहंकारोमानश्चित्तसमुन्नतिः। अनाद
रःपरिभवःपरिभावस्तिरस्क्रिया॥२०४॥ रीढावमाननावज्ञाअवहे
लमसूर्क्षणम्। मन्दाक्षंह्रीस्त्रपाव्रीडालज्जासापत्रपान्यतः॥२०५॥
क्षान्तिस्तितिक्षाऽभिध्यातुपरस्वविषयेस्पृहा। अक्षान्तिरीर्ष्याऽसूया
तुदोषारोपोगुणेष्वपि॥२०६॥ वैरंविरोधोविद्वेषोमन्युशोकौतुशुक्स्त्रि

याम्। पश्चात्तापोऽनुतापश्च विप्रतीसार इत्यपि ॥ २०७ ॥ कोपक्रो अम १
धामर्षरोषप्रतिघा रुट्क्रुधौ स्त्रियाम्। शुचौ तु चरिते शीलमुन्मादश्चित्तवि ख १
भ्रमः ॥ २०८ ॥ प्रेमा ना प्रियता हार्दं प्रेम स्नेहोऽथ दोहदम्। इच्छा
काङ्क्षा स्पृहेहा तृड्वाञ्छा लिप्सा मनोरथः ॥ २०९ ॥ कामोऽभिलाषस्तर्ष
श्च समहानल्लालसा द्वयोः। उपाधिर्ना धर्मचिन्ता पुंस्याधिर्मानसी व्यथा
॥ २१० ॥ स्याच्चिन्तास्मृतिराध्यानमुत्कण्ठोत्कलिके समे। उत्साहोऽध्य
वसायः स्यात्स वीर्यमतिशक्तिभाक् ॥ २११ ॥ कपटोऽस्त्री व्याजदम्भो
पधयश्छद्मकैतवे। कुसृतिर्निकृतिः शाठ्यं प्रमादोऽनवधानता ॥ २१२ ॥
कौतूहलं कौतुकं च कुतुकं च कुतूहलम्। स्त्रीणां विलासविब्बोकविभ्रमाल
लितं तथा ॥ २१३ ॥ हेला लीलेत्यमी हावाः क्रियाः शृङ्गारभावजाः। द्रव
केलिपरीहासाः क्रीडा लीला च नर्म च ॥ २१४ ॥ व्याजोऽपदेशो लक्ष्यं च क्री
डा खेला च कूर्दनम्। घर्मो निदाघः स्वेदः स्यात्प्रलयो नष्टचेष्टता ॥ २१५ ॥
अवहित्थाकारगुप्तिः समौ संवेगसंभ्रमौ। स्यादाकुरितकं हासः सोत्प्रासः
स मनाक्स्मितम् ॥ २१६ ॥ मध्यमः स्याद्विहसितं रोमाञ्चो लोमहर्षणम्।
क्रन्दितं रुदितं क्रुष्टं जृम्भस्तु त्रिषु जृम्भणम् ॥ २१७ ॥ विप्रलम्भो विसंवा
दो रिङ्गणस्खलने समे। स्यान्निद्रा शयनं स्वापः स्वप्नः संवेश इत्यपि
॥ २१८ ॥ तन्द्री प्रमीला भ्रुकुटिर्भ्रुकुटी भृकुटिः स्त्रियः। अदृष्टिः स्या
द्दसौम्येऽक्ष्णि संसिद्धिप्रकृती त्विमे ॥ २१९ ॥ स्वरूपं च स्वभावश्च

अमर१ निसर्गस्त्वाथवेपथुः। कम्पोऽथक्षण उद्धर्षो मह उद्धव उत्सवः॥ २२९॥

स्व १ इतिस्वर्गवर्गः

पा २ अधोभुवनपातालबलिसद्मरसातलम्। नागलोकोऽथकुहरंसुषिरं
विवरंबिलम्॥१॥ छिद्रंनिर्व्यथनंरोकंरन्ध्रंश्वभ्रंवपासुषिः। गर्तावटौ
भुविश्वभ्रेसरन्ध्रेसुषिरंत्रिषु॥२॥ अन्धकारोऽस्त्रियांध्वान्तंतमिस्रंतिमिरंत
मः। ध्वान्तेगाढेऽन्धतमसंक्षीणेऽवतमसंतमः॥ ३॥ विष्वक्सन्त
मसंनागाःकाद्रवेयास्तदीश्वरः। शेषोऽनन्तोवासुकिस्तुसर्पराजोऽथ
गोनसे ॥४॥ तिलित्सःस्यादजगरेशयुर्वाहसइत्युभौ। अलगर्दो
जलव्यालःसमौराजिलडुण्डुभौ॥५॥ मालुधानोमातुलाहिर्निर्मुक्तोमु
क्तकञ्चुकः। सर्पःपृदाकुर्भुजगोभुजंगोऽहिर्भुजङ्गमः॥ ६॥ आशी
विषोविषधरश्चक्रीव्यालःसरीसृपः। कुण्डलीगूढपाच्चक्षुःश्रवाःकाको
दरःफणी॥७॥ दर्वीकरोदीर्घपृष्ठोदन्दशूकोबिलेशयः। उरगः
पन्नगोभोगीजिह्मगःपवनाशनः॥ ८॥ त्रिष्वाहेयंविषास्थ्यादिस्फ
टायांतुफणाद्वयोः। समौकञ्चुकनिर्मोकौक्ष्वेडस्तुगरलंविषम्॥९॥ पुं
सिक्लीबेचकाकोलकालकूटहलाहलाः। सौराष्ट्रिकःशौक्लिकेयोब्रह्म
पुत्रःप्रदीपनः॥१०॥ दारदोवत्सनाभश्चविषभेदाअमीनव। वि
षवैद्योजाङ्गुलिकोव्यालग्राह्याहितुण्डिकः॥ ११॥ स्यान्नारकस्तुन

स्कोनिरयो दुर्गतिः स्त्रियाम् । तद्भेदास्तपनावीचिमहारौरवरौरवाः ॥ १२॥
संघातः कालसूत्रञ्चेत्याद्याः सत्वास्तु नारकाः । प्रेतावैतरणी सिन्धुः स्या अमर १
दलक्ष्मीस्तु निर्ऋतिः ॥ १३॥ विष्टिराजूः कारणातु यातना तीव्रवेदना । पा २
पीडाबाधाव्यथादुःखममानस्यंप्रसूतिजम् ॥ १४॥ स्यात्कष्टंकृच्छ्रमा
भीलंत्रिष्वेषांभेद्यगामियत् । समुद्रोब्धिरकूपारःपारावारःसरित्पतिः ॥ १५॥
उदन्वानुदधिःसिन्धुःसरस्वान्सागरोऽर्णवः । रत्नाकरोजलनिधिर्यो
दःपतिरपांपतिः ॥ १६॥ तस्यप्रभेदाःक्षीरोदोलवणोदस्तथापरे ।
आपःस्त्रीभूम्निवार्वारिसलिलंकमलंजलम् ॥ १७ ॥ पयःकीलालम
मृतंजीवनंभुवनंवनम् । कबन्धमुदकंपाथःपुष्करंसर्वतोमुखम् ॥ १८ ॥
अम्भोऽर्णस्तोयपानीयनीरक्षीराम्बुशम्बरम् । मेघपुष्पंघनरसस्त्रिषु
द्वेआप्यमम्मयम् ॥ १९ ॥ भङ्गस्तरङ्गऊर्मिर्वास्त्रियांवीचिरथोर्मिषु ।
महत्सूल्लोलकल्लोलौस्यादावर्त्तोऽम्भसांभ्रमः ॥ २० ॥ पृषन्तिबिन्दु
पृषताःपुमांसोविप्रुषःस्त्रियः । चक्राणिपुटभेदाःस्युर्भ्रमाश्चजलनिर्गमाः
॥ २१ ॥ कूलंरोधश्चतीरञ्चप्रतीरञ्चतटंत्रिषु । पारावारेपरार्वाचीतीरे
पात्रंतदन्तरम् ॥ २२ ॥ द्वीपोऽस्त्रियामन्तरीपंयदन्तर्वारिणस्तटम् ।
तोयोत्थितंतत्पुलिनंसैकतंसिकतामयम् ॥ २३ ॥ निषद्वरस्तुजम्बालः
पङ्कोऽस्त्रीशादकर्दमौ । जलोच्छ्वासाःपरीवाहाःकूपकास्तुविदारकाः
॥ २४ ॥ नाव्यंत्रिलिङ्गंनौतार्य्येस्त्रियांनौस्तरणिस्तरिः । उडुपंतुप्लवः

अम१ कोलःस्रोतोऽम्बुसरणंस्वतः ॥ २५॥ आतरस्तरपण्यंस्याद्द्रोणीका
पा २ ष्ठाम्बुवाहिनी । सांयात्रिकःपोतवणिक्कर्णधारस्तुनाविकः ॥ २६ ॥ नि
यामकाःपोतवाहाःकूपकोगुणवृक्षकः । नौकादण्डःक्षेपणिःस्यादरित्रं
केनिपातकः ॥ २७ ॥ अभ्रिःस्त्रीकाष्ठकुद्दालःसेकपात्रंतुसेचनम् । चि
ग्वगाधान्प्रसन्नोऽच्छःकलुषोऽनच्छआविलः ॥ २८ ॥ निम्नंगभीरंग
म्भीरमुत्तानंतद्विपर्य्यये । अगाधमतलस्पर्शंकैवर्त्तेदाशधीवरौ ॥ २९ ॥
आनायःपुंसिजालंस्यात्शणसूत्रंपवित्रकम् । मत्स्याधानीकुवेणीस्या
द्वडिशंमत्स्यवेधनम् ॥ ३० ॥ पृथुरोमाझषोमत्स्योमीनोवैसारिणोऽ
ण्डजः । विसारःशकलीचाथगडकःशकुलार्भकः ॥ ३१ ॥ सहस्रदं
ष्ट्रःपाठीनउलूपीशिशुकःसमौ । नलमीनश्चिलिचिमःप्रोष्ठीतुशफ
रीद्वयोः ॥ ३२ ॥ क्षुद्राण्डमत्स्यसंघातःपोताधानमथोझषाः । रोहितो
मद्गुरःशालीराजीवःशकुलस्तिमिः ॥ ३३ ॥ तिमिङ्गिलादयश्चाथया
दांसिजलजन्तवः । तद्भेदाःशिशुमारोद्रशंकवोमकरादयः ॥ ३४ ॥
स्यात्कुलीरःकर्कटकःकूर्मेकमठकच्छपौ । ग्राहोऽवहारोनक्रस्तुकु
म्भीरोऽथमहीलता ॥ ३५ ॥ गण्डूपदःकिञ्चुलुकोनिहाकागोधिकासमे ।
रक्तपातुजलौकायांस्त्रियांभूम्निजलौकसः ॥ ३६ ॥ मुक्तास्फोटःस्त्रियां
शुक्तिःशंखःस्यात्कम्बुरस्त्रियाम् । क्षुद्राःशंखाःशंखनखाःशम्बूकाजल
शुक्तयः ॥ ३७ ॥ भेकेमण्डूकवर्षाभूशालूरप्लवदर्दुराः । शिलीगण्डू

पद्मीभेकीवर्षाभ्वीकमठीडुलिः ॥ ३८ ॥ मद्गुरस्यप्रियाशृङ्गीदुर्नामादी अम१
र्घकोषिका। जलाशयाजलाधारास्तत्रागाधजलोह्रदः ॥ ३९ ॥ आहा पा २
वस्तुनिपानंस्यादुपकूपजलाशये । पुंस्येवाऽन्धुप्रहीकूपउदपानंतु
पुंसिवा ॥ ४० ॥ नेमिस्त्रिकाऽस्यवीनाहोमुखबन्धनमस्ययत्। पुष्क
रिण्यांतुखातंस्यादखातंदेवखातकम् ॥ ४१ ॥ पद्माकरस्तडागोऽस्त्रीका
सारःसरसीसरः । वेशन्तःपल्वलंचाल्पसरोवापीतुदीर्घिका ॥ ४२ ॥ खे
यंतुपरिखाऽधारस्त्वम्भसांयत्रधारणम्। स्यादालवालमावालमावापो
ऽथनदीसरित् ॥ ४३ ॥ तरङ्गिणीशैवलिनीतटिनीह्रादिनीधुनी । स्रो
तस्विनीद्वीपवतीस्रवन्तीनिम्नगाऽपगा ॥ ४४ ॥ गङ्गाविष्णुपदीजह्नु
तनयासुरनिम्नगा। भागीरथीत्रिपथगात्रिस्रोताभीष्मसूरपि ॥ ४५ ॥
कालिन्दीसूर्य्यतनयायमुनाशमनस्वसा । रेवातुनर्मदासोमोद्भवामे
कलकन्यका ॥ ४६ ॥ करतोयासदानीरावाहुदासैतवाहिनी । शितद्रु
स्तुशतद्रुःस्याद्विपाशातुविपाट्स्त्रियाम् ॥ ४७ ॥ शोणोहिरण्यवाहुः
स्यात्कुल्याल्पाकृत्रिमासरित् । शरावतीवेत्रवतीचन्द्रभागासरस्वती
॥ ४८ ॥ कावेरीसरितोऽन्याश्चसंभेदःसिन्धुसंगमः । द्वयोःप्रणालीपयस
ःपदव्यांत्रिषुतूत्तरौ ॥ ४९ ॥ देविकायांसरय्वांचभवेदाविकसारवौ।
सौगन्धिकंतुकल्हारंहल्लकंरक्तसंध्यकम् ॥ ५० ॥ स्यादुत्पलंकुवलयमथ
नीलाम्बुजन्मच। इन्दीवरंचनीलेऽस्मिन्सितेकुमुदकैरवे ॥ ५१ ॥ शालू

अम १ कमेषांकन्दःस्यात्वारिपर्णीतुकुम्भिका । जलनीलीतुशैवालंशैवलेऽथकु
पा २ मुद्वती ॥ ५२ ॥ कुमुदिन्यांनलिन्यांतुविसिनीपद्मिनीमुखाः । वापुंसिपद्मं
नलिनमरविन्दंमहोत्पलम् ॥ ५३ ॥ सहस्रपत्रंकमलंशतपत्रंकुशेशयम् ।
पङ्केरुहंतामरसंसारसंसरसीरुहम् ॥ ५४ ॥ विसप्रसूनराजीवपु
ष्कराम्भोरुहाणिच । पुण्डरीकंसिताम्भोजमथरक्तसरोरुहे ॥ ५५ ॥
रक्तोत्पलंकोकनदंनालानालमथास्त्रियाम् । मृणालंविसमब्जादिकदम्बे
षण्डमस्त्रियाम् ॥ ५६ ॥ करहाटःसिफाकन्दःकिंजल्कःकेसरोऽस्त्रियाम् ।
संवर्तिकानवदलंवीजकोषोवराटकः ॥ ५७ ॥ उक्तंस्वर्व्योमदिक्काल
धीशब्दादिसनाट्यकम् । पातालभोगिनरकवारिचैषानुसंगतम् ॥ ५८ ॥
इत्यमरसिंहकृतौनामलिङ्गानुशासने । स्वर्गादिकाण्डःप्रथमःसाङ्ग एव
समर्थितः ॥ ५९ ॥

इतिपातालवर्गः

******************************

अम २ वर्गाःपृथ्वीपुरक्ष्माभृद्वनौषधिमृगादिभिः । नृब्रह्मक्षत्रविट्शूद्रैःसाङ्गो
भू १ पाङ्गैरिहोदिताः ॥ १ ॥ भूर्भूमिरचलानन्तारसाविश्वंभरास्थिरा । धराधरि
त्रीधरणिःक्षोणीज्याकाश्यपीक्षितिः ॥ २ ॥ सर्वंसहावसुमतीवसुधो
र्वीवसुन्धरा । गोत्राकुःपृथिवीपृथ्वीक्ष्माऽवनिर्मेदिनीमही ॥ ३ ॥ मृन्मृ
त्तिकाप्रशस्तातुमृत्सामृत्स्नाचमृत्तिका । उर्वरासर्वशस्याढ्यास्यादूषः

क्षारमृत्तिका ॥ ४ ॥ ऊषवानूषरो द्वावप्यन्यलिङ्गौ स्थलं स्थली । अमर २
समानौ मरुधन्वानौ द्वे खिलाप्रहते समे ॥ ५ ॥ त्रिष्वथो जगती लोको भू १
विष्टपं भुवनं जगत् । लोकोऽयं भारतं वर्षं शरावत्यास्तु योऽवधेः ॥ ६ ॥
देशः प्राग्दक्षिणः प्राच्य उदीच्यः पश्चिमोत्तरः । प्रत्यन्तो म्लेच्छदेशः
स्यान्मध्यदेशस्तु मध्यमः ॥ ७ ॥ आर्य्यावर्त्तः पुण्यभूमिर्मध्यं विन्ध्य
हिमागयोः । नीवृज्जनपदो देशविषयौ तूपवर्त्तनम् ॥ ८ ॥ त्रिष्वागो
ष्ठान्नडप्राये नड्वान्नड्वल इत्यपि । कुमुद्वान् कुमुदप्राये वेतस्वान्बहुवे
तसे ॥ ९ ॥ शाद्वलः शादहरिते सजम्बाले तु पंकिलः । जलप्रायमनूपं
स्यात्पुंसि कच्छस्तथाविधः ॥ १० ॥ स्त्री शर्करा शर्करिलः शार्करः शर्करा
वति । देश एवादिमावेवमुन्नेयाः सिकतावति ॥ ११ ॥ देशो नद्यम्बुवृष्ट्य
म्बुसम्पन्नव्रीहिपालितः । स्यान्नदीमातृको देवमातृकश्च यथाक्रमम् ॥ १२ ॥
सुराज्ञि देशे राजन्वान्स्यात्ततोऽन्यत्र राजवान् । गोष्ठं गोस्थानकं तत्तु गौ
ष्ठीनं भूतपूर्वकम् ॥ १३ ॥ पर्य्यन्तभूः परिसरः सेतुरालौ स्त्रियां पुमान् । वा
मलूरश्च नाकुश्च वल्मीकं पुन्नपुंसकम् ॥ १४ ॥ अयनं वर्त्म मार्गाध्वपन्था
नः पदवी सृतिः । सरणिः पद्धतिः पद्या वर्त्मन्येकपदीति च ॥ १५ ॥ अति
पन्थाः सुपन्थाश्च सत्पथश्चार्चितेऽध्वनि । व्यध्वो दुरध्वो विपथः कदध्वा का
पथः समाः ॥ १६ ॥ अपन्थास्त्वपथं तुल्ये शृङ्गाटकचतुःपथे । प्रान्तरं
दूरशून्योऽध्वा कान्तारं वर्त्म दुर्गमम् ॥ १७ ॥ गव्यूतिः स्त्री क्रोशयुगं नल्वः

अम २ किष्कुचतुःशतम्। घंटापथःसंसरणंतत्पुरस्योपनिष्करम्॥ १८॥
भू १ इतिभूमिवर्गः

पु २ पूःस्त्रीपुरीनगर्यौवापत्तनंपुटभेदनम्। स्थानीयंनिगमोऽन्यत्तुयन्मू
लनगरात्पुरम्॥ १॥ तच्छाखानगरंवेशोवेश्याजनसमाश्रयः। आ
पणस्तुनिषद्यायांविपणिःपण्यवीथिका॥ २॥ रथ्याप्रतोलीविशिखास्या
च्चयोवप्रमस्त्रियाम्। प्राकारोवरणःसालःप्राचीरंप्रान्ततोवृतिः॥ ३॥ भि
त्तिःस्त्रीकुड्यमेडूकंयदन्तर्न्यस्तकीकसम्। गृहंगेहोदवसितंवेश्मसद्म
निकेतनम्॥ ४॥ निशान्तवस्त्यसदनंभवनागारमन्दिरम्। गृहाःपुंसि
चभूम्न्येवनिकाय्यनिलयालयाः॥ ५॥ वासःकूटोद्वयोःशालासभासंजव
नंत्विदम्। चतुःशालंमुनीनांतुपर्णशालोटजोऽस्त्रियाम्॥ ६॥ चैत्यमा
यतनंतुल्येवाजिशालातुमन्दुरा। आवेशनंशिल्पिशालाप्रपापानीयशालि
का॥ ७॥ मठश्छात्रादिनिलयोगञ्जातुमदिरागृहम्। गर्भागारंवासगृ
हमरिष्टंसूतिकागृहम्॥ ८॥ वातायनंगवाक्षःस्यान्मण्डपोऽस्त्रीजना
श्रयः। हर्म्यादिधनिनांवासःप्रासादोदेवभूभुजाम्॥ ९॥ सौधोऽस्त्रीरा
जसदनमुपकार्योपकारिका। स्वस्तिकःसर्वतोभद्रोनन्द्यावर्तादयो
ऽपिच॥ १०॥ विच्छन्दकप्रभेदाहिभवनानीश्वरसद्मनाम्। स्त्र्यागारं
भूभुजामन्तःपुरंस्यादवरोधनम्॥ ११॥ शुद्धान्तश्चावरोधश्चस्यादट्टः

क्षौमं मस्त्रियाम्। प्रघाणप्रघणालिन्दावहिर्द्वारप्रकोष्ठके ॥ १२ ॥ गृ अमर
हाऽवग्रहणी देहल्यङ्गनं चत्वराजिरे। अधस्ताद्दारुणि शिलानासादा पु २
रूपरिस्थितम् ॥ १३ ॥ प्रच्छन्नमन्तर्द्वारं स्यात्पक्षद्वारन्तु पक्षकः।
वलीकनीध्रे पटलप्रान्तेऽथ पटलं छदिः ॥ १४ ॥ गोपानसी तु वडभी
छादने वक्रदारुणि। कपोतपालिकायान्तु विटङ्कं पुन्नपुंसकम् ॥ १५ ॥
स्त्री द्वार्द्वारं प्रतीहारः स्याद्वितर्दिस्तु वेदिका। तोरणोऽस्त्री बहिर्द्वारं पुरद्वा
रन्तु गोपुरम् ॥ १६ ॥ कूटं पूर्द्वारि यद्धस्तिनखस्तस्मिन्नथ त्रिषु। कपाट
मररं तुल्ये तद्विष्कम्भेऽर्गलं न ना ॥ १७ ॥ आरोहणं स्यात्सोपानं निःश्रेणि
स्त्वधिरोहिणी। संमार्जनी शोधनी स्यात्संकरोऽवकरस्तथा ॥ १८ ॥
क्षिप्ते मुखं निःसरणं संनिवेशो निकर्षणम्। समौ संवसथग्रामौ वेश्मभूर्वास्तु
रस्त्रियाम् ॥ १९ ॥ ग्रामान्त उपशल्यं स्यात्सीमसीमे स्त्रियामुभे। घोष
आभीरपल्ली स्यात्पक्कणः शवरालयः ॥ २० ॥

इति पुरवर्गः

❁❁❁❁❁❁❁❁❁❁❁❁❁❁❁❁❁❁❁❁❁❁❁❁

महीध्रे शिखरिक्ष्माभृदहार्य्यधरपर्वताः। अद्रिगोत्रगिरिग्रावाचलशै शै ३
लशिलोच्चयाः ॥ १ ॥ लोकालोकश्चक्रवालस्त्रिकूटस्त्रिककुत्समौ। अ
स्तस्तु चरमक्ष्माभृदुदयः पूर्व्वपर्व्वतः ॥ २ ॥ हिमवान्निषधो विंध्यो माल्य
वान्पारियात्रकः। गन्धमादनमन्ये च हेमकूटादयो नगाः ॥ ३ ॥ पा

अम २ पाषाणप्रस्तरग्रावोपलाश्मानःशिलादृषत्। कूटोऽस्त्रीशिखरंशृङ्गंप्र
शै ३ पातस्तुतटोभृगुः ॥४॥ कटकोऽस्त्रीनितम्बोऽद्रेःस्नुःप्रस्थःसानुरस्त्रियो
। उत्सःप्रस्रवणंवारिप्रवाहोनिर्झरोझरः ॥५॥ दरीतुकन्दरोवास्त्री
देवखातबिलेगुहा। गह्वरंगण्डशैलास्तुच्युताःस्थूलोपलागिरेः ॥ ६ ॥
खनिःस्त्रियामाकरःस्यात्पादाःप्रत्यन्तपर्वताः। उपत्यकाद्रेरासन्नाभूमि
रूर्ध्वमधित्यका ॥ ७ ॥ धातुर्मनःशिलाद्यद्रेर्गैरिकंतुविशेषतः। नि
कुञ्जकुञ्जौवाक्लीबेलतादिपिहितोदरे ॥ ८ ॥

इतिशैलवर्गः

****************************

वनौ ४ अटव्यरण्यंविपिनंगहनंकाननंवनम्। महारण्यमरण्यानीगृहारा
मास्तुनिष्कुटाः ॥१॥ आरामःस्यादुपवनंकृत्रिमंवनमेवतत्। अमा
त्यगणिकागेहोपवनेवृक्षवाटिका ॥२॥ पुमानाक्रीडउद्यानंराज्ञःसा
धारणंवनम्। स्यादेतदेवप्रमदवनमन्तःपुरोचितम् ॥ ३ ॥ वीथ्यालि
रावलिःपंक्तिःश्रेणीलेखास्तुराजयः। वन्यावनसमूहेस्यादङ्कुरोऽभिन
वोद्भिदि ॥४॥ वृक्षोमहीरुहःशाखीविटपीपादपस्तरुः। अनोक
हःकुटःशालःपलाशीद्रुद्रुमागमाः ॥५॥ वानस्पत्यःफलैःपुष्पात्तैरपुष्पा
द्वनस्पतिः। ओषध्यःफलपाकान्ताःस्यादवंध्यःफलेग्रहिः ॥६॥ वं
ध्योऽफलोऽवकेशीचफलवान्फलिनःफली। प्रफुल्लोत्फुल्लसंफुल्ल

अम २ प्पलः कुञ्जराशनः ॥ २०॥ अश्वत्थोऽथ कपित्थे स्युर्दधित्थग्राहिमन्म
वनौ ४ थाः। तस्मिन् दधिफलः पुष्पफलदन्तशठावपि ॥ २१॥ उदुम्बरो
जन्तुफलो यज्ञाङ्गो हेमदुग्धकः। कोविदारे चमरिकः कुद्दालो युगपत्र
कः ॥ २२॥ सप्तपर्णो विशालत्वक् शारदो विषमच्छदः। आरग्वधे रा
जवृक्षसम्पाकचतुरंगुलाः ॥ २३॥ आरेवतव्याधिघातकृतमालसुव
र्णकाः। स्युर्जम्बीरे दन्तशठजम्भजम्भीरजम्भलाः ॥ २४॥ वरुणो वर
णः सेतुस्तिक्तशाकः कुमारकः। पुन्नागे पुरुषस्तुङ्गः केसरो देववल्लभः
॥ २५॥ पारिभद्रे निम्बतरुर्मन्दारः पारिजातकः। तिनिशे स्यन्दनो
नेमी रथद्रुरतिमुक्तकः ॥ २६॥ वञ्जुलश्चित्रकृच्चाथ द्वौ पीतनकपीत
नौ। आम्रातके मधूके तु गुडपुष्पमधुद्रुमौ ॥ २७॥ वानप्रस्थमधुष्ठी
लौ जलजेऽत्र मधूलकः। पीलौ गुडफलः स्रंसी तस्मिंस्तु गिरिसंभवे
॥ २८ ॥ अक्षोटकन्दरालौ द्वौ अंकोठे तु निकोठकः। पलाशे किंशुकः प
र्णो वातपोथोऽथ वेतसे ॥ २९॥ रथाभ्रपुष्पविदुलशीतवानीरवञ्जुलाः
। द्वौ परिव्याधविदुलौ नादेयी चाम्बुवेतसे ॥ ३०॥ शोभाञ्जने शिग्रुतीक्ष्ण
गन्धकाक्षीवमोचकाः। रक्तोऽसौ मधुशिग्रुः स्यादरिष्टः फेनिलः समौ
॥ ३१॥ बिल्वः शाण्डिल्यशैलूषौ मालूरश्रीफलावपि। प्लक्षो जटी पर्क
टी स्यान्न्यग्रोधो बहुपाद्वटः ॥ ३२॥ गालवः शाबरो लोध्रस्तिरीटस्ति
ल्वमार्जनौ। आम्रश्चूतो रसालोऽसौ सहकारोऽतिसौरभः ॥ ३३॥ कु

श्रीलूखलके स्त्रीवेष्टः शिवो गुग्गुलुः पुरः । शेलुः श्लेष्मातकः शीत उ अमर २
द्दालो बहुवारकः ॥ ३४ ॥ राजादनं पियालस्स्यात्सन्नकद्रुर्धनुष्पटः वनौ ४
। गंभारी सर्वतोभद्रा काश्मरी मधुपर्णिका ॥ ३५ ॥ श्रीपर्णी भद्रपर्णी
च काश्मर्यश्चाप्यथ द्वयोः । कर्कन्धूर्वदरी कोलिः कोलं कुवलफेनिले
॥ ३६ ॥ सौवीरं वदरं घोण्टाप्यथ स्यात्स्वादुकण्टकः । विकंकतः स्रुवावृ
क्षो ग्रन्थिलो व्याघ्रपादपि ॥ ३७ ॥ ऐरावतो नागरंगो नादेयी भूमिजम्बु
का । तिन्दुकः स्फूर्जकः कालस्कन्धश्च शितिसारके ॥ ३८ ॥ काकेन्दुः कु
लकः काकतिंदुकः काकपीलुके । गोलीढो झाटलो घण्टापाटलिर्मोक्षमुष्क
कौ ॥ ३९ ॥ तिलकः क्षुरकः श्रीमान् समौ पिचुलझावुकौ । श्रीपर्णिका
कुमुदिका कुम्भी कैटर्यकट्फलौ ॥ ४० ॥ क्रमुकः पट्टिकाख्यः स्यात्पट्टी
लाक्षाप्रसादनः । तूदस्तु पूगः क्रमुको ब्रह्मण्यो ब्रह्मदारु च ॥ ४१ ॥ तूल
श्च नीपप्रियककदम्बास्तु हलिप्रिये । वीरवृक्षोऽरुष्करोऽग्निमुखी भल्लात
की त्रिषु ॥ ४२ ॥ गर्द्दभाण्डे कन्दरालकपीतनसुपार्श्वकाः । प्लक्षश्च तिंति
डी चिञ्चाम्लिकाऽथो पीतसालके ॥ ४३ ॥ सर्ज्जकासनबंधूकपुष्पप्रियक
जीवकाः । साले तु सर्जकार्श्याश्वकर्णकः सस्यसंवरः ॥ ४४ ॥ नदीस
र्ज्जो वीरतरुरिन्द्रद्रुः ककुभोऽर्ज्जुनः । राजादनफलाध्यक्षः क्षीरिका
यामथ द्वयोः ॥ ४५ ॥ इंगुदी तापसतरुर्भूर्ज्जे चर्म्मिमृदुत्वचौ । पि
च्छिला पूरणी मोचा स्थिरायुः शाल्मलिर्द्वयोः ॥ ४६ ॥ पिच्छा तु शाल्मली

लेलिकुचोडहुः ॥ ६० ॥ पनसः कंटकिफलो निचुलोऽम्बुजइज्जलः । अम२
काकोदुम्बरिका फल्गुर्मलपूर्ज्जघनेफला ॥ ६१ ॥ अरिष्टः सर्व्वतोभद्र वनौ४
हिङ्गुनिर्यासमालकाः । पिचुमर्द्दश्चनिम्बोऽथपिच्छिलागुरुशिंशपा
॥ ६२ ॥ कपिलाभस्मगर्भासाशिरीषस्तुकपीतनः । भण्डिलोऽप्यथचा
म्पेयश्चम्पको हेमपुष्पकः ॥ ६३ ॥ एतस्यकलिकागन्धफलीस्यादथकेस
रे । बकुलोवञ्जुलोऽशोकेसमौकरकदाडिमौ ॥ ६४ ॥ चाम्पेयः केसरोना
गकेसरःकाञ्चनाह्वयः । जयाजयन्तीतर्क्कारीनादेयीवैजयन्तिका ॥ ६५ ॥
श्रीपर्णमग्निमंथःस्यात्कणिकागणिकारिका । जयाथकुटजः शक्रोवत्स
कोगिरिमल्लिका ॥ ६६ ॥ एतस्यैवकलिङ्गेन्द्रयवभद्रयवंफले । कृ
ष्णपाकफलाविग्नसुषेणाः करमर्द्दके ॥ ६७ ॥ कालस्कन्धस्तमालः
स्यात्तापिच्छोऽप्यथसिन्धुकः । सिन्दुवारेन्द्रसुरसौनिर्गुण्डीन्द्राणिकेत्य
पि ॥ ६८ ॥ वेणीखरागरीदेवताडोजीमूतइत्यपि । श्रीहस्तिनीतुभूरु
ण्डीतृणशून्यंतुमल्लिका ॥ ६९ ॥ भूपदीशीतभीरुश्चसैवास्फोतावनो
द्भवा । शेफालिकातुसुवहानिर्गुण्डीनीलिकाचसा ॥ ७० ॥ सितासौश्वे
तसुरसाभूतवेश्यऽथमागधी । गणिकायूथिकाम्बष्ठासापीताहेमपुष्पि
का ॥ ७१ ॥ अतिमुक्तःपुंड्रकःस्याद्वासन्तीमाधवीलता । सुमनामाल
तीजातिःसप्तलानवमालिका ॥ ७२ ॥ माध्यंकुन्दंरक्तकस्तुबन्धूकोब
न्धुजीवकः । सहाकुमारीतरणिरम्लानस्तुमहासहा ॥ ७३ ॥ तत्रशो

अमर २ शोकुरबकस्तत्रपीतेकुरण्टकः। नीलाझिंटीद्वयोर्बाणादासीचार्त्तगल
बनौ ४ श्चसा॥ ७४ ॥ सैरीयकस्तुझिंटीस्यात्तस्मिन्कुरबकोऽरुणी। पीताकुरण्ट
कोझिंटीतस्मिन्सहचरीद्वयोः॥ ७५॥ ओड्रपुष्पंजवावज्रपुष्पं ॥ ७६ ॥
पुष्पंतिलस्ययत्। प्रतिहासशतप्रासचण्डातहयमारकाः
करवीरेकरीरेतुक्रकरग्रन्थिलावुभौ। उन्मत्तःकितवोधूर्त्तोधुस्तूरःकन
काह्वयः ॥ ७७॥ मातुलोमदनश्चास्यफलेमातुलपुत्रकः। फल
पूरोबीजपूरोरुचकोमातुलुङ्गके ॥ ७८॥ समीरणोमरुबकःप्रस्थ
पुष्पःफणिज्झकः। जम्बीरोऽप्यथपर्णासेकठिञ्जरकुठेरकौ॥ ७९॥
सितेऽर्जकोऽत्रपाठीतुचित्रकोवह्निसंज्ञकः। अर्काह्ववसुकास्फोटगण
रूपविकीरणाः॥ ८०॥ मन्दारश्चार्कपर्णोत्रशुक्लेऽलर्कप्रतापसौ
। शिवमल्लीपाशुपतएकाष्ठीलोबकोवसुः॥ ८१॥ वन्दावृक्षादनी
वृक्षरुहाजीवन्तिकेत्यपि। वत्सादनीछिन्नरुहागुडूचीतन्त्रिकामृता
॥ ८२ ॥ जीवन्तिकासोमवल्लीविशल्यामधुपर्ण्यपि। मूर्वादेवीमधु
रसामोरटातेजनीस्रुवा॥ ८३॥ मधूलिकाधनुःश्रेणीगोकर्णीपीलुपर्ण्य
पि। पाठाम्बष्ठाविद्धकर्णीस्थापनीश्रेयसीरसा॥ ८४॥ एकाष्ठीलापा
पचेलीप्राचीनावनतिक्तिका। कटुःकटम्बराशोकरोहिणीकटुरोहिणी
॥ ८५ ॥ मत्स्यपित्ताकृष्णभेदीचक्राङ्गीशकुलादनी। आत्मगुप्ताजडा
ऽव्यण्डाकण्डुराप्रावृषायणी॥ ८६॥ ऋष्यप्रोक्ताशूकशिम्बिःकपिक

च्छुश्चमर्क्कटी । चित्रोपचित्रा न्यग्रोधी द्रवन्ती शम्बरी वृषा ॥ ८७ ॥ अम२
प्रत्यक्श्रेणी सुतश्रेणी रण्डा मूषिकपर्ण्यपि । अपामार्गः शैखरिको धामा वनौ ४
र्गवमयूरकौ ॥ ८८ ॥ प्रत्यक्पर्णी कीशपर्णी किणिही खरमञ्जरी ।
फञ्जिका ब्राह्मणी पद्मा भार्गी ब्राह्मणयष्टिका ॥ ८९ ॥ अङ्गारवल्ली
बालेयशाकवर्बरबर्द्धकाः । मंजिष्ठा विकसा जिङ्गी समङ्गा कालमेषिका
॥ ९० ॥ मण्डूकपर्णी भण्डीरी भण्डी योजनवल्ल्यपि । यासो यवासो
दुस्पर्शो धन्वयासः कुनाशकः ॥ ९१ ॥ रोदनी कच्छुराऽनन्ता समुद्रान्ता
दुरालभा । पृश्निपर्णी पृथक्पर्णी चित्रपर्ण्यङ्घ्रिवल्लिका ॥ ९२ ॥ क्रोष्टु
विन्ना सिंहपुच्छी कलशि र्धावनि र्गुहा । निदिग्धिका स्पृशी व्याघ्री बृहती
कण्टकारिका ॥ ९३ ॥ प्रचोदनी कुली क्षुद्रा दुःस्पर्शा राष्ट्रिकेत्यपि । नी
लीकाला क्लीतकिका ग्रामीणा मधुपर्णिका ॥ ९४ ॥ रञ्जनी श्रीफली तुत्था
द्रोणी दोला च नीलिनी । अवल्गुजः सोमराजी सुवल्ली सोमवल्लिका
॥ ९५ ॥ कालमेषी कृष्णफला वागुजी पूतिफल्यपि । कृष्णोपकुल्या
वैदेही मागधी चपला कणा ॥ ९६ ॥ उषणा पिप्पली शौण्डी कोलाऽथ क
रिपिप्पली । कपिवल्ली कोलवल्ली श्रेयसी वशिरः पुमान् ॥ ९७ ॥ च
व्यं तु चविकं काकचिंची गुञ्जे तु कृष्णला । पलंकषा त्विक्षुगन्धा श्वदंष्ट्रा
स्वादुकंटकः ॥ ९८ ॥ गोकंटको गोक्षुरको वनशृङ्गाट इत्यपि । वि
श्वा विषा प्रतिविषाऽनिविषोपविषाऽरुणा ॥ ९९ ॥ शृंगी महौषधं चाथ क्षी

अम २ एवीदुग्धिका समे । शतमूली बहुसुताभीरुरिन्दीवरीवरी ॥ १०० ॥
वनौ ४ ऋष्यप्रोक्ताभीरुपत्रीनारायण्यः शतावरी । अहेरुरथ पीतद्रुःकालेय
कहरिद्रवः ॥ १०१ ॥ दार्वी पचंपचा दारुहरिद्रा पर्ज्जनीत्यपि । वचो
ग्रगन्धा षड्ग्रन्था गोलोमी शतपर्विका ॥ १०२ ॥ शुक्ला हैमवती वैद्य
मातृसिंह्यौ तु वासका । वृषोऽटरुषः सिंहास्यो वासको वाजिदन्तकः ॥ १०३ ॥
आस्फोता गिरिकर्णी स्याद्विष्णुक्रान्तापराजिता । इक्षुगन्धा तु काण्डेक्षु
कोकिलाक्षेक्षुरक्षुराः ॥ १०४ ॥ शालेयः स्याच्छीतशिवश्छत्रा मधुरिका
मिसिः । मिश्रेयाप्यथ सीहुण्डो वज्रद्रुः स्नुक्स्नुही गुडाः ॥ १०५ ॥ सम
न्तदुग्धाऽथो वेल्लममोघा चित्रतण्डुला । तण्डुलश्च कृमिघ्नश्च विडङ्गं पु
न्नपुंसकम् ॥ १०६ ॥ बलावाट्यालको घण्टारवा तु शणपुष्पिका । मृद्वी
का गोस्तनी द्राक्षा स्वाद्वी मधुरसेति च ॥ १०७ ॥ सर्वानुभूतिः सुरसा त्रि
पुटा त्रिवृता त्रिवृत् । त्रिभण्डी रेचनी श्यामापालिन्द्यौ तु सुषेणिका ॥ १०८ ॥
काला मसूरविदलार्द्धचन्द्रा कालमेषिका । मधुकं क्लीतकं यष्टिमधुका
मधुयष्टिका ॥ १०९ ॥ विदारी क्षीरशुक्लेक्षुगन्धा क्रोष्ट्री च या सिता । अ
न्या क्षीरविदारी स्यान्महाश्वेतर्क्षगन्धिका ॥ ११० ॥ लाङ्गली शारदी
तोयपिप्पली शकुलादनी । खराश्वा कारवी दीप्यो मयूरो लोचमस्तकः
॥ १११ ॥ गोपी श्यामा शारिवा स्यादनन्तोत्पलशारिवा । योग्यमृद्धिः
सिद्धिलक्ष्म्यौ वृद्धेरप्याह्वया इमे ॥ ११२ ॥ कदलीवारणबुसारम्भामोचा

श्मुमत्फला । काष्ठीलामुद्गपर्णीतुकाकमुद्गासहेत्यपि ॥ ११३ ॥ वा अम २
र्ताकीहिङ्गुलीसिंहीभण्टाकीदुष्प्रधर्षिणी । नाकुलीसुरसारास्नासुग वनौ ४
न्धागन्धनाकुली ॥ ११४ ॥ नकुलेष्टाभुजङ्गाक्षीछत्राकीसुवहा चसा ।
विदारिगन्धांशुमतीशालपर्णीस्थिराध्रुवा ॥ ११५ ॥ तुण्डिकेरीसमुद्रा
न्ताकार्पासीबदरेतिच । भारद्वाजीतुसावन्याशृङ्गीतुऋषभोवृषः ॥ ११६ ॥
गाङ्गेरुकीनागबलाझषाह्रस्वगवेधुका । धामार्गवोघोषकःस्यान्महाजा
लीसपीतकः ॥ ११७ ॥ ज्योत्स्नीपटोलिकाजालीनादेयीभूमिजम्बुका ।
स्याल्लाङ्गलिक्यग्निशिखाकाकाङ्गीकाकनासिका ॥ ११८ ॥ गोधापदीतु
सुवहामुसलीतालमूलिका । अजशृंगीविषाणीस्याद्गोजिह्वादार्विके
समे ॥ ११९ ॥ ताम्बूलवल्लीताम्बूलीनागवल्ल्यप्यथद्विजा । हरेणूरेणु
काकौन्तीकपिलाभस्मगन्धिनी ॥ १२० ॥ एलवालुकमैलेयंसुगन्धिह
रिवालुकम् । वालुकंचाथपालंक्यांमुकुन्दःकुन्दुकुन्दुरुः ॥ १२१ ॥ बा
लह्रीबेरबर्हिष्ठोदीच्यंकेशाम्बुनाम च । कालानुसार्य्यवृद्धाऽश्मपुष्पशीत
शिवानितु ॥ १२२ ॥ शैलेयंतालपर्णीतुदैत्यागन्धकुटीमुरा । गन्धिनीगज
भक्ष्यातुसुवहासुरभीरसा ॥ १२३ ॥ महेरणाकुन्दुरुकीशल्लकीह्लादि
नीति [illegible] । अग्निज्वालासुभिक्षातुधातकीधातुपुष्पिका ॥ १२४ ॥ पृथ्वीका
चन्द्रव[illegible]लैलानिष्कुटिर्बहुलाऽथसा । सूक्ष्मोपकुञ्चिकातुत्थाकोरङ्गीत्रि
पुटात्रुटि[illegible] ॥ १२५ ॥ व्याधिःकुष्ठंपारिभाव्यंव्याप्यंपाकलमुत्पलम् । शं

अम २ खिनी चोरपुष्पी स्यात्केशिन्यथ वितुन्नकः ॥ १२६ ॥ झटामलाऽज्झटा
वनौ ४ तालीशिवातामलकीति च । प्रपौण्डरीकं पौण्डर्यमथ तुन्नः कुबेरकः
॥ १२७ ॥ कुणिः कच्छः कान्तलको नन्दिवृक्षोऽथ राक्षसी । चण्डा ध
नहरी क्षेमदुष्पत्रगणहासकाः ॥ १२८ ॥ व्याडायुधं व्याघ्रनखं कर
जं चक्रकारकम् । सुषिरा विद्रुमलता कपोताङ्घ्रिर्नटी नली ॥ १२९ ॥
धमन्यंजनकेशी च हनुर्हट्टविलासिनी । शुक्तिः शंखः खुरः कोलदलं न
खमथाढकी ॥ १३० ॥ काक्षी मृत्स्ना तुवरिका मृत्तालकसुराष्ट्रजे । कु
टन्नटं दशपुरं वानेयं परिपेलवम् ॥ १३१ ॥ प्लवगोपुरगोनर्दकैवर्ती
मुस्तकानि च । ग्रन्थिपर्णं शुकं बर्हिं पुष्पं स्थौणेयकुक्कुरे ॥ १३२ ॥ मरुन्मा
ला तु पिशुना स्पृक्का देवी लता लघुः । समुद्रान्ता बधूः कोटिवर्षा लंकापिके
त्यपि ॥ १३३ ॥ तपस्विनी जटामांसी जटिला लोमशा मिसी । त्वक्पत्र
मुत्कटं भृङ्गं त्वचं चोचं वराङ्गकम् ॥ १३४ ॥ कर्चूरको द्राविडकः काल्पको
वेधमुख्यकः । ओषध्यो जातिमात्रे स्युरजातौ सर्वमौषधम् ॥ १३५ ॥ शा
काख्यं पत्रपुष्पादि तण्डुलीयोऽल्पमारिषः । विशल्याग्निशिखानन्ताफ
लिनी शक्रपुष्प्यपि ॥ १३६ ॥ स्यादृक्षगन्धाछगलान्त्र्यावेगी वृद्धदारकः
। जुङ्गो ब्राह्मी तु मत्स्याक्षी वयस्था सोमवल्लरी ॥ १३७ ॥ पटुपर्णी है
मवती स्वर्णक्षीरी हिमावती । हयपुच्छी तु काम्बोजी माषपर्णी महास
हा ॥ १३८ ॥ तुण्डिकेरी रक्तफला बिम्बिका पीलुपर्ण्यपि । बर्बरा कबरी

तुङ्गी खरपुष्पाऽजगन्धिका ॥ १३९ ॥ एलापर्णी तु सुवहा रास्ना युक्त अम २
रसा च सा । चाङ्गेरी चुक्रिकादन्तशठाम्बष्ठाम्ललोणिका ॥ १४० ॥ स वनौ ४
हस्रवेधी चुक्रोऽम्लवेतसः शतवेध्यपि । नमस्कारी गण्डकारी समङ्गा ख
दिरीत्यपि ॥ १४१ ॥ जीवन्ती जीवनी जीवा जीवनीया मधुस्रवा । कूर्चशी
र्षो मधुरकः शृङ्गह्रस्वाङ्गजीवकाः ॥ १४२ ॥ किराततिक्तो भूनिम्बोऽनार्य
तिक्तोऽथ सप्तला । विमला सातला भूरिफेना चर्मकषेत्यपि ॥ १४३ ॥ वा
यसोली स्वादुरसा वयस्थाथ मुकूलकः । निकुम्भो दन्तिका प्रत्यक्श्रेण्युदुम्ब
रपर्ण्यपि ॥ १४४ ॥ अजमोदा तूग्रगन्धा ब्रह्मदर्भा यवानिका । मूले पु
ष्करकाश्मीरपद्मपत्राणि पौष्करे ॥ १४५ ॥ अव्यथातिचरा पद्मा चार
टी पद्मचारिणी । काम्पिल्लः कर्कशश्चन्द्रो रक्ताङ्गो रोचनीत्यपि ॥ १४६ ॥
पुन्नाडस्त्वेडगजो दद्रुघ्नश्चक्रमर्दकः । पद्माट उरणाख्यश्च पलाण्डुस्सु
कन्दकः ॥ १४७ ॥ लतार्कदुद्रुमौ तत्र हरितेऽथ महौषधम् । लशु
नं गृञ्जनारिष्टमहाकन्दरसोनकाः ॥ १४८ ॥ पुनर्नवा तु शोथघ्नी वितुन्नं सु
निषण्णकम् । स्याद्वातकः शीतलोऽपराजिता सनपर्ण्यपि ॥ १४९ ॥ पारावता
ङ्घ्रिः कटभी पण्या ज्योतिष्मती लता । वार्षिकं त्रायमाणा स्यात्त्रायन्ती बलभद्रिका
॥ १५० विष्वक्सेनप्रिया गृष्टिर्वाराही बदरेत्यपि । मार्कवो भृङ्गराजः स्या
मृकाकमा तु वायसी ॥ १५१ ॥ शतपुष्पा सितच्छत्रातिच्छत्रा मधुरा मिसिः ।
अवाकपुष्पी कारवी च सरणा तु प्रसारणी ॥ १५२ ॥ तस्यां कटंभरा राजब

लाभद्रबलेति च। जनी जतूकारजनी जतुकृच्चक्रवर्तिनी ॥ १५३ ॥
संस्पर्शाऽथ शटी गन्धमूली षड्ग्रन्थिकेत्यपि। कर्चूरोऽपि पलाशोऽथ
कारवेल्लः कठिल्लकः ॥ १५४ ॥ सुषवी चाथ कुलकं पटोलस्तिक्तकः प
टुः। कूष्माण्डकस्तु कर्कारुरुर्वारुः कर्कटी स्त्रियौ ॥ १५५ ॥ इक्ष्वाकुः
कटुतुम्बी स्यात्तुम्ब्यलाबुरुभे समे। चित्रा गवाक्षी गोडुम्बा विशाला त्विन्द्रवा
रुणी ॥ १५६ ॥ अर्शोघ्नः सूरणः कन्दो गण्डीरस्तु समष्ठिला। कलम्बु
रुपोदिका स्त्री तु मूलकं हिलमोचिका ॥ १५७ ॥ वास्तुकं शाकभेदाः स्युर्दूर्वा
तु शतपर्विका। सहस्रवीर्या भार्गव्यौ रुहानन्ताऽथ सा सिता ॥ १५८ ॥
गोलोमी शतवीर्या च गण्डाली शकुलाक्षकः। कुरुविन्दो मेघनामा मु
स्ता मुस्तकमस्त्रियाम् ॥ १५९ ॥ स्याद्भद्रमुस्तको गुन्द्रा चूडाला चक्रलो
च्चटाः। वंशे त्वक्सारकर्मारत्वचिसारतृणध्वजाः ॥ १६० ॥ शतपर्वा य
वफलो वेणुमस्करतेजनाः। वेणवः कीचकास्ते स्युर्ये स्वनन्त्यनिलोद्ध
ताः ॥ १६१ ॥ ग्रन्थिर्ना पर्व परुषी गुन्द्रस्तेजनकः शरः। नडस्तु धम
नः पोटगलोऽथ काशमस्त्रियाम् ॥ १६२ ॥ इक्षुगन्धा पोटगलः पुंसि
भूम्नि तु बल्वजाः। रसाल इक्षुस्तद्भेदाः पुंड्रकान्तारकादयः ॥ १६३ ॥
स्याद्वीरणं वीरतरं मूलेऽस्योशीरमस्त्रियाम्। अभयं नलदं सेव्यममृणा
लं जलाशयम् ॥ १६४ ॥ लामज्जकं लघुलयमवदाहेष्टकापथे। न
डादयस्तृणं गर्मुच्छ्यामाकप्रमुखा अपि ॥ १६५ ॥ अंस्त्री कुशं कुथो दर्भः प

विच मथक तृणम् । पौर सौगन्धिकध्याम देवजगन्धकरोहिषम् ॥ १६६ ॥ अम २
छत्रातिच्छत्रपालघ्नौ मालातृणकभूस्तृणे । शष्पं बालतृणं घासो यवसं तृणमर्जुनम् ॥ १६७ ॥ तृणानां संहतिस्तृण्या नड्या तु नडसंहतिः । वनौ ४
तृणराजाह्वयस्तालो नारिकेलस्तु लाङ्गली ॥ १६८ ॥ घोण्टा तु पूगः क्रमुको गुवाकः खपुरोऽस्य तु । फलमुद्वेगमेते च हिन्तालसहितास्त्रयः
॥ १६९ ॥ खर्जूरः केतकी ताडी खर्जूरी च तृणद्रुमाः ।

इति वनौषधिवर्गः



सिंहो मृगेन्द्रः पञ्चास्यो हर्यक्षः केसरी हरिः । शार्दूलद्वीपिनौ व्याघ्रे सिं ५
तरक्षुस्तु मृगादनः ॥ १ ॥ वराहः सूकरो घृष्टिः कोलः पोत्री किरिः किटिः
। दंष्ट्री घोणी स्तब्धरोमा क्रोडो भूदार इत्यपि ॥ २ ॥ कपिप्लवङ्गप्लवगशाखामृगवलीमुखाः । मर्कटो वानरः कीशो वनौकाः अथ भल्लुके ॥ ३ ॥ ऋक्षाच्छभल्लभल्लूका गण्डके खड्गखड्गिनौ । लुलायो महिषो वाहद्विषत्कासरसैरिभाः ॥ ४ ॥ स्त्रियां शिवा भूरिमायगोमायुमृगधूर्तकाः । शृगालवञ्चकक्रोष्टुफेरुफेरवजम्बुकाः ॥ ५ ॥ ओतुर्बिडालो मार्जारो वृषदंशक आखुभुक् । त्रयो गौधेरगौधारगौधेया गोधिकात्मजे ॥ ६ ॥ श्वावित्तु शल्यस्तल्लोम्नि शललं शलली शलम् । वातप्रमीर्वातमृगः कोकस्त्वीहामृगो वृकः
॥ ७ ॥ मृगे कुरङ्गवातायुहरिणाजिनयोनयः । ऐणेयमेण्याश्चर्माद्यं

अम२ एणस्यैणमुभे त्रिषु॥ ८ ॥ कदलीकन्दलीचीनचमूरुप्रियकावपि।
सिं ५ समूरुश्चेति हरिणा अमी अजिनयोनयः॥ ९ ॥ कृष्णसाररुरुन्य
ङ्कुरंकुशम्बररौहिषाः। गोकर्णपृषतैणर्श्यरोहिताश्चमरो मृगाः॥ १० ॥
गन्धर्वः शरभो रामः सृमरो गवयः शशः। इत्यादयो मृगेन्द्राद्या गवा
द्याः पशुजातयः॥ ११ ॥ उन्दुरुर्मूषिकोऽप्याखुर्गिरिका बालमूषिका
। सरटः कृकलासः स्यान्मूषली गृहगोधिका॥ १२ ॥ लूता स्त्री तन्तुवायो
र्णनाभमर्कटकाः समाः। नीलङ्गुस्तु क्रिमिः कर्णजलौकाः शतपद्युभे
॥ १३ ॥ वृश्चिकः शूककीटः स्यादलिद्रुणौ तु वृश्चिके। पारावतः कलरवः
कपोतोऽथ शशादनः॥ १४ ॥ पत्री श्येन उलूकस्तु वायसारातिपेचकौ
। व्याघ्राटः स्याद्भरद्वाजः खञ्जरीटस्तु खञ्जनः॥ १५ ॥ लोहपृष्ठस्तु कं
कः स्यादथ चाषः किकीदिविः। कलिङ्गभृङ्गधूम्याटा अथ स्याच्छतपत्र
कः॥ १६ ॥ दार्वाघाटोऽथ सारंगस्तोककश्चातकः समाः। कृकवाकुस्ता
म्रचूडः कुक्कुटश्चरणायुधः॥ १७ ॥ चटकः कलविङ्कः स्यात्तस्य स्त्री च
टका तयोः। पुमपत्ये चाटकैरः स्त्र्यपत्ये चटकैव हि॥ १८ ॥ कर्करे
टुः करेटुः स्यात्कृकणक्रकरौ समौ। वनप्रियः परभृतः कोकिलः पिक इ
त्यपि॥ १९ ॥ काके तु करटारिष्टबलिपुष्टसकृत्प्रजाः। ध्वांक्षात्मघोष
परभृद्बलिभुग्वायसा अपि॥ २० ॥ द्रोणकाकस्तु काकोलो दात्यूहः काल
कण्ठकः। आतायिचिल्लौ दाक्षाय्यगृध्रौ कीरशुकौ समौ॥ २१ ॥ कुर

क्रुञ्चोऽथबकः कह्वःपुष्कराह्वस्तुसारसः । कोकश्चक्रश्चक्रवाकोरथाङ्गा अम २
ह्वयनामकः ॥ २२ ॥ कादम्बःकलहंसःस्यादुत्क्रोशकुररौसमौ । हंसा सिं ५
स्तुश्वेतगरुतश्चक्राङ्गामानसौकसः ॥ २३ ॥ राजहंसास्तुतेचञ्चुचर
णैर्लोहितैःसिताः । मलिनैर्मल्लिकाख्यास्तेधार्तराष्ट्राःसितेतरैः ॥ २४ ॥
शरारिराटिराडिश्चबलाकाबिसकण्ठिका । हंसस्ययोषिद्वरटासारस
स्यतुलक्ष्मणा ॥ २५ ॥ जतुकाजिनपत्रास्यात्परोष्णीतैलपायिका । व
र्वणामक्षिकानीलासरघामधुमक्षिका ॥ २६ ॥ पतङ्गिकापुत्तिकास्या
द्दंशस्तुवनमक्षिका । दंशीतज्जातिरल्पास्याद्गन्धोलीवरटाद्वयोः
॥ २७ ॥ भृङ्गारीझीरुकाचीरीझिल्लिकाचसमाइमाः । समौपतङ्ग
शलभौखद्योतोज्योतिरिङ्गणः ॥ २८ ॥ मधुव्रतोमधुकरोमधुलिण्म
धुपालिनः । द्विरेफपुष्पलिड्भृङ्गषट्पदभ्रमरालयः ॥ २९ ॥
मयूरोबर्हिणोबर्हीनीलकण्ठोभुजङ्गभुक् । शिखावलःशिखीकेकीमेघ
नादानुलास्यपि ॥ ३० ॥ केकावाणीमयूरस्यसमौचन्द्रकमेचकौ । शि
खाचूडाशिखण्डस्तुपिच्छबर्हेनपुंसके ॥ ३१ ॥ खगेविहङ्गविहगवि
हङ्गमविहायसः । शकुन्तिपक्षिशकुनिशकुन्तशकुनद्विजाः ॥ ३२ ॥
पतत्रिपत्रिपतगपतत्पत्ररथाण्डजाः । नगौकोवाजिविकिरविविष्कि
रपतत्रयः ॥ ३३ ॥ नीडोद्भवागरुत्मन्तःपित्सन्तोनभसंगमाः । ते
षांविशेषाहारीतोमद्गुःकारण्डवःप्लवः ॥ ३४ ॥ तित्तिरिःकुक्कुभोलावो

अम २ जीवंजीवश्चकोरकः। कोयष्टिकष्टिट्टिभकोवर्त्तकोवर्त्तिकादयः॥ ३५॥
सिं ५ गरुत्पक्षच्छदाःपत्रंपतत्रञ्चतनूरुहम्। स्त्रीपक्षतिःपक्षमूलञ्च
ञ्चुःस्त्रोटिरुभेस्त्रियौ॥ ३६॥ प्रडीनोड्डीनसंडीनान्येताःखगगतिक्रि
याः। पेशीकोशोद्विहीनेऽण्डंकुलायोनीडमस्त्रियाम्॥ ३७॥ पोतःपा
कोऽर्भकोडिम्भःपृथुकःशावकःशिशुः। स्त्रीपुंसौमिथुनंद्वंद्वंयुग्मन्तुयुग
लंयुगम्॥ ३८॥ समूहनिवहव्यूहसन्दोहविसरव्रजाः। स्तोमौघ
निकरव्रातवारसंघातसञ्चयाः॥ ३९॥ समुदायःसमुदयःसमवाय
चयोगणाः। स्त्रियान्तुसंहतिर्वृन्दंनिकुरम्बङ्कदम्बकम्॥ ४०॥ वृन्द
भेदाःसमैर्वर्गःसंघसार्थौतुजन्तुभिः। सजातीयैःकुलंयूथंतिरश्चांपुन्नपुं
सकम्॥ ४१॥ पशूनांसमजोऽन्येषांसमाजोऽथसधर्मिणाम्। स्या
न्निकायःपुञ्जराशीतूत्करःकूटमस्त्रियाम्॥ ४२॥ कापोतशौकमायूरतै
त्तिरादीनितद्गणे। गृहासक्ताःपक्षिमृगाश्छेकास्तेगृह्यकाश्चते॥ ४३॥

इतिसिंहवर्गः

********************************

नृ ६ मनुष्यामानुषामर्त्यामनुजामानवानराः। स्युःपुमांसःपञ्चजनाःपुरु
षाःपूरुषानराः॥ १॥ स्त्रीयोषिदबलायोषानारीसीमन्तिनीवधूः। प्र
तीपदर्शिनीवामावनितामहिलातथा॥ २॥ विशेषास्त्वङ्गनाभीरुःकामि
नीवामलोचना। प्रमदाभाविनीकान्ताललनाचनितम्बिनी॥ ३॥ सु

ह्रीरमणी रामा कोपना सैव भामिनी । वरारोहा मत्तकाशिन्युत्तमा वर अम
वर्णिनी ॥ ४ ॥ कृताभिषेका महिषी भोगिन्योऽन्या नृपस्त्रियः । पत्नी रः
पाणिगृहीती च द्वितीया सहधर्मिणी ॥ ५ ॥ भार्य्या जायाऽथ पुंभूम्नि दाराः
स्यात्तु कुटुम्बिनी । पुरंध्री सुचरित्रा तु सती साध्वी पतिव्रता ॥ ६ ॥ कृत
सापत्निकाध्यूढाधिविन्नाऽथ स्वयम्वरा । पतिंवरा च वर्य्याऽथ कुलस्त्री
कुलपालिका ॥ ७ ॥ कन्या कुमारी गौरी तु नग्निकानागतार्त्तवा । स्यान्म
ध्यमा दृष्टरजास्तरुणी युवतिः समे ॥ ८ ॥ समाः स्नुषा जनी वध्वः चि
रण्टी तु सुवासिनी । इच्छावती कामुका स्याद् वृषस्यन्ती तु कामुकी ॥ ९ ॥
कान्तार्थिनी तु या याति संकेतं साभिसारिका । पुंश्चली धर्षणी बन्धक्यसती कु
लटेत्वरी ॥ १० ॥ स्वैरिणी पांशुला ऽथ स्यादशिश्वी शिशुना विना । अ
वीरा निष्पतिसुता विश्वस्ता विधवे समे ॥ ११ ॥ आलिः सखी वयस्याथ पति
वत्नी सभर्तृका । वृद्धा पलिक्नी प्राज्ञी तु प्राज्ञा प्रज्ञा तु धीमती ॥ १२ ॥ शूद्री शू
द्रस्य भार्य्या स्याच्छूद्रा तज्जातिरेव च । आभीरी तु महाशूद्री जातिपुंयो
गयोः समा ॥ १३ ॥ अर्य्याणी स्वयमर्य्या स्यात् क्षत्रिया क्षत्रियाण्यपि
। उपाध्यायाऽप्युपाध्यायी स्यादाचार्य्यापि च स्वतः ॥ १४ ॥ आचार्य्या
णी तु पुंयोगे स्यादर्य्यी क्षत्रियी तथा । उपाध्यायान्युपाध्यायी पोटा स्त्रीपुं
स लक्षणा ॥ १५ ॥ वीरपत्नी वीरभार्य्या वीरमाता तु वीरसूः । जाता
पत्या जाता च प्रसूता च प्रसूतिका ॥ १६ ॥ स्त्री नग्निका कोटवी स्यात्

दूतीसञ्चारिके समे। कात्यायन्यर्द्धवृद्धा या काषायवसनाऽधवा ॥१७॥
सैरिंध्री परवेश्मस्था स्ववशा शिल्पकारिका। असिक्नी स्यादवृद्धा या प्रेष्या
न्तःपुरचारिणी ॥१८॥ वारस्त्री गणिका वेश्या रूपाजीवाऽथ सा जनैः
। सत्कृता वारमुख्या स्यात्कुट्टनी संभली समे ॥१९॥ विप्रश्निका त्वीक्ष
णिका दैवज्ञाऽथ रजस्वला। स्त्रीधर्मिण्यवी रात्रेयी मलिनी पुष्पवत्यपि
॥२०॥ ऋतुमत्यप्युदक्यापि स्याद्रजः पुष्पमार्त्तवम्। श्रद्धालुर्दोहद
वती निष्कला विगतार्त्तवा ॥२१॥ आपन्नसत्त्वा स्याद्गुर्विण्यन्तर्वत्नी च
गर्भिणी। गणिकादेस्तु गाणिक्यं गार्भिणं यौवतं गणे ॥२२॥ पुनर्भूर्दि
धिषूरूढा द्विस्तस्या दिधिषुः पतिः। स तु द्विजाग्रेदिधिषूः सैव यस्य कुटु
म्बिनी ॥२३॥ कानीनः कन्यकाजातः सुतोऽथ सुभगासुतः। सौभा
गिनेयः स्यात्पारस्त्रैणेयस्तु परस्त्रियाः ॥२४॥ पितृष्वसेयः स्यात्पैतृष्व
स्रीयश्च पितृष्वसुः। सुतो मातृष्वसुश्चैवं वैमात्रेयो विमातृजः ॥२५॥
अथ बान्धकिनेयः स्याद्बन्धुलश्चासतीसुतः। कौलटेयः कौलटेरो भिक्षु
की तु सती यदि ॥२६॥ तदा कौलटिनेयोऽस्याः कौलटेयोऽपि चात्मजः
। आत्मजस्तनयः सूनुः सुतः पुत्रः स्त्रियां त्वमी ॥२७॥ आहुर्दुहि
तरं सर्वेऽपत्यं तोकं तयोः समे। स्वजाते त्वौरसौरस्यौ तातस्तु जनकः पि
ता ॥२८॥ जनयित्री प्रसूर्माता जननी भगिनी स्वसा। ननान्दा तु
स्वसा पत्युर्नप्त्री पौत्री सुतात्मजा ॥२९॥ भार्यास्तु भ्रातृवर्गस्य यात

रःस्युःपरस्परम्। प्रजावतीभ्रातृजायामातुलानीतुमातुली ॥ ३० ॥ प अम २
तिपत्न्योःप्रसूः श्वश्रूः श्वशुरस्तुपितातयोः। पितुर्भ्रातापितृव्यःस्यान्मा नृ ६
तुर्भ्रातातुमातुलः ॥ ३१ ॥ श्यालाःस्युर्भ्रातरःपत्न्याःस्वामिनोदेवृदेवरौ।
स्वस्रीयोभागिनेयःस्याज्जामाताटुहितुःपतिः ॥ ३२ ॥ पितामहःपि
तृपितातत्पिताप्रपितामहः। मातुर्मातामहाद्यैवंसपिण्डास्तुसनाभयः
॥ ३३ ॥ समानोदर्य्यसोदर्य्यसगर्भ्यसहजाःसमाः। सगोत्रबान्धवज्ञा
तिबन्धुस्वस्वजनाःसमाः ॥ ३४ ॥ ज्ञातेयंबन्धुतातेषांक्रमाद्भावसमूह
योः। धवःप्रियःपतिर्भर्ताजारस्तूपपतिःसमौ ॥ ३५ ॥ अमृतेजारजः
कुण्डोमृतेभर्तरिगोलकः। भ्रात्रीयोभ्रातृजेभ्रातृभगिन्यौभ्रातरावुभौ ॥ ३६ ॥
मातापितरौपितरौमातरपितरौपितरौचतौ। श्वश्रूश्वशुरौश्वशुरौपुत्रौपुत्रश्चदु
हिताच ॥ ३७ ॥ दम्पतीजम्पतीजायापतीभार्य्यापतीचतौ। गर्भाशयो
जरायुःस्यादुल्वंकललमस्त्रियाम् ॥ ३८ ॥ सूतिमासोवैजननोगर्भोभ्रूण
इमौसमौ। तृतीयाप्रकृतिःशण्डःक्लीबंपण्डोनपुंसकम् ॥ ३९ ॥ शि
शुत्वंशैशवंबाल्यंतारुण्यंयौवनंसमे। स्यात्स्थाविरंतुवृद्धत्वंवृद्धसंघेऽ
पिवार्द्धकम् ॥ ४० ॥ पलितंजरसाशौक्ल्यंकेशादौविस्रसाजरा। स्यादु
त्तानशयाडिम्भास्तनपाचस्तनन्धयी ॥ ४१ ॥ बालस्तुस्यान्माणव
कोवयस्थस्तरुणोयुवा। प्रवयाःस्थविरोवृद्धोजीनोजीर्णोजरन्नपि
॥ ४२ ॥ वर्षीयान्दशमीज्यायान्पूर्वजस्त्वग्रियोऽग्रजः। जघन्यजे

२ ६

स्युः कनिष्ठयवीयोवरजानुजाः ॥ ४३ ॥ अमांसो दुर्बलश्छातो बलवा
न्मांसलोऽंसलः । तुन्दिलस्तुन्दिभस्तुन्दी बृहत्कुक्षिः पिचिण्डिलः ॥ ४४ ॥
अवटीटोऽवनाटश्चावभ्राटो नतनासिके । केशवः केशिकः केशी बलि
नो वलिभः समौ ॥ ४५ ॥ विकलाङ्गस्त्वपोगण्डः खर्वो ह्रस्वश्च वामनः
। खरणाः स्यात्खरणसो विग्रस्तु गतनासिकः ॥ ४६ ॥ खुरणाः स्यात्खु
रणसः प्रज्ञुः प्रगतजानुकः । ऊर्ध्वज्ञुरूर्ध्वजानुः स्यात्संज्ञुः संहतजानुकः
॥ ४७ ॥ स्यादेडे बधिरः कुब्जे गडुलः कुकरे कुणिः । पृश्निरल्पतनौ श्रोणः
पङ्गौ मुण्डस्तु मुण्डिते ॥ ४८ ॥ बलिरः केकरे खोडे खञ्जस्त्रिषु जरावराः ।
जडुलः कालकः पिप्लुस्तिलकस्तिलकालकः ॥ ४९ ॥ अनामयं स्यादारो
ग्यं चिकित्सा रुक्प्रतिक्रिया । भेषजौषधभैषज्यान्यगदो जायुरित्यपि
॥ ५० ॥ स्त्री रुग्रुजा चोपतापरोगव्याधिगदामयाः । पुमान्यक्ष्मा क्षयः शो
षः प्रतिश्यायस्तु पीनसः ॥ ५१ ॥ स्त्री क्षुत्क्षुतं क्षवः पुंसि कासस्तु क्षवथुः पु
मान् । शोफस्तु श्वयथुः शोथः पादस्फोटो विपादिका ॥ ५२ ॥ किलासं सि
ध्म कच्छूं तु पामपामा विचर्चिका । कण्डूः खर्जूश्च कण्डूया विस्फोटः पि
टकः स्त्रियाम् ॥ ५३ ॥ व्रणोऽस्त्रियामीर्ममरुः क्लीबे नाडीव्रणः पुमान् । को
ठो मण्डलकं कुष्ठश्वित्रे दुर्नामकार्शसी ॥ ५४ ॥ आनाहस्तु विबन्धः स्या
द्ग्रहणी रुक्प्रवाहिका । प्रच्छर्दिका वमिश्च स्त्री पुमांस्तु वमथुः समाः ॥ ५५ ॥
व्याधिभेदा विद्रधिः स्त्री ज्वरमेहभगन्दराः । अश्मरी मूत्रकृच्छ्रं स्यात्

पूर्वेद्युर्भुक्तावधेस्त्रिषु ॥ ५६ ॥ रोगहार्य्यगदंकारो भिषग्वैद्यौ चिकित्सके । अम २
वार्त्तो निरामयः कल्य उल्लाघो निर्गतो गदात् ॥ ५७ ॥ ग्लानग्लास्नू नृ ६
आमयावी विकृतो व्याधितोऽपटुः । आतुरोऽभ्यमितोऽभ्यान्तः समौपा
मनकच्छुरौ ॥ ५८ ॥ दद्रुणो दद्रुरोगी स्यादर्शोरोगयुतोऽर्शसः
। वातकी वातरोगी स्यात्सातिसारोऽतिसारकी ॥ ५९ ॥ स्युः क्लिन्नाक्षे चुल्ल
चिल्लपिल्लाः क्लिन्नेऽक्ष्णि चाप्यमी । उन्मत्त उन्मादवति श्लेष्मलः श्लेष्म
णः कफी ॥ ६० ॥ न्युब्जो भुग्नो रुजा वृद्धनाभौ तुण्डिलतुण्डिभौ । किलासी
सिध्मलोऽन्धोऽदृङ्मूर्च्छाले मूर्त्तमूर्च्छितौ ॥ ६१ ॥ शुक्रं तेजोरेतसी
च वीजवीर्येन्द्रियाणि च । मायुः पित्तं कफः श्लेष्मा स्त्रियां तु त्वगसृग्धरा
॥ ६२ ॥ पिशितं तरसं मांसं पललं क्रव्यमामिषम् । उत्तप्तं शुष्कमांसं
स्याद्वल्लूरं त्रिलिङ्गकम् ॥ ६३ ॥ रुधिरेऽसृग्लोहितास्ररक्तक्षतज
शोणितम् । बुक्काग्रमांसं हृदयं हृन्मेदस्तु वपा वसा ॥ ६४ ॥ पश्चाद्ग्रीवा
शिरा मन्या नाडी तु धमनिः शिरा । तिलकं क्लोम मस्तिष्कं गोर्द्दं किट्टं मलो
ऽस्त्रियाम् ॥ ६५ ॥ अन्त्रं पुरीतद्गुल्मस्तु प्लीहा पुंस्यथ वस्नसा । स्नायुः
स्त्रियां कालखण्डयकृती तु समे इमे ॥ ६६ ॥ सृणिका स्यन्दिनी लाला दूषि
का नेत्रयोर्मलम् । मूत्रं प्रस्राव उच्चारावस्करौ शमलं शकृत् ॥ ६७ ॥ गू
थं पुरीषं वर्चस्कमस्त्री विष्ठाविषौ स्त्रियौ । स्यात्कर्परः कपालोऽस्त्री कीकसं
कुल्यमस्थि च ॥ ६८ ॥ स्याच्छरीरास्थ्नि कंकालः पृष्ठास्थ्नि तु कशेरुका ।

अम २ शिरोस्थ्नितु करोटिः स्त्री पार्श्वास्थनितु पर्शुका ॥ ६९ ॥ अङ्गं प्रतीको ऽवय
नृ ६ वोपघनो ऽथ कलेवरम् । गात्रं वपुः संहननं शरीरं वर्ष्म विग्रहः ॥ ७० ॥
कायो देहः क्लीब पुंसोः स्त्रियां मूर्तिस्तनुस्तनूः । पादाग्रं प्रपदं पादः पदङ्घ्रि
श्चरणो ऽस्त्रियाम् ॥ ७१ ॥ तद्ग्रन्थी घुटिके गुल्फौ पुमान्पार्ष्णिरधस्त
योः । जंघा तु प्रसृता जानूरुपर्वाष्ठीवदस्त्रियाम् ॥ ७२ ॥ सक्थि क्लीबे
पुमानूरुस्तत्सन्धिः पुंसि वंक्षणः । गुदं त्वपानं पायुर्ना बस्तिर्नाभेरधो द्वयोः
॥ ७३ ॥ कटो ना श्रोणिफलकं कटिः श्रोणी ककुद्मती । पश्चान्नितम्बः
स्त्रीकट्याः क्लीबे तु जघनं पुरः ॥ ७४ ॥ कूपकौ तु नितम्बस्थौ द्वयहीने
कुकुन्दरे । स्त्रियां स्फिचौ कटिप्रोथावुपस्थो वक्ष्यमाणयोः ॥ ७५ ॥ भगं यो
निर्द्वयोः शिश्नो मेढ्रो मेहनशेफसी । मुष्को ऽण्डकोषो वृषणः पृष्ठवंशाधरे
त्रिकम् ॥ ७६ ॥ पिचिण्ड कुक्षी जठरोदरं तुन्दं स्तनौ कुचौ । चूचुकं तु कु
चाग्रं स्यान्न ना क्रोडं भुजान्तरम् ॥ ७७ ॥ उरो वत्सं च वक्षश्च पृष्ठं तु च
रमं तनोः । स्कन्धो भुजशिरों ऽसो ऽस्त्री सन्धी तस्यैव जत्रुणी ॥ ७८ ॥
बाहुमूले उभे कक्षौ पार्श्वमस्त्री तयोरधः । मध्यमस्त्री अवलग्नं च मध्यो
ऽस्त्री द्वौ परौ द्वयोः ॥ ७९ ॥ भुजबाहू प्रवेष्टो दोः स्यात्कफोणिस्तु कूर्प
रः । अस्योपरि प्रगण्डः स्यात्प्रकोष्ठस्तस्य चाप्यधः ॥ ८० ॥ मणि
बन्धादाकनिष्ठं करस्य करभो बहिः । पञ्चशाखः शयः पाणिस्तर्जनी
स्यात्प्रदेशिनी ॥ ८१ ॥ अङ्गुल्यः करशाखाः स्युः पुंस्यङ्गुष्ठः प्रदेशिनी

। मध्यमानामिका चापि कनिष्ठा चेति ताः क्रमात् ॥ ८२ ॥ पुनर्भवः कर अम २
रुहो नखोऽस्त्री नखरोऽस्त्रियाम् । प्रादेशतालगोकर्णास्तर्जन्यादियु न ६
ते तते ॥ ८३ ॥ अङ्गुष्ठे सकनिष्ठे स्याद्वितस्तिर्द्वादशाङ्गुलः । पाणौ चपे
टप्रतलप्रहस्ता विस्तृताङ्गुलौ ॥ ८४ ॥ द्वौ संहतौ संहतलप्रतलौ वा
मदक्षिणौ । पाणिर्निकुब्जः प्रसृतिस्तौ युतावञ्जलिः पुमान् ॥ ८५ ॥ प्र
कोष्ठे विस्तृतकरे हस्तो मुष्ट्या तु बद्धया । स रत्निः स्यादरत्निस्तु निष्कनि
ष्ठेन मुष्टिना ॥ ८६ ॥ व्यामो बाह्वोः सकरयोस्ततयोस्तिर्यगन्तर
म् । ऊर्ध्वविस्तृतदोःपाणिनृमाने पौरुषं त्रिषु ॥ ८७ ॥ कण्ठो गलोऽ
थ ग्रीवायां शिरोधिः कन्धरेत्यपि । कम्बुग्रीवा त्रिरेखा साऽवटुर्घाटा कृका
टिका ॥ ८८ ॥ वक्त्रास्ये वदनं तुण्डमाननं लपनं मुखम् । क्लीबे घ्राणं
गन्धवहा घोणा नासा च नासिका ॥ ८९ ॥ ओष्ठाधरौ तु रदनच्छदौ
दशनवाससी । अधःस्याच्चिबुकं गण्डौ कपोलौ तत्परो हनुः ॥ ९० ॥
रदना दशना दन्ता रदास्तालु तु काकुदम् । रसज्ञा रसना जिह्वा प्रान्तावो
ष्ठस्य सृक्कणी ॥ ९१ ॥ ललाटमलिकं गोधिरूर्ध्वे दृग्भ्यां भ्रुवौ स्त्रियाम्
। कूर्चमस्त्री भ्रुवोर्मध्यं तारकाक्ष्णः कनीनिका ॥ ९२ ॥ लोचनं नयनं नेत्रमी
क्षणं चक्षुरक्षिणी । दृग्दृष्टी चास्रु नेत्राम्बु रोदनं चास्रमस्रु च ॥ ९३ ॥ अ
पाङ्गौ नेत्रयोरन्तौ कटाक्षोऽपाङ्गदर्शने । कर्णशब्दग्रहौ श्रोत्रं श्रुतिः स्त्री श्रव
णं श्रव ॥ ९४ ॥ उत्तमाङ्गं शिरः शीर्षं मूर्द्धा ना मस्तकोऽस्त्रियाम् । चिकुरः

अम २ कुन्तलो वालः कचः केशः शिरोरुहः ॥ ९५ ॥ तद्वृन्दे कैशिकं कैश्यमल
व ६ काश्चूर्णकुन्तलाः । ते ललाटे भ्रमरकाः काकपक्षः शिखण्डकः ॥ ९६ ॥
कवरी केशवेशोऽथ धम्मिल्लः संयताः कचाः । शिखाचूडा केशपाशी व्रति
नस्तु जटा सटा ॥ ९७ ॥ वेणी प्रवेणी शीर्षण्यशिरस्यौ विशदे कचे
। पाशः पक्षश्च हस्तश्च कलापार्थाः कचात्परे ॥ ९८ ॥ तनूरुहं रोमलो
म तद्वृद्धे श्मश्रु पुंमुखे । आकल्पवेषौ नेपथ्यं प्रतिकर्म प्रसाधनम् ॥ ९९ ॥
दशैते त्रिष्वलंकर्त्ताऽलंकरिष्णुश्च मण्डितः । प्रसाधितोऽलंकृतश्च
भूषितश्च परिष्कृतः ॥ १०० ॥ विभ्राड्भ्राजिष्णुरोचिष्णु भूषणं स्याद
लंक्रिया । अलंकारस्त्वाभरणं परिष्कारो विभूषणम् ॥ १०१ ॥ मण्डनं
चाथ मुकुटं किरीटं पुन्नपुंसकम् । चूडामणिः शिरोरत्नं तरलो हारमध्य
गः ॥ १०२ ॥ बालपाश्या पारितथ्या पत्रपाश्या ललाटिका । कर्णिका
तालपत्रं स्यात्कुण्डलं कर्णवेष्टनम् ॥ १०३ ॥ ग्रैवेयकं कण्ठभूषा लम्ब
नं स्याल्ललन्तिका । स्वर्णैः प्रालम्बिकाऽथोरःसूत्रिका मौक्तिकैः कृता
॥ १०४ ॥ हारो मुक्तावली देवच्छन्दोऽसौ शतयष्टिकः । हारभेदा यष्टि
भेदाद्गुच्छगुत्सार्द्धगोस्तनाः ॥ १०५ ॥ अर्द्धहारो माणवक एकावल्येक
यष्टिका । सैव नक्षत्रमाला स्यात्सप्तविंशतिमौक्तिकैः ॥ १०६ ॥ आवा
पकः पारिहार्य्यः कटको वलयोऽस्त्रियाम् । केयूरमङ्गदं तुल्ये अङ्गुरी
यकमूर्मिका ॥ १०७ ॥ साक्षराङ्गुलिमुद्रा स्यात्कङ्कणं करभूषणम् । स्त्रीक

स्त्र्यांमेखलाकाञ्चीसप्तकीरसनातथा ॥ १०८ ॥ क्लीबेसारसनंचाथपुंस्क अम २
ट्यांशृङ्खलंत्रिषु। पादाङ्गदंतुलाकोटिर्मञ्जीरेनूपुरोऽस्त्रियाम् ॥ १०९ ॥ नृ ६
हंसकःपादकटकःकिंकिणीक्षुद्रघण्टिका। त्वक्फलक्रिमिरोमाणि
वस्त्रयोनिर्दशस्त्रिषु ॥ ११० ॥ वाल्कंक्षौमादिफालंतुकार्पासंबादरंच
तत्। कौशेयंक्रिमिकोशोत्थंराङ्कवंमृगरोमजम् ॥ १११ ॥ अनाहतंनि
ष्प्रवाणितन्त्रकंचनवाम्बरे। तत्स्यादुद्गमनीयंयद्धौतयोर्वस्त्रयोर्युग
म् ॥ ११२ ॥ पत्रोर्णंधौतकौशेयंबहुमूल्यंमहाधनम्। क्षौमंदुकूलंस्या
द्द्वेतुनिवीतंप्रावृतंत्रिषु ॥ ११३ ॥ स्त्रियांबहुत्वेवस्त्रस्यदशाःस्युर्वस्त
योर्द्वयोः। दैर्घ्यमायामआरोहःपरिणाहोविशालता ॥ ११४ ॥ पट
च्चरंजीर्णवस्त्रंसमौलक्तककर्पटौ। वस्त्रमाच्छादनंवासश्चैलंवसन
मंशुकम् ॥ ११५ ॥ सुचेलकःपटोऽस्त्रीस्याद्वराशिःस्थूलशाटकः
। निचोलःप्रच्छदपटःसमौरल्लककम्बलौ ॥ ११६ ॥ अन्तरीयोप
संव्यानपरिधानान्यधोंऽशुके। द्वौप्रावारोत्तरासंगौसमौबृहतिकातथा
॥ ११७ ॥ संव्यानमुत्तरीयंच चोलःकूर्पासकोऽस्त्रियाम्। नीशारः
स्यात्प्रावरणेहिमानिलनिवारणे ॥ ११८ ॥ अर्द्धोरुकंवरस्त्रीणांस्याच्च
ण्डातकमंशुकम्। स्यात्त्रिष्वाप्रपदीनंतत्प्राप्नोत्याप्रपदंहियत् ॥ ११९ ॥
अस्त्रीवितानमुल्लोचोदूष्याद्यंवस्त्रवेश्मनि। प्रतिसीराजवनिकास्यात्तिर
स्करिणीचसा ॥ १२० ॥ परिकर्माङ्गसंस्कारःस्यान्मार्ष्टिर्मार्जनामृजा

अम २ । उद्वर्तनोत्सादने द्वे समे आप्लाव आप्लवः ॥ १२१॥ स्नानं चर्चा तु चा
र ६ र्चिक्यं स्थासको ऽथ प्रबोधनम्। अनुबोधः पत्रलेखा पत्राङ्गुलिरिमे समे
॥ १२२॥ तमालपत्रतिलकचित्रकाणि विशेषकम्। द्वितीयञ्च तुरीय
ञ्च न स्त्रियाम् अथ कुङ्कुमम् ॥ १२३॥ काश्मीरजन्माग्निशिखं वरं वाह्ली
कपीतनम्। रक्तसंकोचपिशुनं धीरं लोहितचन्दने ॥ १२४॥ लाक्षार
क्षा जतु क्लीबे यावो ऽलक्तो द्रुमामयः। लवङ्गं देवकुसुमं श्रीसंज्ञम् अथ जा
यकम् ॥ १२५॥ कालीयकञ्च कालानुसार्यञ्चाथ समार्थकम्। वंशि
कागुरु राजार्हं लोहं कृमिजजोङ्गकम् ॥ १२६॥ कालागुर्वगुरु स्यात्तु मं
गल्या मल्लिगन्धि यत्। यक्षधूपः सर्जरसो रालसर्वरसावपि ॥ १२७॥
बहुरूपो ऽप्यथ वृकधूपकृत्रिमधूपकौ। तुरुष्कः पिण्डकः सिह्लो या
वनो ऽप्यथ पायसः ॥ १२८॥ श्रीवासो वृकधूपो ऽपि श्रीवेष्टसरलद्र
वौ। मृगनाभिर्मृगमदः कस्तूरी चाऽथ कोलकम् ॥ १२९॥ कक्कोलकं
कोशफलम् अथ कर्पूरमस्त्रियाम्। घनसारश्चन्द्रसंज्ञः सिताभ्रो हिमवा
लुका ॥ १३० ॥ गन्धसारो मलयजो भद्रश्रीश्चन्दनो ऽस्त्रियाम्। तैल
पर्णिकगोशीर्षे हरिचन्दनमस्त्रियाम् ॥ १३१॥ तिलपर्णी तु पत्राङ्गं
रञ्जनं रक्तचन्दनम्। कुचन्दनञ्चा ऽथ जातीकोशजातीफले समे
॥ १३२ ॥ कर्पूरागुरुकस्तूरीकक्कोलैर्यक्षकर्दमः। गात्रानुलेपनी व
र्त्तिर्वर्णकं स्याद्विलेपनम् ॥ १३३॥ चूर्णानि वासयोगाः स्युर्भावितं वासितं

त्रिषु। संस्कारो गन्धमाल्याद्यैर्यःस्यात्तदधिवासनम्॥ १३४ ॥ माल्यं अम२
मालास्रजौ मूर्द्ध्नि केशमध्ये तु गर्भकः । प्रभ्रष्टकं शिखालम्बि पुरोन्यस्तं ल न्द ६
लामकम् ॥ १३५ ॥ प्रालम्बमृजुलम्बि स्यात्कण्ठाद्वैकक्षकं तु तत् । य
त्तिर्य्यक्क्षिप्तमुरसि शिखास्वापीडशेखरौ ॥ १३६ ॥ रचना स्यात्परिस्प
न्द आभोगः परिपूर्णता । उपधानन्तूपबर्हः शय्यायां शयनीयवत्
॥ १३७ ॥ शयनं मञ्चपर्य्यङ्कपल्यङ्काः खट्वया समाः । गेण्डूकः क
न्दुको दीपः प्रदीपः पीठमासनम्॥ १३८ ॥ समुद्गकः सम्पुटकः प्रति
ग्राहः पतद्ग्रहः । प्रसाधनी कंकतिका पिष्टातः पटवासकः ॥ १३९ ॥
दर्पणे मुकुरादर्शौ व्यजनं तालवृन्तकम् ।

इति नृवर्गः



सन्ततिर्गोत्रजननकुलान्यभिजनान्वयौ । वंशोऽन्ववायः सन्तानो वर्णाः ब्र ७
स्युर्ब्राह्मणादयः ॥ १ ॥ राजबीजी राजवंश्यो बीज्यस्तु कुलसंभवः । म
हाकुलकुलीनार्य्यसभ्यसज्जनसाधवः ॥ २ ॥ ब्रह्मचारी गृही वानप्र
स्थो भिक्षुश्चतुष्टये । आश्रमोऽस्त्री द्विजात्यग्रजन्मभूदेववाडवाः ॥ ३ ॥
विप्रश्च ब्राह्मणोऽसौ षट्कर्मा यागादिभिर्युतः । विद्वान् विपश्चिद्दोषज्ञः स
न्सुधीः कोविदो बुधः ॥ ४ ॥ धीरो मनीषी ज्ञः प्राज्ञः संख्यावान् पण्डितः क
वि: । धीमान्सूरिः कृती कृष्टिर्लब्धवर्णो विचक्षणः ॥ ५ ॥ दूरदर्शी

दीर्घदर्शी श्रोत्रियच्छान्दसौ समौ । उपाध्यायोऽध्यापकः स्यान्नि
षेकादिकृद्गुरुः ॥ ६ ॥ मंत्रव्याख्याकृदाचार्य्य आदेष्टा त्वध्वरे व्रती । य
ष्टा च यजमानश्च स सोमवति दीक्षितः ॥ ७ ॥ इज्याशीलो यायजूको
यज्वा तु विधिनेष्टवान् । स गीष्पतीष्ट्या स्थपतिः सोमपीती तु सोमपः
॥ ८ ॥ सर्व्ववेदाः स येनेष्टो यागः सर्व्वस्वदक्षिणः । अनूचानः प्रवचने
साङ्गेऽधीती गुरोस्तु यः ॥ ९ ॥ लब्धानुज्ञः समावृत्तः सुत्वा त्वभिषवे कृती ।
छात्रान्तेवासिनौ शिष्ये शैक्षाः प्राथमकल्पिकाः ॥ १० ॥ एकब्रह्मव्रता
चारा मिथः सब्रह्मचारिणः । सतीर्थ्यास्त्वेकगुरवः चितवानग्निमग्निचित्
॥ ११ ॥ पारंपर्य्योपदेशे स्यादैतिह्यमितिहाव्ययम् । उपज्ञा ज्ञानमा
द्यं स्यात् ज्ञात्वारम्भ उपक्रमः ॥ १२ ॥ यज्ञः सवोऽध्वरो यागः सप्ततन्तुर्म
खः क्रतुः । पाठो होमश्चातिथीनां सपर्य्या तर्प्पणं बलिः ॥ १३ ॥ एते
पञ्च महायज्ञा ब्रह्मयज्ञादिनामकाः । समज्या परिषद्गोष्ठी सभा स
मितिः संसदः ॥ १४ ॥ आस्थानी क्लीवमास्थानं स्त्रीनपुंसकयोः सदः ।
प्राग्वंशः प्राग्घविर्गेहात्सदस्या विधिदर्शिनः ॥ १५ ॥ सभासदः सभास्ता
राः सभ्याः सामाजिकाश्च ते । अध्वर्य्यूद्गातृहोतारो यजुःसामर्ग्विदः क्रमात्
॥ १६ ॥ आग्नीध्राद्या धनैर्वार्य्या ऋत्विजो याजकाश्च ते । वेदिः परिष्कृ
ता भूमिः समे स्थण्डिलचत्वरे ॥ १७ ॥ चषालो यूपकटकः कुम्बा सुग
हना वृतिः । यूपाग्रं तर्म निर्मन्थ्यदारुणि त्वरणिर्द्वयोः ॥ १८ ॥ दक्षिणा

ग्निर्गार्हपत्याहवनीयौ त्रयोऽग्नयः । अग्नित्रयमिदं त्रेता प्रणीतः संस्कृतो अम २
ऽनलः ॥ १९ ॥ समूह्यपरिचाय्योपचाय्या वह्नौ प्रयोगिणः । योगार्ह ब ७
पत्यादानीय दक्षिणाग्निः प्रणीयते ॥ २० ॥ तस्मिन्नानाय्योऽथाग्नायी स्वा
हा च हुतभुक्प्रिया । ऋक्सामिधेनी धाय्या च या स्यादग्निसमिन्धने
॥ २१ ॥ गायत्रीप्रमुखं छन्दो हव्यपाके चरुः पुमान् । आमिक्षा सा शृतो
ष्णे या क्षीरे स्याद्दधियोगतः ॥ २२ ॥ धुवित्रं व्यजनं तद्यद्रचितं मृगचर्म
णा । पृषदाज्यं सदध्याज्ये परमान्नं तु पायसः ॥ २३ ॥ हव्यकव्ये दैव
पैत्रे अन्ने पात्रं स्रुवादिकम् । ध्रुवोपभृज्जुहूर्ना तु स्रुवो भेदाः स्रुचः स्त्रियः
॥ २४ ॥ उपाकृतः पशुरसौ योऽभिमन्त्र्य क्रतौ हतः । परम्पराकं शमनं
प्रोक्षणं च वधार्थकम् ॥ २५ ॥ वाच्यलिङ्गाः प्रमीतोपसम्पन्नप्रोक्षिता ह
ताः । सान्नाय्यं हविरग्नौ तु हुतं त्रिषु वषट्कृतम् ॥ २६ ॥ दीक्षान्तोऽवभृथो य
ज्ञे तत्कर्मार्हं तु यज्ञियम् । त्रिष्वथ क्रतुकर्मेष्टं पूर्त्तं खातादि कर्म यत् ॥ २७ ॥
अमृतं विघसो यज्ञशेषभोजनशेषयोः । त्यागो विहापितं दानमुत्सर्ज्ज
न विसर्ज्जने ॥ २८ ॥ विश्राणनं वितरणं स्पर्शनं प्रतिपादनम् । प्रादे
शनं निर्वपणमपवर्ज्जनमंहतिः ॥ २९ ॥ मृतार्थं तदहे दानं त्रिषु स्या
दौर्द्ध्वदेहिकम् । पितृदानं निवापः स्यात् श्राद्धं तत्कर्म शास्त्रतः ॥ ३० ॥ अ
न्वाहार्यं मासिकेंऽशोऽष्टमोऽह्नः कुतपोऽस्त्रियाम् । पर्येषणा परीष्टिश्चा
न्वेषणा गवेषणा ॥ ३१ ॥ सनिस्त्वध्येषणा याच्ञाऽभिशस्तिर्याचना

अम२ थेना। षट्तुत्रिष्वर्घ्यमर्घार्थेपाद्यंपाद्यायवारिणि ॥ ३२ ॥ क्रमादाति
ब्र ७ थ्यातिथेये अतिथ्यर्थेऽत्रसाधुनि। स्यादावेशिकआगन्तुरतिथिर्नागृहाग
ते ॥ ३३ ॥ पूजानमस्यापचितिःसपर्य्यार्चार्हणाःसमाः। वरिवस्या
शुश्रूषापरिचर्य्याप्युपासनम् ॥ ३४ ॥ व्रज्याटाट्यापर्य्यटनंचर्य्या
त्वीर्य्यापथस्थितिः। उपस्पर्शस्त्वाचमनमथमौनमभाषणम् ॥ ३५ ॥
आनुपूर्व्वी स्त्रियांवावृत्परिपाटीअनुक्रमः। पर्य्यायश्चातिपातस्तुस्यात्प
र्य्यय उपात्ययः ॥ ३६ ॥ नियमोव्रतमस्त्रीतच्चोपवासादिपुण्यकम्।
औपवस्तंतूपवासोविवेकःपृथगात्मता ॥ ३७ ॥ स्याद्ब्रह्मवर्चसंवृत्ता
ध्ययनर्द्धिरथाञ्जलिः। पाठेब्रह्माञ्जलिःपाठेविप्रुषोब्रह्मबिन्दवः
॥ ३८ ॥ ध्यानयोगासनेब्रह्मासनंकल्पेविधिक्रमौ। मुख्यःस्यात्प्रथ
मःकल्पोऽनुकल्पस्तुततोऽधमः ॥ ३९ ॥ संस्कारपूर्वंग्रहणंस्यादुपाकर
णंश्रुतेः। समेतुपादग्रहणमभिवादनमित्युभे ॥ ४० ॥ भिक्षुःपरिव्रा
ट्कर्मन्दीपाराशर्य्यपिमस्करी। तपस्वीतापसःपारिकाङ्क्षीवाचंयमो
मुनिः ॥ ४१ ॥ तपःक्लेशसहोदान्तोवर्णिनोब्रह्मचारिणः। ऋषयः
सत्यवचसःस्नातकस्त्वाप्लुतव्रती ॥ ४२ ॥ येनिर्जितेन्द्रियग्रामायति
नोयतयश्चते। यःस्थण्डिलेव्रतवशाच्छेतेस्थण्डिलशाय्यसौ ॥ ४३ ॥
स्थाण्डिलश्चाथविरजस्तमसःस्युर्द्वयातिगाः। पवित्रःप्रयतःपूतःपा
षण्डाःसर्वलिङ्गिनः ॥ ४४ ॥ पालाशोदण्डआषाढोव्रतेराम्भस्तुवैणवः

। अव्रीकमं गडलुः कुण्डी व्रतिनामासनं वृषी ॥ ४५ ॥ अजिनं चर्मकृत्तिः अम २
स्त्री भैक्षं भिक्षाकदम्बकम् । स्वाध्यायः स्याज्जपः सुत्याभिषवः सवन ब्र ७
ञ्च सा ॥ ४६ ॥ सर्वैनसामपध्वंसि जप्यं त्रिष्वघमर्षणम् । दर्शश्च पौर्ण
मासश्च यागौ पक्षान्तयोः पृथक् ॥ ४७ ॥ शरीरसाधनापेक्षं नित्यं यत्क
र्मतद्यमः । नियमस्तु स यत्कर्म नित्यमागन्तुसाधनम् ॥ ४८ ॥ उपवी
तं यज्ञसूत्रं प्रोद्धृते दक्षिणे करे । प्राचीनावीतमन्यस्मिन् निवीतं कण्ठल
म्बितम् ॥ ४९ ॥ अङ्गुल्यग्रे दैवं तीर्थं स्वल्पाङ्गुल्योर्मूले कायम् । मध्ये
ऽङ्गुष्ठाङ्गुल्योः पैत्रं मूले त्वङ्गुष्ठस्य ब्राह्मम् ॥ ५० ॥ स्याद्ब्रह्मभूयं ब्रह्मत्वं
ब्रह्मसायुज्यमित्यपि । देवभूयादिकं तद्वत् कृच्छ्रं सान्तपनादिकम्
॥ ५१ ॥ संन्यासवत्यनशने पुमान् प्रायोऽथ वीरहा । नष्टाग्निः कुहना
लोभान्मिथ्येर्यापथकल्पना ॥ ५२ ॥ व्रात्यः संस्कारहीनः स्यादस्वाध्या
यो निराकृतिः । धर्मध्वजी लिङ्गवृत्तिरवकीर्णी क्षतव्रतः ॥ ५३ ॥ सुप्ते
यस्मिन्नस्तमेति सुप्ते यस्मिन्नुदेति च । अंशुमानभिनिर्मुक्ताभ्युदितौ तौ
यथाक्रमम् ॥ ५४ ॥ परिवेत्तानुजोऽनूढे ज्येष्ठे दारपरिग्रहात् । प
रिवित्तिस्तु तज्ज्यायान् विवाहोपयमौ समौ ॥ ५५ ॥ तथा परिणयोद्वाहो
पयमाः पाणिपीडनम् । व्यवायो ग्राम्यधर्मो मैथुनं निधुवनं च सः ॥ ५६ ॥
त्रिवर्गो धर्मकामार्थैश्चतुर्वर्गः समोक्षकैः । सबलैस्तैश्चतुर्भद्रं जन्यास्स्निग्धा
वरस्य ये ॥ ५७ ॥

 इतिब्रह्मवर्गः

* * * * * * * * * * * * * * * * * * * * * * * * * * * * *



मूर्द्धाभिषिक्तोराजन्योबाहुजःक्षत्त्रियोविराट् । राजाराट्पार्थिवक्ष्माभृन्नृपभूपमहीक्षितः ॥ १ ॥ राजातुप्रणताशेषसामन्तःस्यादधीश्वरः । चक्रवर्तीसार्वभौमोनृपोऽन्योमण्डलेश्वरः ॥ २ ॥ येनेष्टंराजसूयेनमण्डलस्येश्वरश्चयः । शास्तियश्चाज्ञयाराज्ञःससम्राडथराजकम् ॥ ३ ॥ राजन्यकंचन्टपतिक्षत्त्रियाणांगणेक्रमात् । मन्त्रीधीसचिवोमात्योऽन्येकर्मसचिवास्ततः ॥ ४ ॥ महामात्राःप्रधानानिपुरोधास्तुपुरोहितः । द्रष्टरिव्यवहाराणांप्राड्विवाकाक्षदर्शकौ ॥ ५ ॥ प्रतीहारेद्वारपालद्वास्थद्वास्थितदर्शकाः । रक्षिवर्गस्त्वनीकस्थोऽथाध्यक्षाधिकृतौसमौ ॥ ६ ॥ स्थायुकोऽधिकृतोग्रामेगोपोग्रामेषुभूरिषु । भौरिकःकनकाध्यक्षोरूप्याध्यक्षस्तुनैष्किकः ॥ ७ ॥ अन्तःपुरेत्वधिकृतःस्यादन्तर्वंशिकोजनः । सौविदल्लाःकञ्चुकिनःस्थापत्याःसौविदाश्चते ॥ ८ ॥ शंढोवर्षवरस्तुल्यौसेवकार्थ्यनुजीविनः । विषयानन्तरोराजाशत्रुर्मित्रमतःपरम् ॥ ९ ॥ उदासीनःपरतरःपार्ष्णिग्राहस्तुपृष्ठतः । रिपौवैरिसपत्नारिद्विषद्द्वेषणदुर्हृदः ॥ १० ॥ द्विड्विपक्षाहितामित्रदस्युशात्रवशत्रवः । अभिघातिपराराति प्रत्यर्थिपरिपन्थिनः ॥ ११ ॥ वयस्यःस्निग्धःसवयाअथमित्रंसखासुहृत् । सख्यंसाप्तपदीनंस्यादनुरोधोऽनुवर्तनम् ॥ १२ ॥

यथार्हवर्णः प्रणिधिरपसर्पश्चरः स्पशः । चारश्च गूढपुरुषश्चाप्तः प्रत्य
यितस्त्रिषु ॥ १३ ॥ सांवत्सरो ज्यौतिषिको दैवज्ञगणकावपि । स्युर्मौहू अमर २
र्त्तिकमौहूर्त्तज्ञानिकार्त्तान्तिका अपि ॥ १४ ॥ तान्त्रिको ज्ञातसिद्धान्तस्स क्ष ८
त्री गृहपतिः समौ । लिपिकरोऽक्षरचणोऽक्षरचञ्चुश्च लेखके ॥ १५ ॥
लिखिताक्षरविन्यासे लिपिर्लिबिरुभे स्त्रियौ । स्यात्संदेशहरो दूतो दूत्यं त
द्भाव कर्मणि ॥ १६ ॥ अध्वनीनोऽध्वगोऽध्वन्यः पान्थः पथिक इत्यपि
। स्वाम्यमात्यसुहृत्कोषराष्ट्रदुर्गबलानि च ॥ १७ ॥ राज्याङ्गानि प्र
कृतयः पौराणां श्रेणयोऽपि च । सन्धिर्ना विग्रहो यानमासनं द्वैधमाश्रयः
॥ १८ ॥ षड्गुणाः शक्तयस्तिस्रः प्रभावोत्साहमन्त्रजाः । क्षयः स्थान
ञ्च वृद्धिश्च त्रिवर्गो नीतिवेदिनाम् ॥ १९ ॥ स प्रतापः प्रभावश्च यत्तेजः
कोषदण्डजम् । भेदो दण्डः साम दानमित्युपायचतुष्टयम् ॥ २० ॥ साह
सन्तु दमो दण्डः साम सान्त्वमथो समौ । भेदोपजापावुपधा धर्माद्यैर्यत्परी
क्षणम् ॥ २१ ॥ पञ्च त्रिष्वषडक्षीणो यस्तृतीयाद्यगोचरः । विविक्तवि
जनच्छन्ननिःशलाकास्तथा रहः ॥ २२ ॥ रहश्चोपांशु चालिङ्गे रह
स्यं तद्भवे त्रिषु । समौ विस्रम्भविश्वासौ भ्रेषो भ्रंशो यथोचितात् ॥ २३ ॥
अभ्रेषन्यायकल्पास्तु देशरूपं समञ्जसम् । युक्तमौपयिकं लभ्यं भज
मानाभिनीतवत् ॥ २४ ॥ न्याय्यं च त्रिषु षट् संप्रधारणा तु समर्थनम्
। अववादस्तु निर्देशो निदेशः शासनं च सः ॥ २५ ॥ शिष्टिश्चाज्ञा च सा

अम २ स्यान्मर्य्यादाधारणास्थितिः । आगोऽपराधोमन्तुश्चसमेतूद्दानबन्धने
क्ष ८ ॥ २६ ॥ द्विपाद्यंद्विगुणोदण्डोभागधेयःकरोबलिः । घट्टादिदेयंशुल्कोऽ
ऽस्त्रीप्राभृतंतुप्रदेशनम् ॥ २७ ॥ उपायनमुपग्राह्यमुपहारस्तथोप
दा । यौतकादितुयद्देयंसुदायोहरणञ्चतत् ॥ २८ ॥ तत्कालस्तुत
दात्वंस्यात्उत्तरःकालआयतिः । सांदृष्टिकंफलंसद्यउदर्कःफलमु
त्तरम् ॥ २९ ॥ अदृष्टंवह्नितोयादिदृष्टंत्वपरचक्रजम् । महीभुजा
महिभयंस्वपक्षप्रभवंभयम् ॥ ३० ॥ प्रक्रियात्वधिकारस्स्याच्चामरं
तुप्रकीर्णकम् । नृपासनंयत्तद्भद्रासनंसिंहासनंतुतत् ॥ ३१ ॥ हैमंछ
त्रन्त्वातपत्रंराज्ञस्तुनृपलक्ष्मतत् । भद्रकुम्भःपूर्णकुम्भोभृङ्गारःकनकालु
का ॥ ३२ ॥ निवेशःशिविरंषंढेसज्जनंतूपरक्षणम् । हस्त्यश्वरथपा
दातंसेनाङ्गंस्याच्चतुष्टयम् ॥ ३३ ॥ दन्तीदन्तावलोहस्तीद्विरदोऽनेक
पोद्विपः । मतङ्गजोगजोनागःकुञ्जरोवारणःकरी ॥ ३४ ॥ इभस्स्त
म्बेरमःपद्मीयूथनाथस्तुयूथपः । मदोत्कटोमदकलःकलभःकरिशाव
कः ॥ ३५ ॥ प्रभिन्नोगर्जितोमत्तःसमावुद्वान्तनिर्मदौ । हास्तिकंगज
तावृन्देकरिणीधेनुकावशा ॥ ३६ ॥ गण्डःकटोमदोदानंवमथुःकरशी
करः । कुम्भौतुपिण्डौशिरसस्तयोर्मध्येविदुःपुमान् ॥ ३७ ॥ अवग्र
हो ललाटंस्यादीषिकात्वक्षिकूटकम् । अपाङ्गदेशोनिर्य्याणंकर्णमूलंतुचू
लिका ॥ ३८ ॥ अधःकुम्भस्यवाहित्थंप्रतिमानमधोऽस्ययत् । आसनं

स्कान्धदेशस्त्वस्य त्पद्मकं बिन्दुजालकम् ॥ ३९ ॥ पक्षभागः पार्श्वभागो द अम २
न्तभागस्तु योग्रतः । द्वौ पूर्वपश्चाज्जंघादिदेशौ गात्रावरे क्रमात् ॥ ४० ॥ तो क्ष ८
यं वेणुकमालानं बन्धस्तम्भोऽथ शृंखले । अन्दुको निगडोऽस्त्री स्यादंकु
शोऽस्त्री सृणिः स्त्रियाम् ॥ ४१ ॥ चूषा कक्ष्या वरत्रा स्यात्कल्पना सज्जना
समे । प्रवेणयास्तरणं वर्णः परिस्तोमः कुथो द्वयोः ॥ ४२ ॥ वीतं त्वसारं
हस्त्यश्वं वारी तु गजबन्धनी । घोटके पीतितुरगतुरंगाश्वतुरंगमाः
॥ ४३ ॥ वाजिवाहार्वगन्धर्वहयसैन्धवसप्तयः । आजानेयाः कुलीनाः
स्युर्विनीताः साधुवाहिनः ॥ ४४ ॥ वानायुजाः पारसीकाः काम्बोजा वाह्लि
काह्वयाः । ययुरश्वोऽश्वमेधीयो जवनस्तु जवाधिकः ॥ ४५ ॥ पृष्ठ्यः
स्थौरी सितः कर्कौ रथ्यो वोढा रथस्य यः । बालः किशोरो वाम्यश्वा वडवा
वडवाङ्गणे ॥ ४६ ॥ त्रिष्वाश्वीनं यदश्वेन दिनेनैकेन गम्यते । कश्य
न्तु मध्यमश्वानां हेषा ह्रेषा च निस्वनः ॥ ४७ ॥ निगालस्तु गलोद्देशो वृ
न्दे त्वश्वीयमाश्ववत् । आस्कन्दितं धौरितकं रेचितं वल्गितं प्लुतम् ॥ ४८ ॥
गतयोमूः पञ्च धारा घोणा तु प्रोथमस्त्रियाम् । कविका तु खलीनोऽस्त्री श
फं क्लीबे खुरः पुमान् ॥ ४९ ॥ पुच्छोऽस्त्री लूमलाङ्गूले वालहस्तश्च वाल
धिः । त्रिषूपावृत्तलुठितौ परावृत्ते मुहुर्भुवि ॥ ५० ॥ याने चक्रिणि युद्धार्थे
शताङ्गः स्यन्दनो रथः । असौ पुष्परथश्चक्रयानं न समराय यत् ॥ ५१ ॥
कर्णीरथः प्रवहणं डयनञ्च समं त्रयम् । क्लीबेऽनः शकटोऽस्त्री स्याद्ग

अम० २ न्त्रीकंबलिवाह्यकम् ॥ ५२ ॥ शिबिकायाप्ययानंस्याद्दोलाप्रेङ्खादिकाःस्त्रि
क्ष ८ याम्। उभौतुद्वैपवैयाघ्रौद्वीपिचर्मावृतेरथे ॥ ५३ ॥ पाण्डुकम्बलसं
वीतःस्यन्दनःपाण्डुकम्बली। रथेकाम्बलवास्त्राद्याःकम्बलादिभिरावृते
॥ ५४ ॥ त्रिषुद्वैपादयोरथ्यारथकट्यारथव्रजे। धूःस्त्रीक्लीबेयानमुखं
स्याद्रथाङ्गमपस्करः ॥ ५५ ॥ चक्रंरथाङ्गंतस्यान्तेनेमिःस्त्रीस्यात्प्रधिः
पुमान्। पिण्डिकानाभिरक्षाग्रकीलकेतुद्वयोरणिः ॥ ५६ ॥ रथगुप्तिर्व
रूथोनाकूबरस्तुयुगन्धरः। अनुकर्षोदार्वधःस्थंप्रासंगोनायुगाद्युगः
॥ ५७ ॥ सर्वंस्याद्वाहनंयानंयुग्यंपत्त्रंचधोरणम्। परम्परावाहनंयत्त
द्वैनीतकमस्त्रियाम् ॥ ५८ ॥ आधोरणाहस्तिपकाहस्त्यारोहानिषादि
नः। नियन्ताप्राजितायन्तासूतःक्षत्ताचसारथिः ॥ ५९ ॥ सव्येष्टृद
क्षिणस्थौचसंज्ञारथकुटुम्बिनः। रथिनःस्यन्दनारोहाअश्वारोहास्तुसा
दिनः ॥ ६० ॥ भटायोधाश्चयोद्धारःसेनारक्षास्तुसैनिकाः। सेनायांस
मवेतायेसैन्यास्तेसैनिकाश्चते ॥ ६१ ॥ बलिनोयेसहस्रेणसाहस्रास्तेस
हस्रिणः। परिधिस्थःपरिचरःसेनानीर्वाहिनीपतिः ॥ ६२ ॥ कञ्चु
कोवारबाणोऽस्त्रीयत्तुमध्येसकञ्चुकाः। बध्नन्तितत्सारसनमधिकाङ्गो
ऽथशीर्षकम् ॥ ६३ ॥ शीर्षण्यञ्चशिरस्त्रेऽथतनुत्रंवर्मदंशनम्। उ
रश्छदःकंकटकोजागरःकवचोऽस्त्रियाम् ॥ ६४ ॥ आमुक्तःप्रतिमुक्त
श्चपिनद्धश्चापिनद्धवत्। सन्नद्धोवर्मितःसज्जोदंशितोव्यूढकंकटः

अमर२
॥ ६५ ॥ त्रिष्वामुक्तादयो वर्मभृतांकावचिकंगणे । पदातिपत्तिपतगपा क्ष ८
दातिकपदाजयः ॥ ६६ ॥ पद्गश्चपदिकश्चाऽथपादातंपत्तिसंहतिः
। शस्त्राजीवेकाण्डस्पृष्टायुधीयायुधिकाःसमाः ॥ ६७ ॥ कृतहस्तःसुप्र
योगविशिखःकृतपुंखवत् । अपराद्धपृषत्कोसौलक्ष्याद्यश्च्युतसायकः
॥ ६८ ॥ धन्वीधनुष्मान्धानुष्कोनिषङ्ग्यस्त्रीधनुर्द्धरः । स्यात्काण्ड
वाँस्तुकाण्डीरःशाक्तीकःशक्तिहेतिकः ॥ ६९ ॥ याष्टीकपारश्वधिकौय
ष्टिपरश्वधहेतिकौ । नैस्त्रिंशिकोऽसिहेतिस्स्यात्समौप्रासिककौन्तिकौ
॥ ७० ॥ चर्मीफलकपाणिस्स्यात्पताकीवैजयन्तिकः । अनुप्लवः
सहायश्चानुचरोऽभिसरःसमाः ॥ ७१ ॥ पुरोगाग्रेसरःप्रष्ठाग्रतः
सरपुरःसराः । पुरोगमःपुरोगामीमन्दगामीतुमन्थरः ॥ ७२ ॥ जं
घालोऽतिजवस्तुल्यौजंघाकरिकजांघिकौ । तरस्वीत्वरितोवेगीप्रज
वीजवनोजवः ॥ ७३ ॥ जय्योयःशक्यतेजेतुंजेयोजेतव्यमात्रके ।
जैत्रस्तुजेतायोगच्छत्यलंविद्विषतःप्रति ॥ ७४ ॥ सोभ्यमित्रोऽभ्यमि
त्रीयोऽप्यभ्यमित्रीणइत्यपि । ऊर्ज्जस्वलस्यादूर्ज्जस्वीयऊर्ज्जोतिश
यान्वितः ॥ ७५ ॥ स्यादुरस्वानुरसिलोरथिकोरथिरोरथी । कामंगाम्य
नुगामीनोह्यत्यन्तीनस्तथाभृशम् ॥ ७६ ॥ शूरोवीरश्चविक्रान्तोजेता
जिष्णुश्चजित्वरः । सांयुगीनोरणेसाधुःशस्त्राजीवादयस्त्रिषु ॥ ७७ ॥
ध्वजिनीवाहिनीसेनापृतनाऽनीकिनीचमूः । वरूथिनीबलंसैन्यंचक्रं

अम२ षानीकमस्त्रियाम् ॥ ७८ ॥ व्यूहस्तु बलविन्यासे भेदा दण्डादयो यु
क्ष ८ धि । प्रत्यासारो व्यूहपार्ष्णिः सैन्यपृष्ठे प्रतिग्रहः ॥ ७९ ॥ एकेभैकर
थात्र्यश्वा पत्तिः पञ्चपदातिका । पत्त्यङ्गैस्त्रिगुणैः सर्वैः क्रमादाख्या यथो
त्तरम् ॥ ८० ॥ सेनामुखं गुल्मगणौ वाहिनी पृतना चमूः । अनीकिनी द
शानीकिन्यक्षौहिण्यथ सम्पदि ॥ ८१ ॥ सम्पत्तिः श्रीश्च लक्ष्मीश्च वि
पत्त्यां विपदापदौ । आयुधन्तु प्रहरणं शस्त्रमस्त्रमथास्त्रियाम् ॥ ८२ ॥
धनुश्चापौ धन्वशरासनकोदण्डकार्मुकम् । इष्वासोऽप्यथ कर्णस्य काल
पृष्ठं शरासनम् ॥ ८३ ॥ कपिध्वजस्य गाण्डीवगाण्डिवौ पुन्नपुंसकम्
। कोटिरस्याटनी गोधातले ज्याघातवारणे ॥ ८४ ॥ लस्तकस्तु धनुर्मध्य
मौर्वी ज्या शिञ्जिनी गुणः । स्यात्प्रत्यालीढमालीढमित्यादि स्थानपञ्चकम्
॥ ८५ ॥ लक्ष्यं लक्षं शरव्यञ्च शराभ्यास उपासनम् । पृषत्कबाण
विशिखा अजिह्मगखगाशुगाः ॥ ८६ ॥ कलम्बमार्गणशराः पत्री रो
प इषुर्द्वयोः । प्रक्ष्वेडनास्तु नाराचाः पक्षो वाजस्त्रिषूत्तरे ॥ ८७ ॥ नि
रस्तः प्रहिते बाणे विषाक्ते दिग्धलिप्तकौ । तूणोपासंगतूणीरनिषङ्गा इषुधि
र्द्वयोः ॥ ८८ ॥ तूण्यां खड्गे तु निस्त्रिंशचन्द्रहासासिरिष्टयः । कौक्षेय
को मण्डलाग्रः करवालः कृपाणवत् ॥ ८९ ॥ त्सरुः खड्गादिमुष्टौ
स्यान्मेखला तन्निबन्धनम् । फलकोऽस्त्री फलं चर्म संग्राहो मुष्टिरस्य यः
॥ ९० ॥ द्रुघणो मुद्गरघनौ स्यादीली करवालिका । भिन्दिपालः सृगल

ल्यैपरिघः परिघातनः ॥ ९१ ॥ द्वयोः कुठारः स्वधितिः परशुश्चपरश्व अम २
धः । स्याच्छस्त्री चासिपुत्री चक्षुरिकाचासिधेनुका ॥ ९२ ॥ वापुंसिशल्यं क्ष ८
शंकुर्नाशर्व्वलानोमरोऽस्त्रियाम् । प्रासस्तुकुन्तः कोणास्तुस्त्रियः पाल्यश्रिकोः
टयः ॥ ९३ ॥ सर्व्वाभिसारः सर्व्वौघः सर्व्वसन्नहनार्थकः । लोहाभिसारो
ऽस्त्रभृतांराज्ञांनीराजनाविधिः ॥ ९४ ॥ यत्सेनयाभिगमनमरौ तदभिषेणा
नम् । यात्राव्रज्याभिनिर्य्याणंप्रस्थानंगमनंगमः ॥ ९५ ॥ स्यादासारः
प्रसरणंप्रचक्रंचलितार्थकम् । अहितान्प्रत्यभीतस्यरणेयानमनिक्रमः
॥ ९६ ॥ वैतालिकाबोधकराश्चाक्रिकाघाण्टिकार्थकाः । स्युर्मागधास्तु
मधुकावन्दिनस्स्तुतिपाठकाः ॥ ९७ ॥ संशप्तकास्तुसमयात्संग्रामादनि
वर्त्तिनः । रेणुर्द्वयोःस्त्रियांधूलिःपांशुर्न्नानद्वयोरजः ॥ ९८ ॥ चूर्णे
क्षोदः समुत्पिञ्जपिञ्जलौभृशमाकुले । पताकावैजयन्तीस्यात्केतनंध्वज
मस्त्रियाम् ॥ ९९ ॥ सावीरआशंसनंयुद्धभूमिर्योतिभयप्रदा । अहंपूर्व
महंपूर्वमित्यहंपूर्विकास्त्रियाम् ॥ १०० ॥ आहोपुरुषिकादर्प्पाद्यास्या
त्संभावनात्मनि । अहमहमिकातुसास्यात्परस्परंयोभवत्यहंकारः
॥ १०१ ॥ द्रविणंतरःसहोवलशौर्य्याणिस्थामशुष्मंच । शक्तिःप
राक्रमप्राणौविक्रमस्त्वतिशक्तिता ॥ १०२ ॥ वीरपाणन्तुयत्पानंवृत्तेभा
विनिवारणे । युद्धमायोधनञ्जन्यम्प्रधनम्प्रविदारणम् ॥ १०३ ॥ मृ
धमास्कन्दनंसंख्यंसमीकंसाम्परायिकम् । अस्त्रियांसमरानीकरणाः

अम०२ कलहविग्रहौ ॥ १०४ ॥ सम्प्रहाराभिसम्पातकलिसंस्फोटसंयुगाः ।
क्षं ८ अभ्यामर्दसमाघातसंग्रामाभ्यागमाहवाः ॥ १०५ ॥ समुदायः स्त्रियां सं
यँत्समित्याजिसमिद्युधः । नियुद्धं बाहुयुद्धेऽथ तुमुलं रणसंकुले
॥ १०६ ॥ विस्फारो धनुषः स्वानः पटहाडम्बरौ समौ । प्रसभं तु बला
त्कारो हठोऽथ स्खलितं छलम् ॥ १०७ ॥ अजन्यं क्लीबमुत्पात उपस
र्गः समं त्रयम् । मूर्च्छा तु कश्मलं मोहोऽप्यवमर्दस्तु पीडनम् ॥ १०८ ॥
अभ्यवस्कन्दनं त्वभ्यासादनं विजयो जयः । वैरशुद्धिः प्रतीकारो वैर
निर्यातनं च सा ॥ १०९ ॥ प्रद्रावोद्द्रावसंद्रावसंदावा विद्रवो द्रवः ।
अपक्रमोऽपयानं च रणे भङ्गः पराजयः ॥ ११० ॥ पराजितपराभूतौ
त्रिषु नष्टतिरोहितौ । प्रमापणं निबर्हणं निकारणं निशारणम् ॥ १११ ॥
प्रवासनं परासनं निषूदनं निहिंसनम् । निर्वासनं संज्ञपनं निर्ग्रन्थनमपा
सनम् ॥ ११२ ॥ निस्तर्हणं निहननं क्षणनं परिवर्ज्जनम् । निर्वापणं वि
शसनं मारणं प्रतिघातनम् ॥ ११३ ॥ उद्वासनप्रमथनक्रथनो
ज्ज्वासनानि च । आलम्भपिञ्जविशरघातोन्माथवधा अपि ॥ ११४ ॥
स्यात्पञ्चता कालधर्मो दिष्टान्तः प्रलयोऽत्ययः । अन्तो नाशो द्वयोर्मृत्यु
र्मरणं निधनोऽस्त्रियाम् ॥ ११५ ॥ परासुः प्राप्तपञ्चत्वपरेतप्रेतसंस्थि
ताः । मृतप्रमीतौ त्रिष्वेते चिता चित्या चितिः स्त्रियाम् ॥ ११६ ॥ कबन्धो
ऽस्त्री क्रियायुक्तमपमूर्द्धकलेवरम् । श्मशानं स्यात्पितृवनं कुणपः शव

मस्त्रियाम् ॥ ११७ ॥ प्रग्रहोपग्रहौबंद्यांङ्कारस्याद्बन्धनालये । पुंसि अम २
भून्म्यसवः प्राणाश्चैवंजीवोऽसुधारणम् ॥ ११८ ॥ आयुर्जीवितकालो क्ष ८
नाजीवातुर्जीवनौषधम् ।

इतिक्षत्रियवर्गः

❁❁❁❁❁❁❁❁❁❁❁❁❁❁❁❁❁❁❁❁❁❁❁❁❁

ऊरव्याऊरुजाअर्य्यावैश्याभूमिस्पृशोविशः । आजीवोजीविकावार्त्तावृ वै ९
त्तिर्वर्तनजीवने ॥ १ ॥ स्त्रियांकृषिःपाशुपाल्यंवाणिज्यञ्चेतिवृत्तयः ।
सेवाश्ववृत्तिरनृतंकृषिरुञ्छशिलंत्वृतम् ॥ २ ॥ द्वेयाचितायाचितयोर्य
थासंख्यंमृतामृते । सत्यानृतंवणिग्भावःस्यादृणंपर्य्युदञ्चनम् ॥ ३ ॥
उद्धारोऽर्थप्रयोगस्तुकुसीदंवृद्धिजीविका । याञ्चयाप्तंयाचितकंनिय
मादापमित्यकम् ॥ ४ ॥ उत्तमर्णाधमर्णौद्वौप्रयोक्तृग्राहकौक्रमात् ।
कुसीदिकोवार्द्धुषिकोवृद्ध्याजीवश्चवार्द्धुषिः ॥ ५ ॥ क्षेत्राजीवःकर्षकश्च
कृषिकश्चकृषीवलः । क्षेत्रंवैहेयशालेयंव्रीहिशाल्युद्भवोचितम् ॥ ६ ॥
यव्यंयवक्यंषष्टिक्यंयवादिभवनंह्नियत् । तिल्यंतैलीनवन्माषोमाणुभं
गाह्निरूपता ॥ ७ ॥ मौद्गीनंकोद्रवीणादिशेषधान्योद्भवोचितम् । बी
जाकृतंतूप्तकृष्टेसीत्यंकृष्टञ्चहल्यवत् ॥ ८ ॥ त्रिगुणाकृतंतृतीयाकृतं
त्रिहल्यंत्रिसीत्यमपितस्मिन् । द्विगुणाकृतेतुसर्वंपूर्वंसम्बाकृतमपीह
॥ ९ ॥ द्रोणाढकादिवापादौद्रौणिकाढकिकादयः । खारीवापस्तुखारी

अम२ कंउत्तमर्णादयस्त्रिषु ॥१०॥ पुन्नपुंसकयोर्वप्रः केदारः क्षेत्रमस्य तु । के
वै ९ दारकं स्यात्कैदार्यं क्षेत्रं कैदारिकं गणे ॥११॥ लोष्टानि लेष्टवः पुंसि को
टिशो लोष्टभेदनः । प्राजनं तोदनं तोत्रं खनित्रमवदारणे ॥१२॥ दा
त्रं लवित्रमाबन्धो योत्रं योक्त्रमथो फलम् । निरीशं कूटकं फालः कृषिको
लाङ्गलं हलम् ॥१३॥ गोदारणं च सीरोऽथ शम्या स्त्री युगकीलकम्
। ईषा लाङ्गलदण्डः स्यात्सीता लाङ्गलपद्धतिः ॥१४॥ पुंसि मेधिः ख
ले दारु न्यस्तं यत्पशुबन्धने । आशुर्व्रीहिः पाटलः स्याच्छितशूकय
वौ समौ ॥१५॥ तोक्मस्तु तत्र हरिते कलायस्तु सतीलकः । हरेणुख
ण्डिकौ चास्मिन्कोरदूषस्तु कोद्रवः ॥१६॥ मङ्गल्यको मसूरोऽथ मु
कुष्टकमपुष्टकौ । वनमुद्गे सर्षपे तु द्वौ तन्तुभकदम्बकौ ॥१७॥ सिद्धा
र्थस्त्वेष धवलो गोधूमः सुमनः समौ । स्याद्यावकस्तु कुल्माषश्चणको हरि
मन्थजः ॥१८॥ द्वौ तिले तिलपेजश्च तिलपिञ्जश्च निष्फले । क्षवः क्षुधा
भिजननो राजिका कृष्णिकासुरी ॥१९॥ स्त्रियौ कङ्गुप्रियङ्गू द्वे अत
सी स्यादुमा क्षुमा । मातुलानी तु भङ्गायां व्रीहिभेदस्त्वणुः पुमान् ॥२०॥
किंशारुः शस्यशूकं स्यात्कणिशं शस्यमञ्जरी । धान्यं व्रीहिः स्तम्बकरिः
स्तम्बो गुच्छस्तृणादिनः ॥२१॥ नाडी नालं च काण्डोऽस्य पलालोऽस्त्री
स निष्फलः । कडङ्गरो बुसं क्लीबे धान्यत्वचि पुमाँस्तुषः ॥२२॥ शूकोऽ
स्त्री श्लक्ष्णतीक्ष्णाग्रे शमी सिम्बा त्रिषूत्तरे । ऋद्धमावसितं धान्यं पूतं तु बहु

लीव्रतम् ॥ २३ ॥ माषादयः शमीधान्येशूकधान्येयवादयः । शालयः अमर २
कलमाद्याश्चषष्टिकाद्याश्चपुंस्यमी ॥ २४ ॥ तृणधान्यानिनीवाराः स्त्रीग वै ९
वेधुर्गवेधुका । अयोग्रंमुसलोऽस्त्रीस्यादुदूखलमुलूखलम् ॥ २५ ॥ प्र
स्फोटनंशूर्पमस्त्रीचालनीतितउःपुमान् । स्यूतप्रसेवौकण्डोलपिटौ
कटकिलिञ्जकौ ॥ २६ ॥ समानौरसवत्यान्तुपाकस्थानमहानसे ।
पौरोगवस्तदध्यक्षःसूपकारास्तुवल्लवाः ॥ २७ ॥ आरालिकाआन्ध
सिकाःसूदाऔदनिकागुणाः । आपूपिकःकान्दविकोभक्ष्यकारइमेत्रि
षु ॥ २८ ॥ अश्मन्तमुद्धानमधिश्रयणीचुल्लिरन्तिका । अङ्गारधा
निकाङ्गारशकट्यपिहसन्त्यपि ॥ २९ ॥ हसन्यप्यथनस्त्रीस्यादङ्गा
रेलातमुल्मुकम् । क्लीवेऽम्बरीषंभ्राष्ट्रोनाकन्दुर्वास्वेदिनीस्त्रियाम् ॥ ३० ॥
अलिञ्जरःस्यान्मणिकंकर्कर्य्यालूर्गलन्तिका । पिठरःस्थाल्युखाकुण्डंक
लशस्तुत्रिषुद्वयोः ॥ ३१ ॥ घटःकुटनिपावस्त्रीशरावोवर्द्धमानकः । ऋट
जीषंपिष्टपचनंकंसोऽस्त्रीपानभाजनम् ॥ ३२ ॥ कुतूःकृत्तेःस्नेहपात्रे
सैवाल्पाकुतुपःपुमान् । सर्व्वमावपनंभाण्डंपात्रामत्रेचभाजनम् ॥ ३३ ॥
दर्विःकम्बिःखजाकाचस्यात्तर्दूर्दारुहस्तकः । अस्त्रीशाकंहरितकंशि
ग्रुरस्यतुनाडिका ॥ ३४ ॥ कडम्बश्चकलम्बश्चवेसवारउपस्करः । तिं
तिडीकाञ्चचुक्राञ्चवृक्षाम्लमथवेल्लजम् ॥ ३५ ॥ मरिचंकोलकंकृष्ण
मूषणंधर्मपत्तनम् । जीरकोजरणोऽजाजीकणाकृष्णेतुजीरके ॥ ३६ ॥

अमर २ सुषवीकारवीपृथ्वीपृथुःकालोपकुञ्चिका। आर्द्रकंशृङ्गवेरंस्यादथच्छ
वै ९ त्राविुतुन्नकम्॥ ३७॥ कुस्तुम्बुरुचधन्याकमथशुण्ठीमहौषधम्। स्त्री
नपुंसकयोर्विश्वंनागरंविश्वभेषजम्॥ ३८॥ आरनालकसौवीरकु
ल्माषाभिषुतानिच। अवन्तिसोमधान्याम्लकुञ्जलानिचकाञ्जिके॥ ३९॥
सहस्रवेधिजतुकंबाह्लीकंहिङ्गुरामठम्। तत्पत्रीकारवीपृथ्वीबाष्पिकाक
बरीपृथुः॥ ४०॥ निशाह्वाकाञ्चनीपीताहरिद्रावरवर्णिनी। सामुद्रंयत्
तुलवणमक्षीबंवशिरञ्चतत्॥ ४१॥ सैन्धवोऽस्त्रीशीतशिवंमाणि
मन्थञ्चसिन्धुजे। रौमकंवसुकंपाक्यंविडञ्चकृतकेद्वयम्॥ ४२॥ सौव
र्चलेऽक्षंरुचकेतिलकंतत्रमेचके। मत्स्यण्डीफाणितंखण्डविकारेशर्क
रासिता॥ ४३॥ कूर्चिकाक्षीरविकृतिःस्याद्रसालातुमार्जिता। स्यात्तेम
नंतुनिष्ठानंत्रिलिङ्गावासितावधेः॥ ४४॥ शूलाकृतंभटित्रंस्याच्छूल्यमू
ख्यन्तुपैठरम्। प्रणीतमुपसम्पन्नंप्रयस्तंस्यात्सुसंस्कृतम्॥ ४५॥ स्यात्पि
च्छिलन्तुविजिलंसंमृष्टंशोधितंसमे। चिक्कणंमसृणंस्निग्धंतुल्येभावितवासि
ते॥ ४६॥ आपक्वंपौलिरभ्यूषोलाजाःपुंभूम्निचाक्षताः। पृथुकःस्याच्चि
पिटकोधानाभृष्टयवेस्त्रियाम्॥ ४७॥ पूपोऽपूपःपिष्टकःस्यात्करम्भोदधि
सक्तवः। भिस्सास्त्रीभक्तमन्धोऽन्नमोदनोऽस्त्रीसदीदिविः॥ ४८॥
भिस्सटादग्धिकासर्वरसाग्रेमण्डमस्त्रियाम्। मासराचामनिस्रावामण्डे
भक्तसमुद्भवे॥ ४९॥ यवागूरुष्णिकाश्राणाविलेपीतरलाचसा। गव्यं

त्रिषु गवां सर्वं गोविड्गोमयमस्त्रियाम् ॥ ५० ॥ तत्तु शुष्कं करीषोऽस्त्री दु अम २
ग्धं क्षीरं पयः समम् । पयस्यमाज्यदध्यादि द्रप्सं दधि घनेतरत् ॥ ५१ ॥ वै ९
घृतमाज्यं हविः सर्पिर्नवनीतं नवोद्धृतम् । तत्तु हैयंगवीनं यद्ध्योगोदो
होद्भवं घृतम् ॥ ५२ ॥ दण्डाहतं कालशेयमरिष्टमपि गोरसः । तक्रं ह्यु
दश्विन्मथितं पादाम्ब्वर्धाम्बु निर्जलम् ॥ ५३ ॥ मण्डं दधिभवं मस्तु पीयूषो
ऽभिनवं पयः । अशनाया बुभुक्षा क्षुद्ग्रासस्तु कवलार्थकः ॥ ५४ ॥ सपीतिः
स्त्री तुल्यपानं सग्धिः स्त्री सहभोजनम् । उदन्या तु पिपासा तृट् तर्षो जग्धिस्तु
भोजनम् ॥ ५५ ॥ जेमनं लेह आहारो निघसो न्याद इत्यपि । सौहि
त्यं तर्पणं तृप्तिः फेला भुक्तसमुज्झितम् ॥ ५६ ॥ कामं प्रकामं पर्याप्तं निकामेष्टं य
थेप्सितम् । गोपे गोपालगोसंख्यगोधुगाभीरवल्लवाः ॥ ५७ ॥ गोमहिष्यादि
कं पादबन्धनं द्वौ गवीश्वरे । गोमान् गोमी गोकुलं तु गोधनं स्याद्गवां व्रजः
॥ ५८ ॥ त्रिष्वाशितंगवीनं तद्गावो यत्राशिताः पुरा । उक्षा भद्रो बली
वर्द ऋषभो वृषभो वृषः ॥ ५९ ॥ अनड्वान् सौरभेयो गौरुक्ष्णां संहतिरौ
क्षकम् । गव्या गोत्रा गवां वत्सधेन्वोर्वात्सकधेनुके ॥ ६० ॥ वृषो महान्
महोक्षः स्याद्वृद्धोक्षस्तु जरद्गवः । उत्पन्न उक्षा जातोक्षः सद्योजातस्तु
तर्णकः ॥ ६१ ॥ शकृत्करिस्तु वत्सः स्याद्दम्यवत्सतरौ समौ । आर्षभ्यः
षण्डतायोग्यः षण्डो गोपतिरिट्चरः ॥ ६२ ॥ स्कन्धप्रदेशस्तु व
हः सास्ना तु गलकम्बलः । स्यान्नस्तितस्तु नस्योतः प्रष्ठवाड्युगपार्श्व

अमर २ गः ॥ ६३ ॥ युगादीनाञ्च वोढारो युग्य प्रासंग्य शाकटाः । खनति तेन
वै ९ तद्वोढास्येदं हालिक सैरिकौ ॥ ६४ ॥ धुर्वहे धुर्य्य धौरेय धुरीणाः सधु
रन्धराः । उभावेकधुरीणैकधुरावेकधुरावहे ॥ ६५ ॥ सतु सर्वधुरीणो
योभवेत्सर्वधुरावहः । माहेयी सौरभेयी गौरुस्रा माता च शृङ्गिणी ॥ ६६ ॥
अर्जुन्यघ्न्या रोहिणी स्यादुत्तमा गोषु नैचिकी । वर्णादिभेदात्संज्ञाः स्युः शब
लीधवलादयः ॥ ६७ ॥ द्विहायनी द्विवर्षा गौरेकाब्दात्वेकहायनी । वशा वं
ध्याऽवतोका तु स्रवद्गर्भाऽथ सन्धिनी ॥ ६८ ॥ आक्रान्ता वृषभेणाऽथ वे
हद्गर्भोपघातिनी । काल्योपसर्य्या प्रजने प्रष्ठौही बालगर्भिणी ॥ ६९ ॥
स्यादचण्डी तु सुकरा बहुसूतिः परेष्टुका । चिरप्रसूता बष्कयणी धेनुस्स्या
न्नवसूतिका ॥ ७० ॥ सुव्रता सुखसंदोह्या पीनोध्नी पीवरस्तनी । द्रोण
क्षीरा द्रोणदुग्धा धेनुष्या बन्धके स्थिता ॥ ७१ ॥ समांसमीना सा यैव प्रतिवर्षं
प्रसूयते । ऊधस्तु क्लीबमापीनं समौ शिवककीलकौ ॥ ७२ ॥ नपुं
सि दाम सन्दानं पशुरज्जुस्तु दामनी । वैशाखमंथमन्थान मन्था मन्थनदण्ड
के ॥ ७३ ॥ कुठरो दण्डविष्कम्भो मन्थनी गर्गरी समे । उष्ट्रे क्रमेल
क मय महाङ्गाः करभः शिशुः ॥ ७४ ॥ करभाः स्युः शृङ्खलका दारवैः
पादबन्धनैः । अजाछागी तु भच्छाग बस्त छगलका अजे ॥ ७५ ॥
मेढ्रोरभ्रोरणोर्णायु मेष वृष्णय एडके । उष्ट्रोरभ्राजवृन्दे स्यादौष्ट्रकौ
रभ्रकाजकम् ॥ ७६ ॥ चक्रीवन्तस्तु वालेया रासभा गर्दभाः खराः ।

वैदेहकः सार्थवाहो नैगमो वाणिजो वणिक् ॥ ७७ ॥ पण्याजीवो ह्या अमर २
पणिकः क्रयविक्रयिकश्च सः । विक्रेता स्याद्विक्रयिकः क्रायकः क्रयि वै ९
कः समौ ॥ ७८ ॥ वाणिज्यं तु वणिज्या स्यान्मूल्यं वस्नोऽप्यवक्रयः ।
नीवी परिपणं मूलधनं लाभोऽधिकम्फलम् ॥ ७९ ॥ परिदानं प
रीवर्त्तो नैमेयनिमयावपि । पुमानुपनिधिर्न्यासः प्रतिदानन्तदर्पणम्
॥ ८० ॥ क्रये प्रसारितं क्रय्यं क्रेयं क्रेतव्यमात्रके । विक्रेयं पणितव्यञ्च
पण्यं क्रय्यादयस्त्रिषु ॥ ८१ ॥ क्लीबे सत्यापनं सत्यंकारः सत्याकृतिः स्त्रि
याम् । विपणो विक्रयः संख्याः संख्येये ह्यादश त्रिषु ॥ ८२ ॥ विंशत्याद्याः
सदैकत्वे सर्वाः संख्येयसंख्ययोः । संख्यार्थे द्विबहुत्वे स्तस्तासु चानवतेः स्त्रि
यः ॥ ८३ ॥ पङ्क्तेः शतसहस्रादि क्रमाद्दशगुणोत्तरम् । यौतवं द्रुव
यं पाय्यमिति मानार्थकन्त्रयम् ॥ ८४ ॥ मानं तुलाङ्गुलिप्रस्थैर्गुञ्जाः पञ्चा
द्यमाषकः । ते षोडशाक्षः कर्षोऽस्त्री पलं कर्षचतुष्टयम् ॥ ८५ ॥ सुवर्ण
बिस्तौ हेम्नोऽक्षे कुरुविस्तस्तु तत्पले । तुलास्त्रियाम्पलशतम्भारः स्याद्विं
शतिस्तुलाः ॥ ८६ ॥ आचितं दश भाराः स्युः शाकटो भार आचितः । कार्षा
पणः कार्षिकः स्यात्कार्षिके ताम्रिके पणः ॥ ८७ ॥ अस्त्रियामाढकद्रोणौ खा
रीवाहो निकुञ्चकः । कुडवप्रस्थ इत्याद्याः परिमाणार्थकाः पृथक् ॥ ८८ ॥
पादस्तुरीयः पादः स्यादंशभागौ तु वण्टकः । द्रव्यं वित्तं स्वापतेयं रिक्थमृ
क्थं धनं वसु ॥ ८९ ॥ हिरण्यन्द्रविणं द्युम्नमर्थ रै विभवा अपि । स्यात्को

अमर २ शश्चहिरण्यञ्च द्वे हेमरूप्ये कृताकृते ॥ ९० ॥ ताभ्यांयदन्यत्तत्कुप्यंरू
वै ९ प्यन्तद्द्वयमाहतम्। गारुत्मतंमरकतमश्मगर्भोहरिन्मणिः ॥ ९१ ॥
शोणरत्नंलोहितकःपद्मरागोऽथमौक्तिकम्। मुक्ताऽथविद्रुमःपुंसिप्रवा
लंपुंनपुंसकम् ॥ ९२ ॥ रत्नंमणिर्द्वयोरश्मजातौमुक्तादिकेपिच। स्वर्णंसु
वर्णंकनकंहिरण्यंहेमहाटकम् ॥ ९३ ॥ तपनीयंशातकुम्भंगाङ्गेयंभर्मकर्बु
रम्। चामीकरंजातरूपंमहारजतकाञ्चने ॥ ९४ ॥ रुक्मङ्कार्तस्व
रंजाम्बूनदमष्टापदोऽस्त्रियाम्। अलङ्कारसुवर्णंयच्छृङ्गीकनकमि
त्यदः ॥ ९५ ॥ दुर्वर्णंरजतंरूप्यङ्खर्जूरंश्वेतमित्यपि। रीतिःस्त्रिया
मारकूटोनस्त्रियामथताम्रकम् ॥ ९६ ॥ शुल्वंम्लेच्छमुखंद्व्यष्टवरिष्ठो
दुम्बराणिच। लोहोऽस्त्रीशस्त्रकंतीक्ष्णंपिण्डकालायसायसी ॥ ९७ ॥
अश्मसारोऽथमण्डूरंसिंहाणमपितन्मले। सर्वंचतैजसंलोहंविका
रस्त्वयसःकुशी ॥ ९८ ॥ क्षारःकाचोऽथचपलोरसःसूतश्चपारदे
। गवलंमाहिषंशृङ्गमभ्रकंगिरिजामले ॥ ९९ ॥ स्रोतोऽञ्जनन्तु
सौवीरंकापोताञ्जनयामुनम्। तुत्थाञ्जनंशिखिग्रीवंवितुन्नकमयूरके
॥ १०० ॥ कर्परीदार्विकाक्वाथोद्भवंतुत्थंरसाञ्जनम्। रसगर्भंतार्क्ष्यशैलं
गन्धाश्मनितुगन्धिकः ॥ १०१ ॥ सौगन्धिकश्चचक्षुष्याकुलाल्यौतुकुल
त्थिका। रीतिपुष्पंपुष्पकेतुपौष्पकंकुसुमाञ्जनम् ॥ १०२ ॥ पिञ्जरंपीत
नन्तालमालंचहरितालके। गैरेयमर्थ्यंगिरिजमश्मजञ्चशिलाजतु

॥ १०३ ॥ बोलगन्धरसप्राणपिण्डगोपरसाः समाः । डिण्डीरोऽब्धिक अमर
फः फेनः सिन्दूरं नागसम्भवम् ॥ १०४ ॥ नागसीसकयोगेष्टवप्राणि वै ९
त्रपुपिच्चटम् । रङ्गवङ्गेऽथपिचुस्तूलोऽथकमलोत्तरम् ॥ १०५ ॥
स्यात्कुसुम्भं वह्निशिखंमहारजनमित्यपि । मेषकम्बलऊर्णायुः श
शोर्णं शशलोमनि ॥ १०६ ॥ मधुक्षौद्रंमाक्षिकादिमधूच्छिष्टंतुसिक्थ
कम् । मनःशिलामनोगुप्तामनोह्वानागजिह्विका ॥ १०७ ॥ नैपालीकुन
टीगोलायवक्षारोयवाग्रजः । पाक्योऽथसर्जिकाक्षारःकापोतःसुखव
र्चकः ॥ १०८ ॥ सौवर्चलंस्याद्रुचकंत्वक्क्षीरीवंशरोचना । शिग्रुजंश्वे
तमरिचंमोरटंमूलमैक्षवम् ॥ १०९ ॥ ग्रन्थिकंपिप्पलीमूलंचटिकाशि
र इत्यपि । गोलोमीभूतकेशोनापत्राङ्गंरक्तचन्दनम् ॥ ११० ॥ त्रिक

टुत्र्युषणंव्योषंत्रिफलातुफलत्रिकम् ।

इति वैश्यवर्गः

****इ*****************

शूद्राश्चावरवर्णाश्चवृषलाश्चजघन्यजाः । आचण्डालात्तुसंकीर्णाअ शू १०
म्बष्ठकरणादयः ॥ १ ॥ शूद्राविशोस्तुकरणोऽम्बष्ठोवैश्याद्द्विजन्म
नः । शूद्राक्षत्रिययोरुग्रोमागधःक्षत्रियाविशोः ॥ २ ॥ माहिष्योऽ
र्याक्षत्रिययोःक्षत्तार्याशूद्रयोःसुतः । ब्राह्मण्यांक्षत्रियात्सूतस्तस्यां
वैदेहकोविशः ॥ ३ ॥ रथकारस्तुमाहिष्यात्करण्यांयस्यसम्भवः । स्या

चाण्डालस्तु जनितो ब्राह्मण्यां वृषलेन यः ॥ ४ ॥ कारुः शिल्पी संहतै
स्तैर्द्वयोः श्रेणिः सजातिभिः । कुलकः स्यात्कुलश्रेष्ठी मालाकारस्तु मालिकः
॥ ५ ॥ कुम्भकारः कुलालः स्यात्पलगण्डस्तु लेपकः । तन्तुवायः कुवि
न्दः स्यात्तुन्नवायस्तु सौचिकः ॥ ६ ॥ रङ्गाजीवश्चित्रकरः शस्त्रमार्जो
ऽसिधावकः । पादूकृच्चर्मकारः स्याद्व्योकारो लोहकारकः ॥ ७ ॥ नाडी
न्धमः स्वर्णकारः कलादो रुक्मकारके । स्याच्छाङ्खिकः काम्बविकः शौल्बिक
स्ताम्रकुट्टकः ॥ ८ ॥ तक्षा तु वर्धकिस्त्वष्टा रथकारश्च काष्ठतट् ।
ग्रामाधीनो ग्रामतक्षः कौटतक्षोऽनधीनकः ॥ ९ ॥ क्षुरी मुण्डी दिवा
कीर्तिनापितान्तावसायिनः । निर्णेजकः स्याद्रजकः शौण्डिको मण्डहा
रकः ॥ १० ॥ जाबालः स्यादजाजीवो देवाजीवस्तु देवलः । स्यान्माया
शाम्बरी मायाकारस्तु प्रातिहारिकः ॥ ११ ॥ शैलालिनस्तु शैलूषा जाया
जीवाः कृशाश्विनः । भरता इत्यपि नटाश्चारणास्तु कुशीलवाः ॥ १२ ॥
मार्दङ्गिका मौरजिकाः पाणिवादास्तु पाणिघाः । वेणुध्माः स्युर्वैणविका वीणा
वादास्तु वैणिकाः ॥ १३ ॥ जीवान्तकः शाकुनिको द्वौ वागुरिकजालिकौ ।
वैतंसिकः कौटिकश्च मांसिकश्च समं त्रयम् ॥ १४ ॥ भृतको भृतिभुक्कर्मक
रो वैतनिकोऽपि सः । वार्तावहो वैवधिको भारवाहस्तु भारिकः ॥ १५ ॥
विवर्णः पामरो नीचः प्राकृतश्च पृथग्जनः । निहीनोऽपसदो जाल्मः
क्षुल्लकश्चेतरश्च सः ॥ १६ ॥ भृत्ये दासेरदासेयदासगोप्यकचेटकाः ।

नियुज्यकिंकरप्रेष्यभुजिष्यपरिचारकाः ॥ १७ ॥ पराचितपरिस्क अमर२
न्दपरजातपरैधिताः । मन्दस्तुन्दपरिमृजआलस्यः शीतकोऽल मू.१९
सोनुष्णः ॥ १८ ॥ दक्षेतु चतुरपेशलपटवः सूत्थान उष्णश्च । च
ण्डालप्लवमातङ्गदिवाकीर्त्तिजनङ्गमाः ॥ १९ ॥ निषादश्वपचाव
न्तेवासिचाण्डालपुक्कसाः । भेदाः किरातशबरपुलिन्दाम्लेच्छजातयः
॥ २० ॥ व्याधोमृगवधाजीवोमृगयुर्लुब्धकोऽपिसः । कौलेयकःसारमेयः
कुक्कुरोमृगदंशकः ॥ २१ ॥ शुनकोभषकःश्वास्यादलर्कस्तुसयोगितः
। श्वाविश्वकद्रुर्मृगयाकुशलःसरमाशुनी ॥ २२ ॥ विट्चरःसूकरो
ग्राम्योवर्करस्तरुणःपशुः । आच्छोदनंमृगव्यंस्यादाखेटोमृगयास्त्रियाम्
॥ २३ ॥ दक्षिणारुर्लुब्धयोगाद्दक्षिणेर्माकुरङ्गकः । चौरैकागारिक
स्तेनदस्युतस्करमोषकाः ॥ २४ ॥ प्रतिरोधिपरास्कन्दिपाटच्चरमलि
म्लुचाः । चौरिकास्तैन्यचौर्य्येचस्तेयंलोप्त्रंतुतद्धनम् ॥ २५ ॥ वीतंसस्तू
पकरणंबन्धनेमृगपक्षिणाम् । उन्माथःकूटयन्त्रंस्याद्वागुरामृगबन्धि
नी ॥ २६ ॥ शुल्बंवराटकंस्त्रीतुरज्जुस्त्रिषुवटीगुणः । उद्घाटनंघटी
यन्त्रंसलिलोद्वाहनंप्रहेः ॥ २७ ॥ पुंसिवेमावायदण्डःसूत्राणिनरि
तन्तवः । वाणिर्व्यूतिःस्त्रियौतुल्येपुस्तंलेप्यादिकर्मणि ॥ २८ ॥ पञ्चा
लिकापुत्रिकास्याद्वस्त्रदन्तादिभिःकृता । पिटकःपेटकःपेडामञ्जूषाऽथ
विहङ्गिका ॥ २९ ॥ भारयष्टिस्तदालम्बिशिक्यंकाचोऽथपादुका । पा

अमर२ दूरुपानंत्स्त्री सैवानुपदीनापदायता ॥ ३० ॥ नध्रीवर्ध्रीवरत्रास्याद
मू.९० श्वादेस्ताडनीकशा। चाण्डालिकातुकण्डोलवीणाचण्डालवल्लकी ॥ ३१ ॥
नाराचीस्यादेषणिकाशाणस्तुनिकषःकषः। व्रश्चनःपत्रपरशुरीषिकातू
लिकासमे ॥ ३२ ॥ तैजसावर्त्तनीमूषाभस्त्राचर्मप्रसेविका। आस्फोट
नीवेधनिकाकृपाणीकर्त्तरीसमे ॥ ३३ ॥ वृक्षादनेवृक्षभेदीटङ्कःपाषा
णदारणः। क्रकचःकरपत्रंस्यादाराचर्मप्रभेदिका ॥ ३४ ॥ सूर्म्मीस्
थूणायोह्प्रतिमाशिल्पकर्मकलादिकम्। प्रतिमानंप्रतिबिम्बंप्रतिमाप्र
तियातनाप्रतिच्छाया ॥ ३५ ॥ प्रतिकृतिरर्चापुंसिप्रतिनिधिरुपमोपमा
नंस्यात्। वाच्यलिङ्गाःसमस्तुल्यस्सदृक्षस्सदृशस्सदृक् ॥ ३६ ॥ सा
धारणस्समानश्चस्युरुत्तरपदेत्वमी। निभसङ्काशनीकाशप्रतीकाशो
पमादयः ॥ ३७ ॥ कर्मण्यातुविधाभृत्याभृतयोभर्मवेतनम्। भरण्यंभ
रणंमूल्यंनिर्वेशःपणइत्यपि ॥ ३८ ॥ सुराहलिप्रियाहालापरिस्रु
द्वरुणात्मजा। गन्धोत्तमाप्रसन्नेराकादम्बर्यःपरिस्रुताः ॥ ३९ ॥ म
दिराकश्यमद्येवाप्यवदंशस्तुभक्षणम्। शुण्डापानंमदस्थानंमधुवा
रामधुक्रमाः ॥ ४० ॥ मध्वासवोमाधवकोमधुमाध्वीकमद्वयोः। मैरे
यमासवःसीधुर्मेदकोजगलःसमौ ॥ ४१ ॥ सन्धानंस्यादभिषवःकिण्व
पुंसितुनग्नहूः। कारोत्तरःसुरामण्डआपानंपानगोष्ठिका ॥ ४२ ॥
चषकोऽस्त्रीपानपात्रंसरकोऽप्यनुतर्षणम्। धूर्तोऽक्षदेवीकितवोऽक्ष

धूर्तोऽक्षधूर्तो द्यूतकृत्समाः ॥ ४३ ॥ स्युर्लग्नकाः प्रतिभुवः सभिका द्यूतकारकाः । अम२
द्यूतोऽस्त्रियामक्षवती कैतवं पण इत्यपि ॥ ४४ ॥ पणोऽक्षेषु ग्लहो भू१०
ऽक्षास्तु देवनाः पाशकाश्च ते । परिणायस्तु शारीणां समन्तान्नयनेऽ
स्त्रियाम् ॥ ४५ ॥ अष्टापदं शारिफलं प्राणिद्यूतं समाह्वयः । उक्ता भूरि
प्रयोगत्वादेकस्मिन्येऽत्र यौगिकाः ॥ ४६ ॥ ताद्धर्म्यादन्यतो वृत्तावूह्या
लिङ्गान्तरेऽपि ते ॥ इत्यमरसिंहकृतौ शूद्रवर्गः ॥ इत्यमरसिंहकृ
तौ नामलिंगानुशासने । द्वितीयो भूकाण्डनामा साङ्ग एव समन्वितः ॥ ४७ ॥

॥ इति द्वितीयकाण्डः समाप्तः २ ॥

*****************************

विशेष्यनिघ्नैः संकीर्णैर्नानार्थैरव्ययैरपि । लिंगादिसंग्रहैर्वर्गाः सामान्ये व अम३
र्गसंश्रयाः ॥ १ ॥ स्त्रीदाराद्यैर्यद्विशेष्यं यादृशैः प्रस्तुतं पदैः । गुणद्रव्य वि११
क्रियाशब्दास्तथा स्युस्तस्य भेदकाः ॥ २ ॥ सुकृती पुण्यवान्धन्यो महेच्छ
स्तु महाशयः । हृदयालुः सुहृदयो महोत्साहो महोद्यमः ॥ ३ ॥ प्र
वीणे निपुणाभिज्ञविज्ञनिष्णातशिक्षिताः । वैज्ञानिकः कृतमुखः कृती कु
शल इत्यपि ॥ ४ ॥ पूज्यः प्रतीक्ष्यः सांशयिकः संशयापन्नमानसः ।
दक्षिणीयो दक्षिणार्हस्तत्र दाक्षिण्य इत्यपि ॥ ५ ॥ स्युर्वदान्यस्थूल
लक्ष्यदानशौण्डा बहुप्रदे । जैवातृकः स्यादायुष्मानन्तर्वाणिस्तु शास्त्रवि
त् ॥ ६ ॥ परीक्षकः कारणिको वरदस्तु समर्द्धकः । हर्षमाणो विकुर्वा

अम३ णः प्रमना हृष्टमानसः ॥ ७ ॥ दुर्मना विमना अन्तर्मनाः स्यादुत्क उन्म
वि१ नाः । दक्षिणे सरलोदारौ सुकलो दातृभोक्तरि ॥ ८ ॥ तत्परे प्रसिता
सक्तौ इष्टार्थोद्युक्त उत्सुकः । प्रतीते प्रथितख्यातवित्तविज्ञातविश्रुताः
॥ ९ ॥ गुणैः प्रतीते तु कृतलक्षणाहतलक्षणौ । इभ्य आढ्यो धनी स्वा
मीत्वीश्वरः पतिरीशिता ॥ १० ॥ अधिभूर्नायको नेता प्रभुः परिवृढोऽधि
पः । अधिकर्द्धिः समृद्धः स्यात्कुटुम्बव्यापृतस्तु यः ॥ ११ ॥ स्यादभ्यागा
रिकस्तस्मिन्नुपाधिस्तु पुमानयम् । वराङ्गरूपोपेतो यः सिंहसंहननो
हि सः ॥ १२ ॥ निर्वार्यः कार्यकर्त्ता यः सम्पन्नः सत्त्वसम्पदा । अवा
चि मूकोऽथ मनोजवः सपितृसन्निभः ॥ १३ ॥ सत्कृत्यालंकृतां कन्यां यो
ददाति स कूकुदः । लक्ष्मीवाँल्लक्ष्मणः श्रीलः श्रीमान्स्निग्धस्तु वत्सलः
॥ १४ ॥ स्याद्दयालुः कारुणिकः कृपालुः सूरतः समाः । स्वतन्त्रोऽपावृतः
स्वैरी स्वच्छन्दो निरवग्रहः ॥ १५ ॥ परतन्त्रः पराधीनः परवान्नाथ
वानपि । अधीनो निघ्न आयत्तोऽस्वच्छन्दो गृह्यकोऽप्यसौ ॥ १६ ॥
खलपूः स्याद्बहुकरो दीर्घसूत्रश्चिरक्रियः । जाल्मोऽसमीक्ष्यकारी स्या
त्कुण्ठो मन्दः क्रियासु यः ॥ १७ ॥ कर्मक्षमोऽलंकर्मीणः क्रियावान्क
र्मसूद्यतः । स कार्मः कर्मशीलो यः कर्मशूरस्तु कर्मठः ॥ १८ ॥ कर्मण्य
भुक्कर्मकरः कर्मकारस्तु तत्क्रियः । अपस्नातो मृतस्नात आमिषाशी तु शौ
ष्कलः ॥ १९ ॥ बुभुक्षितः स्यात्क्षुधितो जिघत्सुरशनायितः । परान्नः पर

पिण्डादोभक्षकोघस्मरोऽद्मरः ॥ २० ॥ आद्यूनःस्यादौदरिकोविजिगी अम३
षाविवर्ज्जिते । उभौचात्मंभरिःकुक्षिंभरिःस्वोदरपूरके ॥ २१ ॥ सर्व्वा वि १
न्नीनस्तुसर्व्वान्नभोजीगृध्नस्तुगर्द्धनः । लुब्धोऽभिलाषुकस्तृष्णक्समौलो
लुपलोलुभौ ॥ २२ ॥ सोन्मादस्तून्मदिष्णुःस्यादविनीतःसमुद्धतः । म
त्तेशौण्डोत्कटक्षीवाःकामुकेकमितानुकः ॥ २३ ॥ कम्रःकामयिताऽभी
कःकमनःकामनोभिकः । विधेयोविनयग्राहीवचनेस्थितआश्रवः ॥ २४ ॥
वश्यःप्रणेयोनिभृतविनीतप्रश्रिताःसमाः । धृष्टेधृष्णुर्वियातश्चप्रगल्भःप्रति
भान्वितः ॥ २५ ॥ स्यादधृष्टेतुशालीनोविलक्षोविस्मयान्विते । अधीरेका
तरःत्रस्तौभीरुभीरुकभीलुकाः ॥ २६ ॥ आशंसुराशंसितरिगृहयालुर्ग्र
हीतरि । श्रद्धालुःश्रद्धयायुक्तेपतयालुस्तुपातुके ॥ २७ ॥ लज्जाशीलेऽ
पत्रपिष्णुर्व्वंदारुरभिवादके । शरारुर्घातुकोहिंस्रःस्याद्वर्द्धिष्णुस्तुवर्द्धनः
॥ २८ ॥ उत्पतिष्णुस्तूत्पतिताऽलंकरिष्णुस्तुमण्डनः । भूष्णुर्भविष्णुर्भ
विताववर्त्तिष्णुर्व्वर्त्तनःसमौ ॥ २९ ॥ निराकरिष्णुःक्षिप्नुःस्यात्सान्द्रस्निग्ध
स्तुमेदुरः । ज्ञातातुविदुरोबिन्दुर्विकासीतुविकस्वरः ॥ ३० ॥ विसृत्वरो
विसृमरःप्रसारीचविसारिणि । सहिष्णुःसहनःक्षन्तातितिक्षुः
क्षमिताक्षमी ॥ ३१ ॥ क्रोधनोमर्षणःकोपीचण्डस्त्वत्यन्तकोपनः ।
जागरूकोजागरिताघूर्णितःप्रचलायितः ॥ ३२ ॥ स्वप्नक्शयालुर्नि
द्रालुर्निद्राणशयितौसमौ । पराङ्मुखःपराचीनःस्यादवाङप्यधोमुखः

अमर३ ॥ ३३ ॥ देवानञ्चति देवद्र्यङ्विष्वद्र्यङ्विष्वगञ्चति । यः सहाञ्चति सध्र्य
वि १ ङ्स तिर्यङ्यस्तिरोऽञ्चति ॥ ३४ ॥ वदो वदावदो वक्ता वागीशो वाक्प
तिः समौ । वाचोयुक्तिपटुर्वाग्मी वावदूकोऽतिवक्तरि ॥ ३५ ॥ स्याज्ज
ल्पाकस्तु वाचालो वाचाटो बहुगर्ह्यवाक् । दुर्मुखे मुखराबद्धमुखौ शक्तः
प्रियंवदे ॥ ३६ ॥ लोहलः स्यादस्फुटवाक्गर्ह्यवादी तु कद्वदः । समौ
कुवादकुचरौ स्यादसौम्यस्वरोऽस्वरः ॥ ३७ ॥ रवणः शब्दनो नान्दी
वादी नान्दीकरः समौ । जडोऽज्ञोऽनेडमूकस्तु वक्तुं श्रोतुमशिक्षिते ॥ ३८ ॥
तूष्णीं शीलस्तु तूष्णीको नग्नोऽवासा दिगम्बरः । निष्कासितोऽवकृष्टस्स्या
दपध्वस्तस्तु धिक्कृतः ॥ ३९ ॥ आत्तगर्वाभिभूतः स्याद्दापितः साधितः स
मौ । प्रत्यादिष्टो निरस्तः स्यात्प्रत्याख्यातो निराकृतः ॥ ४० ॥ निकृतः स्या
द्विप्रकृतो विप्रलब्धस्तु वञ्चितः । मनोहतः प्रतिहतः प्रतिबद्धो हतश्च
सः ॥ ४१ ॥ अधिक्षिप्तः प्रतिक्षिप्तो बद्धे कीलितसंयतौ । आपन्न आप
त्प्राप्तः स्यात्कान्दिशीको भयद्रुतः ॥ ४२ ॥ आक्षारितः क्षारितोऽभिशस्ते
संकसुकोऽस्थिरे । व्यसनार्तोपरक्तौ द्वौ विहस्तव्याकुलौ समौ ॥ ४३ ॥
विक्लवो विह्वलः स्यात्तु विवशोऽरिष्टदुष्टधीः । काश्यः कशार्हे सन्नद्धे त्वा
ततायी वधोद्यते ॥ ४४ ॥ द्वेष्ये त्वक्षिगतो वध्यः शीर्षच्छेद्य इमौ समौ
। विष्यो विषेण यो वध्यो मुसल्यो मुसलेन यः ॥ ४५ ॥ शिशिदानोऽकृ
ष्णकर्मा चपलश्चिकुरः समौ । दोषैकदृक्पुरोभागी निकृतस्त्वनृजुः शठः

॥४६॥ कर्णेजपः सूचकः स्यात्पिशुनो दुर्ज्जनः खलः । नृशंसो घातुकः अमर २
क्रूरः पापो धूर्त्तस्तु वञ्चकः ॥४७॥ अज्ञमूढयथाजातमूर्खवैधेयबालि वि १
शाः । कदर्य्ये कृपणक्षुद्रकिम्पचानमितम्पचाः ॥४८॥ निस्वस्तु
दुर्विधो दीनो दरिद्रो दुर्गतोऽपि सः । वनीयको याचनको मार्गणो याच
कार्थिनौ ॥४९॥ अहङ्कारवानहंयुः स्याच्छुभंयुस्तु शुभान्वितः । दि
व्योपपादुका देवा नृगवाद्या जरायुजाः ॥५०॥ स्वेदजाः कृमिदंशाद्याः
पक्षिसर्प्पादयोऽण्डजाः । उद्भिदस्तरुगुल्माद्या उद्भिदुद्भिज्जमुद्भि
दम् ॥५१॥ सुन्दरं रुचिरं चारु सुषमं साधु शोभनम् । कान्तं मनोर
मं रुच्यं मनोज्ञं मञ्जु मञ्जुलम् ॥५२॥ तदासेचनकं तृप्तेर्नास्त्यन्तो यस्य
दर्शनात् । अभीष्टेऽभीप्सितं हृद्यं दयितं वल्लभं प्रियम् ॥५३॥ निकृष्ट
प्रतिकृष्टार्वरेफयाप्यावमाधमाः । कुपूयकुत्सितावद्यखेटगर्ह्याणकाः
समाः ॥५४॥ मलीमसन्तु मलिनं कच्चरं मलदूषितम् । पूतं पवित्रं मे
ध्यं वीध्रन्तु विमलात्मकम् ॥५५॥ निर्णिक्तं शोधितं मृष्टं निःशोध्य
मनवस्करम् । असारं फल्गु शून्यन्तु वशिकं तुच्छरिक्तकम् ॥५६॥
क्लीबे प्रधानं प्रमुखप्रवेकानुत्तमोत्तमाः । मुख्यवर्य्यवरेण्याश्च प्रबर्होऽन
वरार्द्ध्यवत् ॥५७॥ परार्द्ध्याग्र्यप्राग्रहरप्राग्र्याग्र्याग्रीयमग्रियम् । श्रेया
न्श्रेष्ठः पुष्कलः स्यात्सत्तमश्चातिशोभने ॥५८॥ स्युरुत्तरपदे व्याघ्र
पुङ्गवर्षभकुञ्जराः । सिंहशार्दूलनागाद्याः पुंसि श्रेष्ठार्थगोचराः ॥५९॥

अमर२ अप्राग्र्यंद्वयहीनेद्वे अप्रधानोपसर्ज्जने । विशंकटंपृथुबृहद्विशालंपृथु
वि १ लंमहत् ॥ ६० ॥ वड्रोरुविपुलंपीनपीव्नोतुस्थूलपीवरे । स्तोकाल्पक्षु
ल्लकाःसूक्ष्मंश्लक्ष्णंदभ्रंकृशंतनु ॥ ६१ ॥ स्त्रियांमात्राचात्रुटीपुंसिलवले
शकणाणवः । अत्यल्पेऽल्पिष्ठमल्पीयःकणीयोऽणीयइत्यपि ॥ ६२ ॥ प्र
भूतंप्रचुरंप्राज्यमदभ्रंबहुलंबहु । पुरुहंपुरुभूयिष्ठंस्फिरंभूयश्चभू
रिच ॥ ६३ ॥ परःशताद्यास्तेयेषांपरासंख्याशतादिकात् । गणनीये
तुगणेयंसंख्यातेगणितमथसमंसर्व्वम् ॥ ६४ ॥ विश्वमशेषंकृत्स्नंसम
स्तनिखिलाखिलानिनिःशेषम् । समग्रंसकलाखण्डपूर्णादीनप्यनून
के ॥ ६५ ॥ घनंनिरन्तरंसान्द्रंपेलवंविरलंतनु । समीपेनिकटासन्न
सन्निकृष्टसनीडवत् ॥ ६६ ॥ सदेशाभ्याससविधसमर्य्यादसदेश
वत् । उपकण्ठान्तिकाभ्यर्णाभ्यग्राअप्यभितोऽव्ययम् ॥ ६७ ॥ सं
सक्तेत्वव्यवहितमपदान्तरमित्यपि । नेदिष्ठमन्तिकतमंस्याद्दूरंविप्र
कृष्टकम् ॥ ६८ ॥ दवीयश्चदविष्ठञ्चसुदूरंदीर्घमायतम् । वर्त्तुलंनि
स्तलंवृत्तंबन्धुरंतून्नतानतम् ॥ ६९ ॥ उच्चप्रांशून्नतोदग्रोच्छ्रितास्तुङ्गे
ऽथवामने । न्यङ्नीचखर्वह्रस्वाःस्युरवाग्रेऽवनतानतम् ॥ ७० ॥ अ
रालंवृजिनंजिह्ममूर्मिमत्कुञ्चितानतम् । अविद्धंकुटिलंभुग्नंवेल्लितंवक्र
मित्यपि ॥ ७१ ॥ ऋजावजिह्मप्रगुणौव्यस्तेत्वप्रगुणाकुलौ । शाश्व
तस्तुध्रुवोनित्यसदातनसनातनाः ॥ ७२ ॥ स्थास्नुःस्थिरतरःस्थेयान्

करूपतयालुयः । कालव्यापीसकूटस्थःस्थावरोजङ्गमेतरः ॥ ७३ ॥ अमर२
चरिष्णुर्जङ्गमचरंचसमिङ्गंचराचरम् । चलनंकम्पनंकम्प्रंचलंलोलं वि १
चलाचलम् ॥ ७४ ॥ चञ्चलंतरलंचैवपारिप्लवपरिप्लवे । अतिरि
क्तःसमधिकोदृढसन्धिस्तुसंहतः ॥ ७५ ॥ कक्खटंकठिनंक्रूरंकठो
रंनिष्ठुरंदृढम् । जठरंमूर्त्तिमन्मूर्त्तंप्रवृद्धंप्रौढमेधितम् ॥ ७६ ॥ पु
राणेप्रतनंप्रत्नपुरातनचिरन्तनाः । प्रत्यग्रोऽभिनवोनव्योनवीनोनूतनो
नवः ॥ ७७ ॥ नूत्नश्चसुकुमारन्तुकोमलंमृदुलंमृदु । अन्वगन्वक्ष
मनुगेऽनुपदंक्लीवमव्ययम् ॥ ७८ ॥ प्रत्यक्षंस्यादैन्द्रियकमप्रत्यक्ष
मतीन्द्रियम् । एकतानोऽनन्यवृत्तिरेकाग्रैकायनावपि ॥ ७९ ॥ अप्ये
कसर्गएकाग्रोऽप्येकायनगतोऽपिच । पुंस्यादिपूर्वपौरस्त्यप्रथमाद्याअ
थास्त्रियाम् ॥ ८० ॥ अन्तोजघन्यंचरममन्त्यपाश्चात्यपश्चिमाः । मो
घंनिरर्थकंस्पष्टंस्फुटंप्रव्यक्तमुल्बणम् ॥ ८१ ॥ साधारणन्तुसामान्यमे
काकीत्वेकएककः । भिन्नार्थकाअन्यतरएकत्वान्येतरावपि ॥ ८२ ॥ उ
च्चावचंनैकभेदमुच्चण्डमविलम्बितम् । अरुन्तुदस्तुमर्मस्पृगबाधन्तु
निरर्गलम् ॥ ८३ ॥ प्रसव्यंप्रतिकूलंस्यादपसव्यमपष्ठुच । वामंश
रीरंसव्यंस्यादपसव्यन्तुदक्षिणम् ॥ ८४ ॥ संकटंनात्तुसम्बाधःकलिलं
गहनंसमम् । संकीर्णंसंकुलाकीर्णेमुण्डितंपरिवापितम् ॥ ८५ ॥ ग्रन्थि
तंगुम्फितंदृब्धंविसृतंविस्तृतंततम् । अन्तर्गतंविस्मृतंस्यात्प्राप्तप्रणिहितेस

अम ३ मे ॥ ८६ ॥ वेल्लितप्रेङ्खिताधूतचलिताकम्पिता धुते । प्रेङ्खोलितस्तरलितेङ्ग
वि १ ल्लासितान्दोलिता अपि ॥ ८७ ॥ नुत्तनुन्नास्तनिष्ठ्यूताविद्धक्षिप्तेरिताः स
माः । परिक्षिप्तं तु निवृतं मूषितं मुषितार्थकम् । प्रवृद्धप्रसृते न्यस्तनिसृष्टे गु
णिताहते ॥ ८८ ॥ निदिग्धोपचिते गूढगुप्ते गुण्ठितरूषिते । द्रुतावदी
र्णे उद्गूर्णोद्यते काचितशिक्यिते ॥ ८९ ॥ घ्राणघ्राते दिग्धलिप्ते समुदक्तोद्धृ
ते समे । वेष्टितं स्याद् वलयितं संवीतं रुद्धमावृतम् ॥ ९० ॥ रुग्णं भुग्नेऽथ
निशितक्ष्णुतशातानि तेजिते । स्याद्विनाशोन्मुखं पक्वं ह्रीणह्रीतौ च ल
ज्जिते ॥ ९१ ॥ वृत्ते तु वृत्तव्यावृत्तौ संयोजित उपाहितः । प्राप्यं गम्यं स
मासाद्यं स्यन्नं रीणं स्रुतं स्रुतम् ॥ ९२ ॥ संगूढः स्यात्संकलितोऽवगीतः
ख्यातगर्हणः । विविधः स्याद्बहुविधो नानारूपः पृथग्विधः ॥ ९३ ॥
अवरीणो धिक्कृतश्चाप्यवध्वस्तोऽवचूर्णितः । अनायासकृतं फाण्टं स्वनि
तं ध्वनितं समे ॥ ९४ ॥ बद्धे संदानितं मूतमुद्दितं संदितं सितम् । निष्प
क्वं क्वथितं पाके क्षीराज्यपयसां शृतम् ॥ ९५ ॥ निर्वाणो मुनिवह्न्यादौ नि
र्वातस्तु गतेऽनिले । पक्वं परिणते गूनं हन्ने मीढं तु मूत्रिते ॥ ९६ ॥ पु
ष्टे तु पुषितं सोढे क्षान्तमुद्वान्तमुद्गते । दान्तस्तु दमिते शान्तः शमिते प्रार्थि
ते ऽर्दितः ॥ ९७ ॥ ज्ञप्तस्तु ज्ञपिते छन्नश्छादिते पूजितेऽञ्चितः । पूर्ण
स्तु पूरिते क्लिष्टः क्लिशिते वसिते सितः ॥ ९८ ॥ प्रुष्टप्लुष्टोषिता दग्धे तष्ट
त्वष्टौ तनूकृते । वेधितच्छिद्रितौ विद्धे विन्नवित्तौ विचारिते ॥ ९९ ॥ निः

भे विगतारोकौ विलीने विद्रुतद्रुतौ। सिद्धे निर्वृत्तनिष्पन्नौ दारिते भिन्नभेदि अमर ३
तौ ॥ १०० ॥ ऊतं स्यूतमुतं चेति त्रितयं तन्तुसन्तते। स्यादर्हिते नम वि १
स्यितनमसितमपचायितार्चितापचितम् ॥ १०१ ॥ वरिवसिते वरिवस्यि
तमुपासितमुपचरितं च। सन्तापितसन्तप्तौ धूपितधूपायितौ च दू
नश्च ॥ १०२ ॥ हृष्टे मत्तस्तृप्तः प्रह्लन्नः प्रमुदितः प्रीतः। छिन्नं छातं लूनं
कृत्तं दातं दितं छितं वृक्णम् ॥ १०३ ॥ स्रस्तं ध्वस्तं भ्रष्टं स्कन्नं पन्नं च्युतं गलितम्।
लब्धं प्राप्तं विन्नं भावितमासादितं च भूतं च ॥ १०४ ॥ अन्वेषितं गवेषितम
न्विष्टं मार्गितं मृगितम्। आर्द्रं सार्द्रं क्लिन्नं तिमितं स्तिमितं समुन्नमुत्तं च
॥ १०५ ॥ त्रातं त्राणं रक्षितमवितं गोपायितं गुप्तम्। अवगणितमवम
तावज्ञातेऽवमानितं च परिभूते ॥ १०६ ॥ त्यक्तं हीनं विधुतं समुज्झि
तं धूतमुत्सृष्टम्। उक्तं भाषितमुदितं जल्पितमाख्यातमभिहितं लपित
म् ॥ १०७ ॥ बुद्धं बुधितं मनितं विदितं प्रतिपन्नमवसितावगते। ऊरी
कृतमुररीकृतमङ्गीकृतमाश्रुतं प्रतिज्ञातम् ॥ १०८ ॥ संगीर्णसंविदितं
संश्रुतं समाहितोपश्रुतोपगतम्। ईलितशस्तपणायितपनायितप्रणु
तपणितपनितानि ॥ १०९ ॥ अपिगीर्णवर्णिताभिष्टुतेडितानि स्तुतार्था
नि। भक्षितचर्वितलिप्तप्रत्यवसितगिलितखादितप्सातम् ॥ ११० ॥
अभ्यवहृतान्नजग्धग्रस्तग्लस्ताशितं भुक्ते। क्षेपिष्ठक्षोदिष्ठप्रेष्ठवरि
ष्ठस्थविष्ठबंहिष्ठाः ॥ १११ ॥ क्षिप्रक्षुद्राभीप्सितपृथुपीवरबहुलप्रक

अम३ थौ थाः । साधिष्ठद्राघिष्ठस्फेष्ठगरिष्ठह्रसिष्ठवृन्दिष्ठाः ॥ ११२ ॥
वि १ बाढव्यापतवक्रगुरुवामनवृन्दारकातिशये।

इतिविशेष्यनिघ्नवर्गः

*************************

सं २ प्रकृतिप्रत्ययार्थाद्यैः संकीर्णेलिङ्गमुन्नयेत् । कर्मक्रियातत्सातत्येगम्येस्यु
रपरस्पराः ॥ १ ॥ साकल्यासंगवचनेपारायणपरायणे । यदृच्छास्वै
रितान्हेतुशून्यात्वास्याविलक्षणम् ॥ २ ॥ शमथस्तुशमःशान्तिर्दान्ति
स्तुदमथोदमः । अवदानंकर्मवृत्तंकाम्यदानंप्रवारणम् ॥ ३ ॥ वश
क्रियासंवदनंमूलकर्मतुकार्मणम् । विधूननंविधुवनंतर्प्पणंप्रीणनावन
म् ॥ ४ ॥ पर्य्याप्तिःस्यात्परित्राणंहस्तवारणमित्यपि । सेवनंसीवनंस्यू
तिर्विदरःस्फुटनंभिदा ॥ ५ ॥ आक्रोशनमभीषङ्गःसंवेदोवेदनान
ना । सम्मूर्च्छनमभिव्याप्तिर्य्याच्ञाभिक्षार्थनार्द्दना ॥ ६ ॥ वर्द्धनंछेद
नेऽथद्वेआनन्दनसभाजने । आप्रच्छन्नमथाम्नायःसम्प्रदायःक्षु
येक्षिया ॥ ७ ॥ ग्रहेग्राहोवशःकान्तौरक्ष्णस्त्राणेरणःक्वणे । व्यधोवे
धेपचापाकेहवोहूतौवरोवृतौ ॥ ८ ॥ ओषःप्लोषेनयोनायेज्यानिर्जी
र्णा । भ्रमोभ्रमौ । स्फातिर्वृद्धौप्रथाख्यातौस्पृष्टिःपृक्तौस्नवःस्नवे ॥ ९ ॥
एधासमृद्धौस्फुरणंस्फरणेप्रमितौप्रमा । प्रसूतिःप्रसवेश्च्योतिप्राघारः
क्लमथःक्लमे ॥ १० ॥ उत्कर्षोऽतिशयेसन्धिःश्लेषेविषयआश्रये।

क्षिपायांक्षेपणंगीर्णिर्गिरौगूरणमुद्यमे ॥ ११ ॥ उन्नायउन्नयेश्रायः अम ३
श्रयणोजयनेजयः । निगादोनिगदेमादोमदेउद्वेगउद्भ्रमे ॥ १२ ॥ सं २
विमर्दनंपरिमलेऽभ्युपपत्तिरनुग्रहः । निग्रहस्तद्विरुद्धःस्यादभि
योगस्त्वभिग्रहः ॥ १३ ॥ मुष्टिबन्धस्तुसंग्राहोडिम्बेडमरविप्लवौ ।
बन्धनंप्रसितिश्चारःस्पर्शःस्प्रष्टोपतप्तरि ॥ १४ ॥ निकारोविप्रकारःस्या
दाकारस्त्विङ्गइङ्गितं । परिणामोविकारेद्वेसमेविकृतिविक्रिये ॥ १५ ॥
अपहारस्त्वपचयःसमाहारःसमुच्चयः । प्रत्याहारउपादानंविहार
स्तुपरिक्रमः ॥ १६ ॥ अभिहारोऽभिग्रहणंनिर्हारोऽभ्यवकर्षणम् ।
अनुहारोऽनुकारःस्यादर्थस्यापगमेव्ययः ॥ १७ ॥ प्रवाहस्तुप्रवृत्तिः
…त्प्रवहोगमनंवहिः । वियामोवियमोयामोयमःसंयामसंयमौ ॥ १८ ॥
…हिंसाकर्माभिचारःस्याज्जागर्य्याजागराद्वयोः । विघ्नोऽन्तरायःप्रत्यूहः
स्या…पघ्नोऽन्तिकाश्रये ॥ १९ ॥ निर्वेश उपभोगःस्यात्परिसर्पःपरि
क्रि… । विधुरन्तुप्रविश्लेषोऽभिप्रायश्छन्द आशयः ॥ २० ॥ संक्षेपणं
सम…नंपर्य्यवस्थाविरोधनम् । परिसर्य्यापरीसारःस्यादास्यात्वासना
स्थितिः ॥ २१ ॥ विस्तारोविग्रहोव्यासःसचशब्दस्यविस्तरः । स्यान्म
र्दनंसम्वाहनंविनाशःस्याददर्शनम् ॥ २२ ॥ संस्तवःस्यात्परिचयःप्र
सरस्तुवि र्पणम् । नीवाकस्तुप्रयामःस्यात्सन्निधिःसन्निकर्षणम् ॥ २३ ॥
लवोऽभि लावोलवनेनिष्पावःपवनेपवः । प्रस्तावःस्यादवसरःत्रसरः

अमर२ स्रूनवेष्टनम् ॥ २४ ॥ प्रजनःस्यादुपसरःप्रश्रयप्रणयौसमौ । धीशक्ति
सं २ र्निष्क्रमोऽस्त्रीतुसंक्रमोदुर्गसञ्चरः ॥ २५ ॥ प्रत्युत्क्रमःप्रयोगार्थः प्र
क्रमःस्यादुपक्रमः । स्यादभ्यादानमुद्धातआरम्भःसंभ्रमस्त्वरा ॥ २६ ॥
प्रतिबन्धःप्रतिष्टम्भोऽवनायस्तुनिपातनम् । उपलम्भस्त्वनुभवः स
मालम्भोविलेपनम् ॥ २७ ॥ विप्रलम्भोविप्रयोगोविलम्भस्त्वतिसर्ज
नम् । विश्रावस्तुप्रविख्यातिरवेक्षाप्रतिजागरः ॥ २८ ॥ निपाठनि
पठौ पाठेतेमस्तेमौसमुन्दने । आदीनवास्रवौक्लेशेमेलकेसङ्गसङ्गमौ
॥ २९ ॥ संवीक्षणंविचयनंमार्गणंमृगणामृगः । परिरम्भःपरिष्व
ङ्गः संश्लेषउपगूहनम् ॥ ३० ॥ निर्वर्णनंतुनिध्यानंदर्शनालोकनेक्षण
म् । प्रत्याख्यानंनिरसनंप्रत्यादेशोनिराकृतिः ॥ ३१ ॥ उपशायोवि
शायः पर्यायशयनार्थकौ । अर्त्तनञ्चऋतीयाचहृणीयाचघृणा
र्थके ॥ ३२ ॥ स्याद्व्यत्यासोविपर्यासोव्यत्ययश्चविपर्यये । पर्ययो
ऽतिक्रमस्तस्मिन्नतिपातउपात्ययः ॥ ३३ ॥ प्रेषणंयत्समाहूयत
त्र स्यात्प्रतिशासनम् । ससंस्तावःक्रतुषुयास्तुतिभूमिर्द्विजन्मनाम् ॥ ३४ ॥
निधायतक्ष्यतेयत्रकाष्ठेकाष्ठंसउद्घनः । स्तम्बघ्नस्तुस्तम्बघनःस्त
म्बोयेननिहन्यते ॥ ३५ ॥ आविधोविध्यतेयेनतत्रविष्वक्समेनिघः ।
उत्कारश्चनिकारश्चद्वौधान्योत्क्षेपणार्थकौ ॥ ३६ ॥ निगारोद्गारविक्षा
वोद्गाहास्तुगरणादिषु । आरत्यवरतिविरतयउपरामेऽथनिष्ठेव

॥ ३७ ॥ निष्ठ्यूतिर्निष्ठेवनंनिष्ठीवनमित्यभिन्नानि । जवनेजूतिस्सा अमरु
तिस्त्ववसानेस्यादथज्वरेजूर्त्तिः ॥ ३८ ॥ उदजस्तुपशुप्रेरणमक सं २
रणिरित्यादयःशापे । गोत्रान्तेभ्यस्तस्यवृन्दमित्यौपगवकादिकम् ॥ ३९ ॥
आपूपिकंशाष्कुलिकमेवमाद्यमचेतसाम् । माणवानान्तुमाणव्यंसहा
यानांसहायता ॥ ४० ॥ हल्याहलानांब्राह्मण्यवाडव्येतुद्विजन्मनाम्
। द्वेपर्शुकानांपृष्ठानांपार्श्वंपृष्ठ्यमनुक्रमात् ॥ ४१ ॥ खलानांखलिनी
खल्याप्यथमानुष्यकंन्नृणाम् । ग्रामताजनताधूम्यापाश्यागल्यापृथक्पृ
थक् ॥ ४२ ॥ अपिसाहस्रकारीषवार्मणाथर्वणादिकम् ।

॥ इतिसंकीर्णवर्गः ॥

*********************

नानार्थाःकेऽपिकान्तादिवर्गेष्वेवात्रकीर्त्तिताः । भूरिप्रयोगायेयेषुपर्य्याये ना ३
ष्वपितेषुते ॥ १ ॥ आकाशेत्रिदिवेनाकोलोकस्तुभुवनेजने । पद्येयशसिच
श्लोकःशरेखड्गेचशायकः ॥ २ ॥ जम्बुकौक्रोष्टुवरुणौपृथुकौचिपिटार्भ
कौ । आलोकौदर्शनोद्योतौभेरीपटहमानकौ ॥ ३ ॥ उत्सङ्गचिह्नयो
रङ्कःकलङ्कोङ्कापवादयोः । तक्षकोनागवर्द्धक्योरर्कःस्फटिकसूर्य्य
योः ॥ ४ ॥ मारुतेवेधसिब्रध्नेपुंसिकःकंशिरोऽम्बुनोः । स्यात्पुलाकस्तुच्छ
धान्ये संक्षेपेभक्तसिक्थके ॥ ५ ॥ उलूकेकरिणःपुच्छमूलोपान्तेचपेचकः
। कमण्डलौचकरकःसुगतेचविनायकः ॥ ६ ॥ किष्कुर्हस्तेवितस्तौच

अम३ शूककीटे च वृश्चिकः । प्रतिकूले प्रतीकस्त्वेकदेशे च पुंस्ययम् ॥ ७ ॥
ना ३ स्याद्भूतिकन्तु भूनिम्बे कत्तृणे भूस्तृणेऽपि च । ज्योत्स्निकायाञ्च घोषे च को
षाशातक्यथ कट्फले ॥ ८ ॥ सिते च खदिरे सोमवल्कः स्यादथ सि
ह्लके । तिलकल्के च पिण्याको वाह्लीकं रामठेऽपि च ॥ ९ ॥ महेन्द्र
गुग्गुलूलूकव्यालग्राहिषु कौशिकः । रुक्तापशंकास्वातङ्कः स्वल्पेऽपि क्षुल्ल
कस्त्रिषु ॥ १० ॥ जैवातृकः शशाङ्केऽपि खुरेऽप्यश्वस्य वर्त्तकः । व्याघ्रेऽपि
पुण्डरीको नायमान्यामपि दीपकः ॥ ११ ॥ शालावृकाः कपिक्रोष्टुश्वानः
स्वर्णेऽपि गैरिकम् । पीडार्थेऽपि व्यलीकं स्यादलीकं त्वप्रियेऽनृते ॥ १२ ॥
शीलान्वयावनूके द्वे शल्के शकलवल्कले । साष्टे शते सुवर्णानां हेम्न्यु
रोभूषणे पले ॥ १३ ॥ दीनारेऽपि च निष्कोऽस्त्री कल्कोऽस्त्री समलैनसोः
। दम्भेऽप्यथ पिनाकोऽस्त्री शूलशंकरधन्वनोः ॥ १४ ॥ धेनुका तु करे
ण्वां च मेघजाले च कालिका । कारिका यातनावृत्त्योः कर्णिका कर्णभूषणे
॥ १५ ॥ करिहस्ताङ्गुलौ पद्मबीजकोश्यां त्रिषूत्तरे । वृन्दारकौ रूपिमुख्या
वेके मुख्यान्यकेवलाः ॥ १६ ॥ स्याद्दाम्भिकः कौक्कुटिको यश्चादूरेरितेक्ष
णः । लालाटिकः प्रभोर्भालदर्शी कार्याक्षमश्च यः ॥ १७ ॥ भूभृन्नित
म्ब वलय चक्रेषु कटकोऽस्त्रियाम् । सूच्यग्रे क्षुद्रशत्रौ च रोमहर्षे च क
ण्टकः ॥ १८ ॥ पाकौ पक्षिशिशू मध्यरत्ने नेतरि नायकः । पर्य्य
ङ्कः स्यात्परिकरेऽप्यार्द्रायामपि लुब्धकः ॥ १९ ॥ पेटकस्त्रिषु वृन्देऽपि

वैदेश्ये च देशिकः । खेटकौ ग्रामफलकौ धीवरेऽपि च जालिकः ॥ २० ॥
पुष्परेणौ च किंजल्कः शुल्कोऽस्त्री स्त्रीधनेऽपि च । स्यात्कल्लोलेप्युत्क
लिका वार्द्धकं भाववृन्दयोः ॥ २१ ॥ करिण्यां चापि गणिका दारकौ बाल
भेदकौ । अन्धेऽप्यनेडमूकः स्यात् टंकौ दर्प्याश्मदारकौ ॥ २२ ॥ इति
कान्ताः ॥ मयूखस्त्विट्करज्वालास्वलिबाणौ शिलीमुखौ । शंखो नि
धौ ललाटास्थ्नि कम्बौ न स्त्रीन्द्रियेऽपि खम् ॥ २३ ॥ घृणिज्वाले अपि शिखे
उपलेपे च गोमुखम् । ॥ इति खान्ताः ॥ भुजङ्गः पन्नगे षिङ्गे शैलवृक्षौ
नगावगौ ॥ २४ ॥ आशुगौ वायुविशिखौ शरार्कविहगाः खगाः । पतङ्गौ
पक्षिसूर्यौ च पूगः क्रमुकवृन्दयोः ॥ २५ ॥ पशवोऽपि मृगा वेगः प्रवाह
जवयोरपि । परागः कौसुमे रेणौ स्नानीयादौ रजस्यपि ॥ २६ ॥ गजेऽ
पि नागमातङ्गावपाङ्गस्तिलकेऽपि च । सर्गः स्वभावनिर्मोक्षनिश्चयाध्या
यसृष्टिषु ॥ २७ ॥ योगः सन्नहनोपायध्यानसंगतियुक्तिषु । भोगः सु
खे स्त्र्यादिभृतावहेश्च फणकाययोः ॥ २८ ॥ चातके हरिणे पुंसि सार
ङ्गः शबले त्रिषु । कपौ च प्लवगः शापे त्वभिषङ्गः पराभवे ॥ २९ ॥ यानाद्य
ङ्गे युगः पुंसि युगं युग्मे कृतादिषु । स्वर्गेषुपशुवाग्वज्रदिङ्नेत्रघृणिभूजले
॥ ३० ॥ लक्ष्यदृष्ट्या स्त्रियां पुंसि गौः लिङ्गं चिह्नशेफसोः । शृङ्गं प्राधान्य
सान्वोश्च वराङ्गं मूर्द्धगुह्ययोः ॥ ३१ ॥ भगं श्रीकाममाहात्म्यवीर्ययत्नार्क
कीर्तिषु । ॥ इति गान्ताः ॥ परिघः परिघातेऽस्त्रेऽप्योघो वृन्देऽम्भसां रये

अमर३ ॥ ३२ ॥ मूल्ये पूजाविधावर्घोऽंहोदुःखव्यसनेष्वघम् । त्रिष्विष्टेऽल्पे
ना ३ लघुः ॥ इति घान्ताः ॥ काचाः शिक्यमृद्भेददृग्रुजः ॥ ३३ ॥ विपर्या
से विस्तरे च प्रपञ्चः पावके शुचिः । मास्यमात्ये चात्युपधे पुंसि मेध्ये सिते त्रिषु
॥ ३४ ॥ अभिष्वङ्गे स्पृहायां च गभस्तौ च रुचिः स्त्रियाम् ।॥ इति चान्ताः ॥
केकिताक्ष्यौ वहिभुजौ दन्तविप्राण्डजा द्विजाः ॥ ३५ ॥ अजा विष्णुह
रच्छागा गोष्ठाध्वनिवहा व्रजाः । धर्मराजौ जिनयमौ कुञ्जो दन्तेऽपि न
स्त्रियाम् ॥ ३६ ॥ बलजे क्षेत्रपूर्द्वारे बलजा वल्गुदर्शना । समे क्ष्मांशे रणे
ऽप्याजिः प्रजा स्यात्सन्ततौ जने ॥ ३७ ॥ अब्जौ शंखशशाङ्कौ च स्व
केनित्ये निजं त्रिषु ।॥ इति जान्ताः ॥ पुंस्यात्मनि प्रवीणे च क्षेत्रज्ञो वाच्यलि
ङ्गकः ॥ ३८ ॥ संज्ञा स्याच्चेतना नाम हस्ताद्यैश्चार्थसूचना ।॥ इति ञा
न्ताः ॥ काकेभगण्डौ करटौ गजगण्डकटी कटौ ॥ ३९ ॥ शिपिविष्टस्तु
खलतौ दुश्चर्मणि महेश्वरे । देवशिल्पिन्यपि त्वष्टा दिष्टं दैवेऽपि न द्वयोः
॥ ४० ॥ रसे कटुः कट्वकार्ये त्रिषु मत्सरतीक्ष्णयोः । रिष्टं क्षेमाशुभाभावे
ष्वरिष्टे तु शुभाशुभे ॥ ४१ ॥ मायानिश्चलयन्त्रेषु कैतवानृतराशिषु । अयो
घने शैलशृङ्गे सीराङ्गे कूटमस्त्रियाम् ॥ ४२ ॥ सूक्ष्मैलायां त्रुटिः स्त्री स्यात्का
लेऽल्पे संशयेऽपि सा । अत्युत्कर्षाश्रयः कोट्यो मूले लग्नकचे जटा ॥ ४३ ॥
व्युष्टिः फले समृद्धौ च दृष्टिर्ज्ञानेऽक्ष्णि दर्शने । इष्टिर्यागेच्छयोः सृष्टं निश्चि
ते बहुनि च त्रिषु ॥ ४४ ॥ कष्टे तु कृच्छ्रगहने दक्षामन्दागदेषु तु । पटुर्द्वौ वा

च्यलिङ्गे च ॥ इति टान्ताः ॥ । नीलकण्ठः शिवेऽपि च ॥ ४५ ॥ पुंसि को अम ३
ष्ठोऽन्तर्जठरं कुसूलोऽन्तर्गृहं तथा । निष्ठा निष्पत्तिनाशान्ताः काष्ठोत्क ना ३
र्षे स्थितौ दिशि ॥ ४६ ॥ त्रिषु ज्येष्ठोऽतिशस्तेऽपि कनिष्ठोऽतियुवाल्पयोः ।
॥ इति ठान्ताः ॥ दण्डोऽस्त्री लगुडेऽपि स्याद्गुडो गोलेक्षुपाकयोः ॥ ४७ ॥
सर्पमांसात्पशू व्याडौ गोभूवाचस्त्विडा इलाः । क्ष्वेडा वंशशलाकापि नाडी काले
ऽपि षट्क्षणे ॥ ४८ ॥ काण्डोऽस्त्री दण्डबाणार्ववर्गावसरवारिषु । स्या
द्भाण्डमश्वाभरणेऽमत्रे मूलवणिग्धने ॥ ४९ ॥ इति डान्ताः ॥ भृशप्रतिज्ञ
योर्बाढं प्रगाढं भृशकृच्छ्रयोः । शक्तस्थूलौ त्रिषु दृढौ व्यूढौ विन्यस्तसंहतौ
॥ ५० ॥ इति ढान्ताः ॥ भ्रूणोऽर्भके स्त्रैणगर्भे बाणो बलिसुते शरे । कणोऽति
सूक्ष्मे धान्यांशे संघाते प्रमथे गणाः ॥ ५१ ॥ पणो द्यूतादिषूत्सृष्टे भृतौ मूल्ये धने
ऽपि च । मौर्व्यां द्रव्याश्रिते सत्त्वशुक्लसन्ध्यादिके गुणाः ॥ ५२ ॥ निर्व्यापार
स्थितौ कालविशेषोत्सवयोः क्षणः । वर्णो द्विजादौ शुक्लादौ स्तुतौ वर्णं तु वा
क्षरे ॥ ५३ ॥ अरुणो भास्करेऽपि स्याद्वर्णभेदेऽपि च त्रिषु । स्थाणुः श
र्वेऽप्यथ द्रोणः काकेऽपि च रवेरणः ॥ ५४ ॥ ग्रामणीर्नापिते पुंसि श्रेष्ठे ग्रा
माधिपे त्रिषु । ऊर्णा मेषादिलोम्नि स्यादावर्ते चान्तरा भ्रुवोः ॥ ५५ ॥ हरि
णी स्यान्मृगी हेमप्रतिमा हरिता च या । त्रिषु पाण्डौ च हरिणः स्थूणा स्तम्भे
ऽपि वेश्मनः ॥ ५६ ॥ तृष्णे स्पृहापिपासे द्वे जुगुप्साकरुणे घृणे । वणि
क्पथोऽपि विपणिः सुराप्रत्यक्च वारुणी ॥ ५७ ॥ करेणुरिभ्यां स्त्री ने

अम३ भेद्वविणानुबलन्धनम् । शरणंगृहरक्षित्रोःश्रीपर्णंकमलेऽपि च
ना ३ ॥ ५८ ॥ विषाभिमरलोहेषुतीक्ष्णंक्लीबेखरेत्रिषु । प्रमाणंहेतुम
र्य्यादाशास्त्रेयत्ताप्रमातृषु ॥ ५९ ॥ करणंसाधकतमंक्षेत्रगात्रेन्द्रिये
ष्वपि । प्राण्युत्पादेसंसरणमसम्बाधचमूगतौ ॥ ६० ॥ घण्टापथे
ऽथवान्तान्नेसमुद्गिरणमुन्नये । अतस्त्रिषुविषाणंस्यात्पशुशृङ्गेभदन्त
योः ॥ ६१ ॥ प्रवणःक्रमनिम्नोर्व्यांप्रह्वेनातुचतुष्पथे । संकीर्णौनिचिता
शुद्धावीरिणंशून्यमूषरम् ॥ ६२ ॥ इतिणान्ताः ॥ देवसूर्य्यौवि
वस्वन्तौ सरस्वन्तौनदार्णवौ । पक्षितार्क्ष्यौगरुत्मन्तौशकुन्तौभास
पक्षिणौ ॥ ६३ ॥ अग्न्युत्पातौधूमकेतूजीमूतौमेघपर्वतौ । हस्तौतुपा
णिनक्षत्रेमरुतौपवनामरौ ॥ ६४ ॥ यन्ताहस्तिपकेसूतेभर्त्ताधात
रिपोष्टरि । यानपात्रेशिशौपोतःप्रेतःप्राण्यन्तरेमृते ॥ ६५ ॥ ग्रहभे
देध्वजेकेतुःपार्थिवेतनयेसुतः । स्थपतिःकारुभेदेऽपिभूभृद्भूमिधरेन्द
पे ॥ ६६ ॥ मूर्द्धाभिषिक्तोभूपेऽपिऋतुःस्त्रीकुसुमेऽपिच । विष्णावप्य
जिताव्यक्तौसूतस्त्वष्टरिसारथौ ॥ ६७ ॥ व्यक्तःप्राज्ञेऽपिदृष्टान्तावुभेशा
स्त्रनिदर्शने । क्षत्तास्यात्सारथौद्वाःस्थेक्षत्रियायाञ्चशूद्रजे ॥ ६८ ॥
वृत्तान्तःस्यात्प्रकरणेप्रकारेकार्त्स्न्यवार्त्तयोः । आनर्त्तःसमरेनृत्यस्थान
नीवृद्विशेषयोः ॥ ६९ ॥ कृतान्तोयमसिद्धान्तदैवाकुशलकर्मसु । श्लेष्मा
दिरसरक्तादिमहाभूतानितद्गुणाः ॥ ७० ॥ इन्द्रियाण्यश्मविकृतिःशब्द

योनिस्त्वधासवः। कक्षान्तरेऽपिशुद्धान्तोन्दृपस्यासर्वगोचरे ॥ ७१॥ 
कासूसामर्थ्ययोःशक्तिर्मूर्त्तिःकाठिन्यकाययोः। विस्तारवल्ल्योर्व्रततिर्वि 
सतोरात्रिवेश्मनोः ॥ ७२॥ क्षयार्चयोरपचितिःसातिर्दानावसानयोः।
आर्त्तिःपीडाधनुःकोट्योर्ज्ञातिःसामान्यजन्मनोः ॥ ७३॥ प्रचारस्यन्द
योरीतिरीतिर्डिम्बप्रवासयोः। उदयेऽधिगमेप्राप्तिस्त्रेतात्वग्नित्रयेयुगे
॥ ७४॥ वीणाभेदेऽपिमहतीभूतिर्भस्मनिसम्पदि। नदीनगर्योर्नागा
नांभोगवत्यथसंगरे ॥ ७५॥ संगेसभायांसमितिःक्षयवासावपि
क्षिती। रवेरर्चिश्चशस्त्रञ्च वह्निज्वालाचहेतयः ॥ ७६॥ जगतीज
गतिच्छन्दोविशेषेऽपिक्षितावपि। पंक्तिश्छंदोऽपिदशमंस्यात्प्रभावेऽ
पिचायतिः ॥ ७७॥ पत्तिर्गतौचमूलेतुपक्षतिःपक्षभेदयोः। प्रकृति
र्योनिलिङ्गेचकैशिक्याद्याश्चवृत्तयः ॥ ७८॥ सिकताःस्युर्बालुकापिवेदे
श्रवसिचश्रुतिः। वनिताजनितात्यर्थानुरागायाञ्चयोषिति ॥ ७९॥
गुप्तिःक्षितिव्युदासेऽपिधृतिर्धारणधैर्ययोः। बृहतीक्षुद्रवार्त्ताकीछंदो
भेदेमहत्यपि ॥ ८०॥ वासितास्त्रीकरेण्वोश्चवार्त्तावृत्तौजनश्रुतौ। वा
र्त्ताफल्गुन्यरोगेचत्रिष्वप्सुचघृतामृते ॥ ८१॥ कलधौतंरूप्यहेम्नोर्नि
मित्तंहेतुलक्षणोः। श्रुतंशास्त्रावधृतयोर्युगपर्याप्तयोःकृतम् ॥ ८२॥
अ[illegible]हितंमहाभीतिःकर्मजीवानपेक्षिच। युक्तेक्ष्मादावृतेभूतंप्राण्यतीते
समे[illegible]षु ॥ ८३॥ वृत्तंपद्येचरित्रेत्रिष्वतीतेदृढनिस्तले। महद्राज्यंचा

वगीतं जन्ये स्याद्गर्हिते त्रिषु ॥ ८४ ॥ श्वेतं रूप्येऽपि रजतं हेम्नि रूप्ये
सिते त्रिषु । त्रिष्वितो जगदिङ्गेऽपि रक्तं नील्यादि रागि च ॥ ८५ ॥ अवदा
तः सिते पीते शुद्धे बद्धार्जुनौ सितौ । युक्तेऽतिसंस्कृते मर्षिण्यभिनीतो
ऽथ संस्कृतम् ॥ ८६ ॥ कृत्रिमे लक्षणोपेतेऽप्यनन्तोऽनवधावपि ।
ख्याते हृष्टे प्रतीतोऽभिजातस्तु कुलजे बुधे ॥ ८७ ॥ विविक्तौ पूतविजनौ मू
र्छितौ मूढसोच्छ्रयौ । द्वौ चाम्लपरुषौ शुक्तौ शिती धवलमेचकौ ॥ ८८ ॥
सत्ये साधौ विद्यमाने प्रशस्तेऽभ्यर्हिते च सत् । पुरस्कृतः पूजितेऽरात्यभियु
क्तेऽग्रतः कृते ॥ ८९ ॥ निवातावाश्रयावातौ शस्त्राभेद्यं च वर्म यत् । जा
तोन्नद्धप्रवृद्धाः स्युरुच्छ्रिता उत्थितास्त्वमी ॥ ९० ॥ वृद्धिमत्प्रोद्यतोत्प
न्ना आदृतौ सादरार्चितौ । ॥ इति तान्ताः ॥ अर्थोऽभिधेयरैवस्तुप्रयो
जननिवृत्तिषु ॥ ९१ ॥ निदानागमयोस्तीर्थमृषिजुष्टजले गुरौ । सम
र्थस्त्रिषु शक्तिस्थे सम्बद्धार्थे हितेऽपि च ॥ ९२ ॥ दशमीस्थौ क्षीणराग
वृद्धौ वीथी पदव्यपि । आस्थानी यत्नयोरास्था प्रस्थोऽस्त्री सानुमानयोः
॥ ९३ ॥ इति थान्ताः ॥ अभिप्रायवशौ छन्दौ अब्दौ जीमूतवत्सरौ ।
अपवादौ तु निन्दाज्ञे दायादौ सुतबान्धवौ ॥ ९४ ॥ पादा रश्म्यङ्घ्रितू
र्यांशाश्चन्द्राग्न्यर्कास्तमोनुदः । निर्वादो जनवादेऽपि शादो जम्बालशष्प
योः ॥ ९५ ॥ आरावे रुदिते त्रातर्याक्रन्दो दारुणे रणे । स्यात्प्रसा
दोऽनुरोधेऽपि सूदः स्याद्व्यञ्जनेऽपि च ॥ ९६ ॥ गोष्ठाध्यक्षेऽपि गोवि

॥ हर्षेऽप्यामोद वन्मदः । प्राधान्येराजलिङ्गे च वृषाङ्के ककुदोऽस्त्रियाम्
॥ ९७ ॥ स्त्रीसंविज्ञान संभाषा क्रियाकारजिनामसु । धर्मे रहस्युपनि
षत्स्यादृतौ वत्सरे शरत् ॥ ९८ ॥ पदं व्यवसितित्राणस्थानलक्ष्मांघ्रि
वस्तुषु । गोष्पदं सेवितेमाने प्रतिष्ठाकृत्यमास्पदम् ॥ ९९ ॥ त्रिष्विष्ट
मधुरौ स्वादू मृदू चातीक्ष्णकोमलौ । मूढाल्पापटुनिर्भाग्या मन्दाः स्युर्द्वौ तु
शारदौ ॥ १०० ॥ प्रत्यग्राप्रतिभौ विद्वत्सुप्रगल्भौ विशारदौ । ॥ इति दा
न्ताः ॥ व्यामो वटश्च न्यग्रोध उत्सेधः काय उन्नतिः ॥ १०१ ॥ पर्य्याहारश्च
मार्गश्च विवधौ वीवधौ च तौ । परिधिर्यज्ञियतरोः शाखायामुपसूर्य्यके
॥ १०२ ॥ बन्धकं व्यसनं चेतः पीडाधिष्ठानमाधयः । स्युः समर्थननीवाकनि
यमाश्च समाधयः ॥ १०३ ॥ दोषोत्पादेऽनुबन्धः स्यात्प्रकृत्यादिविनश्वरे ।
मुख्यानुपायिनि शिशौ प्रकृतस्यानुवर्त्तने ॥ १०४ ॥ विधुर्विष्णौ चन्द्रमसि
परिच्छेदे बिले ऽवधिः । विधिर्विधाने दैवे च प्रणिधिः प्रार्थने चरे ॥ १०५ ॥ बु
धो वृद्धे पण्डितेऽपि स्कन्धः समुदयेऽपि च । देशे नदविशेषेऽब्धौ सिन्धुर्ना
सरिति स्त्रियाम् ॥ १०६ ॥ विधा विधौ प्रकारे च साधू रम्येऽपि च त्रिषु । बधू
र्जाया स्नुषा स्त्री च सुधा लेपोऽमृतं स्नुही ॥ १०७ ॥ सन्धा प्रतिज्ञा मर्य्यादा श्र
द्धा संप्रत्ययः स्पृहा । मधु मद्ये पुष्परसे क्षौद्रेऽप्यन्धं तमस्यपि ॥ १०८ ॥ अ
तवि ... समुन्नद्धौ पण्डितंमन्यगर्वितौ । ब्रह्मबन्धुरधिक्षेपे निर्देशेऽथावद्ध
क्षिताः
॥ १०९ ॥ अविदूरोऽप्यवष्टब्धः प्रसिद्धौ ख्यातभूषितौ । ॥ इति धा

अमर ३ नाः ॥ सूर्य्येवह्नौचित्रभानूभानूरश्मिदिवाकरौ ॥ ११० ॥ भूतात्मानौधा
ना ३ तृदेहौमूर्खनीचौपृथग्जनौ । ग्रावाणौशैलपाषाणौपत्रिणौशरपक्षिणौ
॥ १११ ॥ तरुशैलौशिखरिणौशिखिनौवह्निबर्हिणौ । प्रतियत्नावुभौ
लिप्सोपग्रहावथसादिनौ ॥ ११२ ॥ द्वौसारथिहयारोहौवाजिनोऽश्वेषु
पक्षिणः । कुलेऽप्यभिजनोजन्मभूम्यामप्यथहायनाः ॥ ११३ ॥ व
र्षार्चिर्व्रीहिभेदास्स्युश्चन्द्राग्न्यर्का विरोचनाः । केशेऽपिवृजिनाविश्वकर्मा
र्कसुरशिल्पिनोः ॥ ११४ ॥ आत्मायत्नोधृतिर्बुद्धिःस्वभावोब्रह्मवर्ष्म
च । शक्रघातुकमत्तेभावर्षुकाब्दाघनाघनाः ॥ ११५ ॥ अभिमानोऽर्थादि
दर्पेज्ञानेप्रणयहिंसयोः । घनोमेघेमूर्त्तिगुणेत्रिषुमूर्त्तेनिरन्तरे ॥ ११६ ॥
इनःसूर्य्येप्रभौराजामृगाङ्केक्षत्रियेन्दपे । वाणिन्यौनर्त्तकीमत्तेस्त्रवन्त्या
मपिवाहिनी ॥ ११७ ॥ ह्लादिन्यौवज्रतडितौवन्दायामपिकामिनी ।
त्वग्देहयोरपितनुःसूनाधोजिह्विकापिच ॥ ११८ ॥ क्रतुविस्तारयोर
स्त्रीवितानंत्रिषुतुच्छके । मन्देऽथकेतनंकृत्येकेतावुपनिमंत्रणे ॥ ११९ ॥
वेदस्तत्त्वंतपोब्रह्मब्रह्माविप्रःप्रजापतिः । उत्साहनेचहिंसायांसूच
नेचापिगन्धनम् ॥ १२० ॥ आतञ्चनंप्रतीवापजवनाप्यायनार्थकम् ।
व्यञ्जनंलाञ्छनंश्मश्रुनिष्ठानावयवेष्वपि ॥ १२१ ॥ स्यात्कौलीनंलोकवादे
युद्धेपश्वहिपक्षिणाम् । स्यादुद्यानंनिःसरणेवनभेदेप्रयोजने ॥ १२२ ॥
अवकाशेस्थितौस्थानंक्रीडादावपिदेवनम् । उत्थानंपौरुषेतन्त्रेसन्नि

विष्टाङ्गमेऽपिच ॥ १२३ ॥ व्युत्थानंप्रतिरोधेचविरोधाचरणेऽपिच । मा अम३
रणेमृतसंस्कारेगतौद्रव्योपपादने ॥ १२४ ॥ निवर्त्तनोपकरणानुव ना ३
ज्यास्तुचसाधनम् । निर्यातनं वैरशुद्धौदानेन्यासार्पणेऽपिच ॥ १२५ ॥
व्यसनंविपदिभ्रंशेदोषेकामजकोपजे । पक्ष्माक्षिलोम्नि किञ्जल्केतंत्वा
द्यंशेऽप्यणीयसि ॥ १२६ ॥ तिथिभेदेक्षणेपर्ववर्त्मनेत्रच्छदेध्वनि ।
अकार्य्यगुह्येकौपीनेमिथुनंसङ्गतौरते ॥ १२७ ॥ प्रधानंपरमात्माधीःप्र
ज्ञानंबुद्धिचिह्नयोः । प्रसूनंपुष्पफलयोर्निधनंकुलनाशयोः ॥ १२८ ॥
क्रन्दनेरोदनाह्वानेवर्ष्मदेहप्रमाणयोः । गृहदेहत्विट्प्रभावधामान्य
ऽथचतुष्पथे ॥ १२९ ॥ सन्निवेशेचसंस्थानंलक्ष्मचिह्नप्रधानयोः । आ
च्छादनेसम्पिधानमपवारणमित्युभे ॥ १३० ॥ आराधनंसाधनेस्याद
वाप्तौतोषणेऽपिच । अधिष्ठानंचक्रपुरप्रभावाध्यासनेष्वपि ॥ १३१ ॥
रत्नंस्वजातिश्रेष्ठेऽपिवनेसलिलकानने । तलिनंविरलेस्तोकेवाच्यलि
ङ्गस्तथोत्तरे ॥ १३२ ॥ समानाःसत्समैकेस्युःपिशुनौखलसूचकौ ।
। होनन्यूनावूनगर्ह्यौवेगिशूरौतरस्विनौ ॥ १३३ ॥ अभिपन्नोऽपरा
द्धोऽपिग्रस्तव्यापन्नतावपि । ॥ इतिनान्ताः ॥ कलापोभूषणेबर्हेतूणीरे
संहतेऽपिच ॥ १३४ ॥ परिच्छदेपरीवापःपर्युप्तेसलिलस्थितौ । गो
धुगो
पपतीगोपौहरविष्णूवृषाकपी ॥ १३५ ॥ वाष्पमूष्माश्रुकशिपुरन्नम
माच्छा
दनंद्वयम् । तल्पंशय्याट्टदारेषुस्तम्बेऽपिविटपोऽस्त्रियाम्

अमर
ना २

॥ १३६ ॥ प्रांप्ररूपस्वरूपाभिरूपाबुधमनोज्ञयोः । भेद्यलिङ्गा अमी कूर्मीवीणाभेदःस्थकस्तूपी ॥ इतिपान्ताः ॥ १३७ ॥ रवर्णेपुंसिरेफः स्यात्कुत्सितेवाच्यलिङ्गकः । ॥ इतिफान्ताः ॥ अन्तराभवसत्त्वेऽश्वेगन्धर्वोदिव्यगायने ॥ १३८ ॥ कम्बुर्नावलयेशंखेद्विजिह्वौसर्पसूचकौ । पूर्वोऽन्यलिङ्गःप्रागाहपुंवहुत्वेऽपिपूर्वजान् ॥ १३९ ॥ ॥ इतिबान्ताः ॥ कुम्भौघटेभमूर्द्धांशौडिम्भौतुशिशुबालिशौ । स्तम्भौस्थूणाजडीभावौशंभूब्रह्मत्रिलोचनौ ॥ १४० ॥ कुक्षिभ्रूणार्भकागर्भाः विश्रम्भः प्रणयेऽपिच । स्याद्वर्थ्यादुन्दुभिःपुंसिस्यादक्षेदुन्दुभिःस्त्रियाम् ॥ १४१ ॥ स्यान्महारजनेक्लीवंकुसुम्भंकरकेपुमान् । क्षत्रियेऽपिच नाभिर्नासुरभिर्गविचस्त्रियाम् ॥ १४२ ॥ सभासंसदिसभ्येचत्रिष्वध्यक्षेऽपिवल्लभः । ॥ इतिभान्ताः ॥ किरणप्रग्रहौरश्मीकपिभेकौप्लवङ्गमौ ॥ १४३ ॥ इच्छामनोभवौकामौशौर्योद्योगौपराक्रमौ । धर्माःपुण्ययमन्यायस्वभावाचारसोमपाः ॥ १४४ ॥ उपायपूर्वआरम्भउपधाचाप्युपक्रमः । वणिक्पथःपुरंवेदोनिगमोनागरोवणिक् ॥ १४५ ॥ नैगमौद्वौवलेरामोनीलचारुसितेत्रिषु । शब्दादिपूर्वोवृन्देऽपिग्रामःक्रान्तौचविक्रमः ॥ १४६ ॥ गुल्मारुक्स्तम्बसेनाश्चजामिःस्वसृकुलस्त्रियोः । क्षितिक्षान्त्योःक्षमायुक्तेक्षमंशक्तेहितेत्रिषु ॥ १४७ ॥ त्रिषुश्यामौहरित्कृष्णौश्यामास्याच्छारिवानिशा । ललामंपुच्छपुण्ड्राश्वभूषाप्राधान्यकेतुषु ॥ १४८ ॥ सूक्ष्ममध्यात्ममप्याद्येप्रधानेप्रथ

मलिषु । वामावल्गुप्रती पौद्रावधमौन्यूनकुत्सितौ ॥ १४९ ॥ जीर्णश्चपरि अमर३
भुक्तश्चयातयाममिदंद्वयम् । ॥ इतिमान्ताः ॥ तुरङ्गगरुडौतार्क्ष्यौनिल ना ३
यापचयौक्षयौ ॥ १५० ॥ श्वश्रुर्य्यादिवरश्यालौभ्रातृव्यौभ्रातृजद्वि
षौ । पर्जन्यौरसदब्देन्द्रौस्यादर्य्यःस्वामिवैश्ययोः ॥ १५१ ॥ तिष्यःपु
ष्येकलियुगेपर्य्यायोऽवसरेक्रमे । प्रत्ययोऽधीनशपथज्ञानविश्वास
हेतुषु ॥ १५२ ॥ रंध्रेशब्देऽथानुशयोदीर्घद्वेषानुतापयोः । स्थूलोच्चय
स्त्वसाकल्येगजानांमध्यमेगते ॥ १५३ ॥ समयाःशपथाचारकाल
सिद्धान्तसंविदः । व्यसनान्यशुभंदैवविपदित्यनयास्त्रयः ॥ १५४ ॥
अत्ययोऽतिक्रमेकृच्छ्रेदोषेदण्डेऽप्यथापदि । युद्धायत्योःसंपरायःपू
ज्यस्तुश्वशुरेऽपिच ॥ १५५ ॥ पश्चादवस्थायिबलंसमवायश्चसन्न
यौ । संघातेसन्निवेशेचसंस्त्यायःप्रणयास्त्वमी ॥ १५६ ॥ विस्रंभयाञ्चा
प्रेमाणोविरोधेऽपिसमुच्छ्रयः । विषयोयस्ययोज्ञातस्तत्रशब्दादिकेष्वपि
॥ १५७ ॥ निर्यासेऽपिकषायोऽस्त्रीसभायांचप्रतिश्रयः । प्रायोभू
म्न्यन्तगमनेमन्युर्दैन्येक्रतौक्रुधि ॥ १५८ ॥ रहस्योपस्थयोर्गुह्यंस
त्यंशपथतथ्ययोः । वीर्य्यंबलेप्रभावेचद्रव्यंभव्येगुणाश्रये ॥ १५९ ॥
धिष्ण्यंस्थानेगृहेभेग्नौभाग्यंकर्मशुभाशुभम् । कशेरुहेम्नोर्गाङ्गेयंवि
शल्या ष्णिश्यापिच ॥ १६० ॥ वृषाकपायीश्रीगौर्य्योरभिख्यानामशो
भयोः
। आरम्भोनिष्कृतिःशिक्षापूजनंसम्प्रधारणम् ॥ १६१ ॥

अमर
का ३

उपायः कर्म चेष्टा च चिकित्सा च नव क्रियाः । छाया सूर्यप्रिया कान्तिः प्र
तिविम्ब मनातपः ॥ १६२ ॥ कक्ष्या प्रकोष्ठे हर्म्यादेः काञ्च्यां मध्येभ ब न्ध
ने । कृत्या क्रियादेवतयोस्त्रिषु भेद्ये धनादिभिः ॥ १६३ ॥ जन्यः स्यात्ज
नवादेऽपि जघन्योऽन्त्येऽधमेऽपि च । गर्ह्याधीनौ च वक्तव्यौ कल्यौ स
ज्जनिरामयौ ॥ १६४ ॥ आत्मवाननपेतोऽर्थादर्थ्यौ पुण्यं तु चार्व्वपि ।
रूप्यं प्रशस्तरूपेऽपि वदान्यो वल्गुवागपि ॥ १६५ ॥ न्याय्येऽपि मध्यः
सौम्यं तु सुन्दरे सोमदैवते । ॥ इति यान्ताः ॥ निवहावसरौ वारौ सं
स्तरौ प्रस्तराध्वरौ ॥ १६६ ॥ गुरू गीष्पति पित्राद्यौ द्वापरौ युगसंशयौ । प्र
कारौ भेदसादृश्ये आकारा विङ्गिताकृती ॥ १६७ ॥ किंशारु धान्यशूकेषु
[illegible] न्वधराधरौ । अद्रयो द्रुमशैलार्काः स्त्रीस्तनाब्दौ पयोधरौ ॥ १६८ ॥
[illegible] रिदानवावृत्रावलिहस्तांशवः कराः । प्रदरा भंगनारीरुग्वाणा अ
[illegible] काचा अपि ॥ १६९ ॥ अजातशृङ्गो गौः कालेऽप्यश्मश्रुर्न्ना च तूवरः
[illegible] ऽपि राः परिकरः पर्य्यङ्कपरिवारयोः ॥ १७० ॥ मुक्ताशुद्धौ च ता
[illegible] छरो वायोस्तु त्रिषु । कर्व्वूरोऽथ प्रतिज्ञाजिसंविदापत्सु संगरः
[illegible] ॥ १७१ ॥ वेदभेदे गुप्तिवादे मन्त्रो मित्रो रवावपि । मखेषु यूप खण्डेऽपि
[illegible] ग्गेहोऽप्यवस्करः ॥ १७२ ॥ आडम्बरस्तूर्य्यरवे गजेन्द्राणां
[illegible] जिते । अभिहारोऽभियोगे च चौर्य्ये सन्नहनेऽपि च ॥ १७३ ॥ स्या
[illegible] ङ्गे परीवारः खड्गकोशे परिच्छदे । विष्टरो विटपी दर्भमुष्टिः पीठ

द्यामासनम् ॥ १७४ ॥ द्वारिद्वाःस्थेप्रतीहारःप्रतीहार्य्यप्यनन्तरे । वि अम३
पुलेनकुलेविष्णौबभ्रुःस्यात्पिङ्गलेत्रिषु ॥ १७५ ॥ सारोबलेस्थिरांशेच ना ३
न्याय्येक्लीवंवरेत्रिषु । दुरोदरोद्यूतकारेपणेद्यूतेदुरोदरम् ॥ १७६ ॥
महारण्येदुर्गपथेकान्तारःपुन्नपुंसकम् । मत्सरोऽन्यशुभद्वेषेतद्वत्कृ
पणयोस्त्रिषु ॥ १७७ ॥ देवाद्वृतेवरःश्रेष्ठेत्रिषुक्लीवेमनाक्प्रिये । वं
शाङ्कुरेकरीरोऽस्त्रीतरुभेदेघटेचना ॥ १७८ ॥ नाचमूजघनेहस्त
सूत्रेप्रतिसरोऽस्त्रियाम् । यमानिलेन्द्रचन्द्रार्कविष्णुसिंहांशुवाजिषु
॥ १७९ ॥ शुकाहिकपिभेकेषुहरिर्नाकपिलेत्रिषु । शर्कराकर्परांशेऽ
पियात्रास्याद्यापनेगतौ ॥ १८० ॥ इराभूवाक्सुराप्सुस्यात्तन्द्रीनि
द्राप्रमीलयोः । धात्रीस्यादुपमातापिक्षितिरप्यामलक्यपि ॥ १८१ ॥
क्षुद्राव्यङ्गानटीवेश्यासरघाकण्टकारिका । त्रिषुक्रूरेऽधमेऽल्पेऽपि
क्षुद्रेमात्रापरिच्छदे ॥ १८२ ॥ अल्पेचपरिमाणेसामात्रंकार्त्स्न्येऽवधा
रणे । आलेख्याश्चर्य्ययोश्चित्रंकलत्रंश्रोणिभार्य्ययोः ॥ १८३ ॥ योग्यभा
जनयोःपात्रंपत्रंवाहनपक्षयोः । निदेशग्रन्थयोःशास्त्रंशस्त्रमायुधलोहयोः
॥ १८४ ॥ स्याज्जटांशुकयोर्नेत्रंक्षेत्रंपत्नीशरीरयोः । मुखाग्रेक्रोडहल
योःपोत्रंगोत्रन्तुनाम्निच ॥ १८५ ॥ सत्रमाच्छादनेयज्ञेसदादानेधनेऽपि
च । अजिरंविषयेकायेऽप्यम्बरंव्योम्निवाससि ॥ १८६ ॥ चक्रंराष्ट्रेऽप्यक्ष
रन्तु मोक्षेऽपिक्षीरमप्सुच । स्वर्णेऽपिभूरिचन्द्रौद्वौद्वारमात्रेऽपिगोपु

अम२ रम्॥१८७॥ गुहादम्भौगह्वरेद्वेरहोऽन्तिकमुपह्वरे।पुरोधिकमुप
ना ३ र्यग्राण्यागारेनगरेपुरम्॥१८८॥ मन्दिरञ्चाथराष्ट्रोऽस्त्रीविषयेस्या
दुपद्रवे। दरोऽस्त्रियांभयेश्वभ्रेवज्रोऽस्त्रीहीरकेपवौ॥१८९॥ तन्त्र
म्प्रधानेसिद्धान्तेसूत्रवायेपरिच्छदे। औशीरश्चामरेदण्डेऽप्यौशीरं
शयनासने॥१९०॥ पुष्करंकरिहस्ताग्रेवाद्यभाण्डमुखेजले। व्यो
म्निखड्गफलेपद्मेतीर्थौषधिविशेषयोः॥१९१॥ अन्तरमवकाश
वधिपरिधानान्तर्धिभेदतादर्थ्ये। छिद्रात्मीयविनाबहिरवसरमध्येऽ
न्तरात्मनिच॥१९२॥ मुस्तेऽपिपिठरंराजकशेरुण्यपिनागरम्।
शार्वरन्त्वन्धतमसेघातुकेभेद्यलिङ्गकः॥१९३॥ गौरोऽरुणेसितेपीते
व्रणकार्येऽप्यरुष्करः। जठरःकठिनेऽपिस्यादधस्तादपिचाधरः
॥१९४॥ अनाकुलेऽपिचैकाग्रोव्यग्रोव्यासक्तआकुले। उपर्युदीच्य
श्रेष्ठेऽप्युत्तरःस्यादनुत्तरः॥१९५॥ एषांविपर्ययेश्रेष्ठेदूरानात्मो
त्तमाःपराः। स्वादुप्रियौतुमधुरौक्रूरौकठिननिर्दयौ॥१९६॥ उदा
रोदातृमहतोरितरस्त्वन्यनीचयोः। मन्दःस्वच्छन्दयोःस्वैरःशुभ्र
मुद्दीप्तशुक्लयोः॥१९७॥ इतिरान्ताः॥ चूडाकिरीटंकेशाश्चसंयता
मौलयस्त्रयः। द्रुमप्रभेदमातङ्गकाण्डपुष्पाणिपीलवः॥१९८॥
कृतान्तानेहसोःकालश्चतुर्थेऽपियुगेकलिः। स्यात्कुरङ्गेऽपिकमलःप्रा
वारेऽपिचकम्बलः॥१९९॥ करोपहारयोःपुंसिबलिःप्राण्यङ्गजे

स्त्रियाम् । स्थौल्यसामर्थ्यसैन्येषु बलं ना काकसीरिणोः ॥ २०० ॥ वातू अम३
लः पुंसि वात्याया मपि वातासहे त्रिषु । भेद्यलिङ्गः शठे व्यालः पुंसि स्वापद सर्पयोः ॥ २०१ ॥ ना ३
मलोऽस्त्री पापविट्किट्टान्यस्त्री शूलं रुगायुधम् । शंकावपि द्वयोः कीलः पालिरस्त्र्यङ्कपङ्क्तिषु ॥ २०२ ॥ कला शिल्पे काल भेदेऽप्याली सख्यावलीअपि । अब्ध्यम्बुविकृतौ वेला काल मर्यादयोरपि ॥ २०३ ॥ बहुला कृत्तिकागावो बहुलोऽग्नौ शितौ त्रिषु । लीलाविलास क्रियायोरुपला शर्करापि च ॥ २०४ ॥ शोणितेऽम्भसि कीलालं मूलमाद्य शिफार्थयोः । जालं समूह आनायो गवाक्षक्षारकावपि ॥ २०५ ॥ शीलं स्वभावे सद्वृत्ते शस्ये हेतुकृते फलम् । छदिर्नेत्ररुजोः क्लीवं समूहे पटलं न ना ॥ २०६ ॥ अधः स्वरूपयोरस्त्री तलः स्यान्नामिषे पलम् । और्वानलेऽपि पातालं चेलं वस्त्रेऽधमे त्रिषु ॥ २०७ ॥ कुकूलं शङ्कुभिः कीर्णे श्वभ्रे नातुतुषानले । निर्णीते केवलमिति त्रिलिङ्गं त्वेककृत्स्नयोः ॥ २०८ ॥ पर्याप्तिक्षेमपुण्येषु कुशलं शिक्षिते त्रिषु । प्रवालमङ्कुरेऽप्यस्त्री त्रिषु स्थूलं जडेऽपि च ॥ २०९ ॥ करालो दन्तुरे तुङ्गे चारौ दक्षे च पेशलः । मूर्खेऽर्भकेऽपि बालः स्याल्लोलश्चल सतृष्णयोः ॥ २१० ॥ इति लान्ताः ॥
दव दावौ वनारण्यवह्नी जन्महरो भवो । मन्त्री सहायः सचिवौ पति शाखिन राधवाः ॥ २११ ॥ अवयः शैलमेषार्का आज्ञाह्वानाध्वरा हवाः । भावः सत्त्वस्वभावाभिप्रायचेष्टात्मजन्मसु ॥ २१२ ॥ स्यादुत्पादे फले

॥ पिनिह्नवः

अम३ पुष्पे प्रसवो गर्भमोचने । अविश्वासेऽपह्नवेऽपि निह्नता वपि निह्नवः

ना ३ ॥ २१३ ॥ उत्सेकामर्षयोरिच्छाप्रसवे मह उत्सवः । अनुभावः प्रभावे

स्यात्सतां च मतिनिश्चये ॥ २१४ ॥ स्याज्जन्महेतुः प्रभवः स्थानञ्चाद्यो

पलब्धये । शूद्रायां विप्रतनये शस्त्रे पारशवः पुमान् ॥ २१५ ॥ ध्रुवो भ

मेदे क्लीबन्तु निश्चिते शाश्वते त्रिषु । स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वो ऽ

स्त्रियां धने ॥ २१६ ॥ स्त्रीकटीवस्त्रबन्धेऽपि नीवी परिपणोऽपि च । शि

वागौरीफेरवयोर्द्वन्द्वं कलहयुग्मयोः ॥ २१७ ॥ द्रव्यासुव्यवसायेषु

सत्त्वमस्त्री तु जन्तुषु । क्लीबं नपुंसकं षण्ढे वाच्यलिङ्गमविक्रमे ॥ २१८ ॥

इति वान्ताः ॥ द्वौ विशौ वैश्यमनुजौ द्वौ चराभिमरौ स्पशौ । द्वौ राशीपुञ्ज

मेषाद्यौ द्वौ वंशौ कुलमस्करौ ॥ २१९ ॥ रहः प्रकाशौ वीकाशौ निर्वेशो भृति

भोगयोः । कृतान्ते पुंसि कीनाशः क्षुद्रकर्षकयोस्त्रिषु ॥ २२० ॥ पदे लक्ष्ये

निमित्तेऽपदेशः स्यात्कुशमप्सु च । दशावस्थानेकविधाप्याशा तृष्णापि

चायता ॥ २२१ ॥ वशा स्त्री करिणी वेश्या दृग्ज्ञाने ज्ञातरि त्रिषु । स्याच्च

कर्कशः साहसिकः कठोरामसृणावपि ॥ २२२ ॥ प्रकाशोऽतिप्रसिद्धेऽ

पि शिशावज्ञे च वालिशः । ॥ इति शान्ताः ॥ सुरमत्स्यावनिमिषौ पुरु

षावात्ममानवौ ॥ २२३ ॥ काकमत्स्यात्खगौ ध्वांक्षौ कक्षौ तु तृणवीरुधौ

॥ २२४ ॥ पक्षः सहायेऽप्युष्णीषः शिरोवेष्टकिरीटयोः । मुष्कलेमूषिके श्रेष्ठे सुकृते वृषभे वृषः ॥ २२५ ॥

। अभीषुः प्रग्रहे रश्मौ प्रैषः प्रेषणमर्दने

कोषोऽस्त्री कुड्मले खड्गपिधानेऽर्थौघदिव्ययोः । द्यूतेऽक्षे सारिफलके अमर२
ऽप्याकर्षोऽथाक्षमिन्द्रिये ॥ २२६ ॥ नाद्यूताङ्गे कर्षचक्रे व्यवहारे कलि ना ३
द्रुमे । कर्षूर्वा स्त्री करीषाग्निः कर्षूः कुल्याभिधायिनी ॥ २२७ ॥ पुम्भावे तत्क्रि
यायाञ्च पौरुषं विषमप्सु च । उपादानेऽप्यामिषं स्यादपराधेऽपि किल्बिषम्
॥ २२८ ॥ स्याद्वृष्टौ लोकधात्वंशे वत्सरे वर्षमस्त्रियाम् । प्रेक्षा नृत्येक्षणं
प्रज्ञाभिश्लेषा सेवार्थनाभृतिः ॥ १२९ ॥ त्विट् शोभापि चिचिषु परे न्यक्षं कार्त्स्न्ये
निकृष्टयोः । प्रत्यक्षेऽधिकृतेऽध्यक्षो रूक्षस्त्वप्रेम्ण्यचिक्कणे ॥ २३० ॥
॥ इति षान्ताः ॥ रविश्वेतच्छदौ हंसौ सूर्यवह्नी विभावसू । वत्सौ तर्ण
कवर्षौ द्वौ सारङ्गाश्च दिवौकसः ॥ २३१ ॥ शृङ्गारादौ विषे वीर्ये गुणे रागे
द्रवे रसः । पुंस्युत्तंसावतंसौ द्वौ कर्णपूरेऽपि शेखरे ॥ २३२ ॥ देवभेदेऽन
ले रश्मौ वसू रत्ने धने वसु । विष्णौ च वेधाः स्त्री त्वाशीर्हिताशंसाऽहिदं
ष्टयोः ॥ २३३ ॥ लालसे प्रार्थनौत्सुक्ये हिंसा चौर्यादि कर्म च । प्रसू
श्वापि भूद्यावौ रोदस्यौ रोदसी च ते ॥ २३४ ॥ ज्वालाभासौ न पुंस्यर्चिर्ज्यो
तिर्भद्योतदृष्टिषु । पापापराधयोरागः खगबाल्यादिनोर्वयः ॥ २३५ ॥
तेजःपुरीषयोर्वर्चो महस्तूत्सवतेजसोः । रजो गुणे स्त्रीपुष्पे च राहौ ध्वान्ते
गुणे तमः ॥ २३६ ॥ छन्दः पद्येऽभिलाषे च तपःकृच्छ्रादिकर्म च । स
होबलं सहो मार्गो नभः संश्रावणो नभाः ॥ २३७ ॥ ओकः सद्माश्रयश्चौ
काःपयः क्षीरं पयोऽम्बु च । ओजो दीप्तौ बले स्रोत इन्द्रिये निम्नगार

ये॥ २३८ ॥ तेजःप्रभावे दीप्तौ च बले शुक्रोऽप्यतस्त्रिषु। विद्वान् विदंश्च
बीभत्सो हिंस्रोऽप्यतिशये त्वमी ॥ २३९ ॥ वृद्धप्रशस्ययोर्ज्यायान्कनी
यांस्तु युवाल्पयोः। वरीयांस्तूरुवरयोः साधीयान्साधुवाढयोः॥ २४० ॥
इति सान्ताः ॥ दलेऽपि बर्हं निर्बन्धोपरागार्कादयो ग्रहाः। द्वार्यापीडे क्वा
थरसे निर्यूहो नागदन्तके॥ २४१॥ तुलासूत्रेऽश्वादिरश्मौ प्रग्राहः प्र
ग्रहोऽपि च। पत्नीपरिजनादानमूलशापाः परिग्रहाः॥ २४२॥ दा
रेष्वपि गृहाः श्रोण्यामप्यारोहो वरस्त्रियाः। व्यूहो वृन्देऽप्यहिर्वृत्रेऽप्य
ग्नीन्द्वर्कास्तमोऽपहाः॥ २४३॥ परिच्छदे नृपार्हेऽर्थे परिबर्हः। ॥
इति हान्ताः॥ ऽव्ययाः परे॥ आङीषदर्थेऽभिव्याप्तौ सीमार्थे धातुयोगजे
॥ २४४ ॥ आ प्रगृह्यः स्मृतौ वाक्येऽप्यास्तु स्यात्कोपपीडयोः। पापकुत्से
षदर्थे कु धिङ्निर्भर्त्सननिन्दयोः ॥ २४५॥ चान्वाचयसमाहारेतरेतर
समुच्चये। स्वस्त्याशीःक्षेमपुण्यादौ प्रकर्षे लंघनेऽप्यति॥ २४६॥ स्वि
त्प्रश्ने च वितर्के च तु स्याद्भेदेऽवधारणे। सकृत्सहैकवारे स्यादाराद्दूरसमी
पयोः ॥ २४७ ॥ प्रतीच्यां चरमे पश्चादुताप्यर्थविकल्पयोः। पुनः सदा
र्थयोः शश्वत्साक्षात्प्रत्यक्षतुल्ययोः ॥ २४८ ॥ खेदानुकम्पासन्तोषवि
स्मयामन्त्रणे बत। हन्त हर्षेऽनुकम्पायां वाक्यारम्भविषादयोः॥ २४९ ॥
प्रति प्रतिनिधौ वीप्सालक्षणादौ प्रयोगतः। इति हेतुप्रकरणप्रकर्षादिसमा
प्तिषु ॥ २५० ॥ प्राच्यां पुरस्तात्प्रथमे पुरार्थेऽग्रत इत्यपि। यावत्ताव

च्चसाकल्येऽवधौमानेऽवधारणे ॥ २५१ ॥ मंगलानन्तरारम्भप्रश्नका अम ३
र्त्स्न्येष्वथोअथ । वृथानिरर्थकाविध्योर्नानानेकोभयार्थयोः ॥ २५२॥ ना ३
नुपृच्छायांवितर्केचपश्चात्सादृश्ययोरनु । प्रश्नावधारणानुज्ञाऽनुन
यामन्त्रणेननु ॥ २५३ ॥ गर्हासमुच्चयप्रश्नशङ्कासम्भावनास्वपि । उ
पमायांविकल्पेवासामित्वर्द्धेजुगुप्सने ॥ २५४ ॥ अमासहसमीपेचकं
वारिणिचमूर्द्धिच । इवेत्थमर्थयोरेवंनूनंतर्केऽर्थनिश्चये ॥ २५५ ॥ तू
ष्णीमर्थेसुखेजोषंकिंपृच्छायांजुगुप्सने । नामप्राकाश्यसंभाव्यक्रोधोपग
मकुत्सने ॥ २५६ ॥ अलंभूषणपर्य्याप्तिशक्तिवारणवाचकम् । हूंवित
र्केपरिप्रश्नेसमयान्तिकमध्ययोः ॥ २५७ ॥ पुनरप्रथमेभेदेनिर्निश्चय
निषेधयोः । स्यात्प्रबन्धेचिरातीतेनिकटागामिकेपुरा ॥ २५८ ॥ उरर्युरी
चोररीचविस्तारेऽङ्गीकृतौत्रयम् । स्वर्गेपरेचलोकेस्ववार्त्तासंभाव्ययोः
किल ॥ २५९ ॥ निषेधवाक्यालङ्कारजिज्ञासानुनयेखलु । समीपोभ
यतःशीघ्रसाकल्याभिमुखेऽभितः ॥ २६० ॥ नामप्राकाश्ययोःप्रादुर्मिथोऽ
न्योऽन्यंरहस्यपि । तिरोऽन्तर्द्धौतिर्य्यगर्थेहाविषादशुगर्त्तिषु ॥ २६१॥
अहहेत्यद्भुतेखेदेहिहेताववधारणे ।

इतिनानार्थवर्गः

************************

चिरायचिररात्रायचिरस्याद्याश्चिरार्थकाः । मुहुःपुनःपुनःशश्वदभीक्ष्णम अ ४

अम३ सक्तत्वमाः ॥ १ ॥ स्राक्झटित्यञ्जसाऽह्नायद्राक्मंक्षुसपदिद्रुते । बल
अ ४ वत्सुष्टुकिमुतस्वऽत्यतीवचनिर्भरे ॥ २ ॥ पृथग्विनान्तरेणर्तेहिरुङ्ना
नाचवर्ज्जने । यत्तद्यतस्ततोहेतावसाकल्येतुचिच्चन ॥ ३ ॥ कदा
चिज्जातुसार्द्धन्तुसाकंसत्रंसमंसह । आनुकूल्यार्थकम्प्राध्वंव्यर्थकेतुवृथा
मुधा ॥ ४ ॥ आहोउताहोकिमुतविकल्पेकिङ्किमूतच । तुहिचस्मह
वैपादपूरणेपूजनेस्वति ॥ ५ ॥ दिवाह्नीत्यथदोषाचनक्तञ्चरजनावि
ति । तिर्य्यगर्थेसाचितिरोऽप्यथसम्बोधनार्थकाः ॥ ६ ॥ स्युःप्याट्पाड
ङ्गहेहैभोःसमयानिकषाहिरुक् । अतर्कितेतुसहसास्यात्पुरःपुरतोऽग्र
तः ॥ ७ ॥ स्वाहादेवहविर्दानेश्रौषट्वौषट्वषट्स्वधा । किञ्चिदीष
न्मनागल्पेप्रेत्यामुत्रभवान्तरे ॥ ८ ॥ ववायथातथैवैवंसाम्येअहोहीच
विस्मये । मौनेतुतूष्णींतूष्णीकांसद्यःसपदितत्क्षणे ॥ ९ ॥ दिष्ट्यासमु
पजोषंचेत्यानन्देऽथान्तरेऽन्तरा । अन्तरेणचमध्येस्युःप्रसह्यतु
हठार्थकम् ॥ १० ॥ युक्तेद्वेसाम्प्रतंस्थानेऽभीक्ष्णंशश्वदनारते । अभावे
नह्यनोनापिमास्ममालञ्चवारणे ॥ ११ ॥ पक्षान्तरेचेद्यदिचतत्त्वे
त्वद्धाऽञ्जसाद्वयम् । प्राकाश्येप्रादुराविःस्यादोमेवम्परमंमते ॥ १२ ॥ स
मन्ततस्तुपरितःसर्वतोविष्वगित्यपि । अकामानुमतौकाममसूयो
पगमेऽस्तुच ॥ १३ ॥ ननुचस्याद्विरोधोक्तौकच्चित्कामप्रवेदने । निःष
मंदुःषमंगर्ह्येयथास्वन्तुयथायथम् ॥ १४ ॥ मृषामिथ्याचवितथेयथार्थ

न्तु यथातथम् । स्युरेवन्तु पुनर्वै वेत्यवधारणवाचकाः ॥ १५ ॥ प्रागतीतार्थकं नूनमवश्यं निश्चये द्वयम् । संवद्वर्षेऽवरे त्वर्वागामेवं स्वयमात्मना ॥ १६ ॥ अल्पे नीचैर्महत्युच्चैः प्रायो भूम्न्यद्रुते शनैः । सना नित्ये बहिर्बाह्ये स्मातीतेऽस्तमदर्शने ॥ १७ ॥ अस्ति सत्त्वे रुषोक्तावूम्प्रश्नेऽनुनये त्वपि । हूं तर्के स्यादुषा रात्रेरवसाने नमो नतौ ॥ १८ ॥ पुनरर्थेऽङ्ग निन्दायां दुष्ठु सुष्ठु प्रशंसने । सायं साये प्रगे प्रातः प्रभाते निकषान्तिके ॥ १९ ॥ परुत्परार्यैषमोऽब्दे पूर्वे पूर्वतरे यति । अद्यात्राह्न्यथ पूर्वेऽह्नीत्यादौ पूर्वोत्तरापरात् ॥ २० ॥ तथाऽधराऽन्याऽन्यतरेतरात्पूर्वेद्युरादयः । उभयद्युश्चोभयेद्युः परे त्वह्नि परेद्यवि ॥ २१ ॥ ह्यो गतेऽनागतेऽह्नि श्वः परश्वस्तत्परेऽहनि । तदा तदानीं युगपदेकदा सर्वदा सदा ॥ २२ ॥ एतर्हि सम्प्रतीदानीमधुना साम्प्रतं तथा । दिग्देशकाले पूर्वादौ प्रागुदक्प्रत्यगादयः ॥ २३ ॥ अमर ३ अ ४

इत्यव्ययवर्गः

सलिङ्गशास्त्रैः सन्नादिकृत्तद्धितसमासजैः । अनुक्तैः संग्रहे लिङ्गं संकीर्णवदिहोन्नयेत् ॥ १ ॥ लिङ्गशेषविधिर्व्यापी विशेषैर्यद्यबाधितः । स्त्रियामीदूद्विरामैकाच्सयोनिप्राणिनाम च ॥ २ ॥ नामविद्युन्निशावल्लीवीणादिग्भूनदीह्रियां । अदन्तैर्द्विगुरेकार्थो न स पात्रयुगादिभिः ॥ ३ ॥ लिं ५

अमर२ तल्बृन्दे येनिकाड्यन्नावैरमैथुनकादिवुन् । स्त्रीभावादावनिक्तिवुसप्दक्य
लिं ५ पयुजिन्भ्राशाः ॥ ४ ॥ उणादिषु निरूरीस्वङ्ग्यावूङ्न्तं चलंस्थिरम् । त
क्रीडायांप्रहरणं चेन्मौष्टापाह्नवाणादिक् ॥ ५ ॥ घञोञः साक्रियास्यां
चेष्टाण्डपानाह्निफाल्गुनी । श्येनंपाताह्निमृगयातिलंपातास्वधेतिदिक् ॥ ६ ॥
स्त्रीस्यात्का चिन्मृणाल्यादि विवक्षाऽपचयेयदि । लंकाशेफालिकाटीकाधा
तकीपञ्जिकाठकी ॥ ७ ॥ सिध्रकासारिकाहिक्का प्राचिकोल्कापिपीलिका
। तिन्दुकीकणिकाभंगिः सुरङ्गासूचिमाढ्यः ॥ ८ ॥ पिच्छा वितंडाका
किणयस्थूर्णा यो शाणीद्रुणीदरन् । साति: कंथातथासन्दीनाभीराजसभा पि
च ॥ ९ ॥ झल्लरी चर्चरीपारीहोरा लट्वा च सिध्मला । लाक्षालिक्षा
पगराङ्गूषा गृध्रसी च मसीमसी ॥ १० ॥ इति स्त्रीलिङ्गसंग्रहः ॥ पुंस्त्वे
सभेदानुचराः सपर्य्यायाः सुरासुराः । स्वर्गयागाद्रिमेघाब्धिद्रुकालासिश
रारयः ॥ ११ ॥ करगण्डौष्ठदोर्दन्तकण्ठकेशनखस्तनाः । अह्नाह
नाः स्त्रीवडभेदाः रान्तान्ताः प्रागसंख्यकाः ॥ १२ ॥ स्त्रीवेष्टाद्याश्च निर्यासाअ
सन्नन्ता अबाधिताः । कशेरुजतुवस्तूनि हित्वातुरुविरामकाः ॥ १३ ॥
कषणभमरोपान्ता यद्यदन्ता अमी अथ । पथनयसटोपानागोत्राख्या
स्वरयाह्वयाः ॥ १४ ॥ नान्यकर्त्तरिभावे च घञ्जपनङ्णाघाथुच । ल्युः
कर्त्तरीमनिज्भावे को घोः किः प्रादितोऽन्यतः ॥ १५ ॥ द्वंद्वेऽश्ववडवा
वश्ववडवानसमाहृते । कान्तः सूर्येन्दुपर्य्यायः पूर्वोऽयः पूर्वकोऽपिच

॥ १६ ॥ वटकश्चानुवाकश्च रल्लकश्च कुडङ्गकः । पुङ्खोन्मुखः समुद्गश्च अमर
विटपट्टघटाः खटः ॥ १७ ॥ कोट्टार घट्टहट्टाश्च पिण्डगोण्डपिचण्ड लिं ५
वत् । गडुः करण्डो लगुडो वरण्डश्च किणो घुणः ॥ १८ ॥ दृतिः सीमन्त
हरितो रोमन्थोद्गीथबुद्बुदाः । कासमर्दोऽर्बुदः कुन्दः फेनस्तूपौ सपूप
कौ ॥ १९ ॥ आतपोऽक्षचियेमाभिः कुणपक्षुरकेदरः । पूरक्षुरप्रचुक्का
श्चगोलहिंगुलपुद्गलाः ॥ २० ॥ वेतालमल्लभल्लाश्च पुरोडाशोऽपिप
ट्टिसः । कुल्माषो रभसश्चैव सकटाहः पतद्ग्रहः ॥ २१ ॥ इति पुंल्लिङ्गसंग्र
हः ॥ द्विहीनेऽन्यच्च खारण्यपर्णश्वभ्रहिमोदकम् । शीतोष्णमांसरुधिर
मुखाक्षिद्रविणं बलम् ॥ २२ ॥ फलहेमशुल्बलोहसुखदुःखशुभाशु
भम् । जलपुष्पाणि लवणं व्यञ्जनान्यनुलेपनम् ॥ २३ ॥ कोट्याः शता
दिसंख्यान्या वा लक्षा नियुतं च तत् । द्व्यच्कमसिसुसन्नन्तं यदनान्तम
कर्तरि ॥ २४ ॥ त्रान्तं सलोपधं शिष्टं रात्रं प्राक्संख्ययान्वितम् । पात्राद्यद
न्तैरेकार्थो द्विगुर्लक्ष्यानुसारतः ॥ २५ ॥ द्वन्द्वैकत्वाव्ययीभावौ पथः संख्या
व्ययात्परः । षष्ठ्याश्छाया बहूनां चेद्विच्छायं संहतौ सभा ॥ २६ ॥ शाला
र्थापि परा राजाऽमनुष्यार्थादराजकात् । दासीसभं नृपसभं रक्षःसभमिमा
दिशः ॥ २७ ॥ उपज्ञोपक्रमान्तश्च तदादित्वप्रकाशने । कोपज्ञकोप
क्रमादिकं कन्थोशीनरनामसु ॥ २८ ॥ भावे नणकचिद्भ्योऽन्ये समूहे भा
वकर्मणोः । अक्तान्तप्रत्ययाः पुण्यसुदिनाभ्यामहः परः ॥ २९ ॥ क्रि

अम३ यावयानांभेद्कान्येकत्वेऽप्युक्थतो टके। बौर्चवर्हंगृहस्थूणांतिरीटंम
लिं ५ मेयोजने ॥ ३० ॥ राजसूयंवाजपेयंगद्यपद्येकृतौकवेः। माणिक्यभाष्य
सिन्दूरचीरचीवरपञ्जरम्॥ ३१॥ लोकायतंहरितालंविदलंस्थालबा
ह्लवम्। ॥ इतिनपुंसकलिङ्गसंग्रहः ॥ पुंनपुंसकयोःशेषोऽर्द्धर्चपि
ण्याककंटकाः ॥ ३२॥ मोदकस्तण्डकष्टङ्कशृङ्गाटकःकर्प्पटोऽर्बुदः।
पातकोद्योगचरकतमालामलकानडः ॥ ३३॥ कुष्ठंमुण्डंशीधुबुस्तंक्ष्वे
डितंक्षेमकुट्टिमम्। संगमंशतमानार्मशंबलाव्ययताण्डवम्॥ ३४॥ क
विपंकन्दकार्पासंपारावारंयुगंधरम्। यूपंप्रग्रीवपात्रीवयूषञ्चमसचि
क्कसौ ॥ ३५॥ अर्द्धर्चादौघृतादीनांपुंस्त्वाद्यंवैदिकंध्रुवम्। तन्नोक्तमि
हलोकेऽपितच्चेदस्त्यस्तुशेषवत्॥ ३६॥ इतिपुंनपुंसकलिङ्गसंग्रहः॥
स्त्रीपुंसयोरपत्यान्तादिचतुःषट्पदोरगाः। जातिभेदाःपुमाख्याश्चस्त्री
योगैःसहमल्लकः ॥ ३७॥ मुनिर्वराटकःस्वातिर्वर्णकोजाटलिर्मनुः।
मूषासृपाटीकर्कन्धूर्यष्टिःशाटीकुटीकटि ॥ ३८ ॥ इतिस्त्रीपुंससंग्रहः॥
स्त्रीनपुंसकयोर्भावक्रिययोःष्यञ्क्वचिच्चवुञ्। औचित्यमौचितीमैत्रीमै
त्र्यंवुञ्प्रागुदाहृतः ॥ ३९॥ षष्ठ्यन्तप्राक्पदाःसेनाछायाशालासुरानि
शाः। स्याद्वान्तसेनंस्वनिशंगोशालमितरेचदिक्॥ ४०॥ आबन्तो
त्तरपदोद्विगुश्चापुंसिनश्चलुप्। त्रिखट्वंत्रिखट्वीचत्रितक्षंचत्रितक्ष्य
पि ॥ ४१॥ इतिस्त्रीनपुंसकलिङ्गसंग्रहः ॥ त्रिषुपात्रीपुटीवाटीपेटीकुव

स्ताद्दाडिमौ। ॥ इनित्रिलिङ्गसंग्रहः ॥ परंलिङ्गंस्वप्रधानेद्वंद्वेतत्पुरुषे अमर३
ऽपितत्॥ ४२॥ अर्थान्ताःप्राद्यलंप्राप्तापन्नपूर्व्वाःपरोपगाः। नद्धिता लिं ५
र्थेद्विगुःसंख्यासर्व्वनामतदन्तकाः ॥ ४३॥ बहुव्रीहिरदिङ्नाम्नामुन्ने
यन्तदुदाहृतम्। गुणद्रव्यक्रियायोगोपाधिभिःपरगामिनः ॥ ४४॥
कृतःकर्त्तर्य्यसंज्ञायांकृत्याःकर्त्तरिकर्मणि। अणाद्यन्तास्तेनरक्ताद्यर्थे
नानार्थभेदकाः ॥ ४५॥ षट्संज्ञकास्त्रिषुसमायुष्मदस्मत्तिङव्ययम्।
परंविरोधेशेषंतुज्ञेयंशिष्टप्रयोगतः ॥ ४६॥

इनिलिङ्गादिसंग्रहवर्गः

इत्यमरसिंहकृतौनामलिङ्गानुशासने

सामान्यकाण्डस्तृतीयःसाङ्ग एवसमर्थितः



॥ अथत्रिकाण्डसूचीनामसंख्याश्लोकक्रमेण ॥

वि०खं०



॥ इति स्वर्गवर्गः ॥

---

त्रिं०स्तु०



॥ इतिपातालवर्गः ॥

॥ प्रथमकाण्डः समाप्तः ॥

त्रि०कू० २.

| वि॰ख॰ | नाम संख्या | श्लोक |
|---|---|---|
| | योजनस्य २ योजनादि | १७ |
| | वल्मीकस्य ३ क्रिमिशैलादि | १८ |
| | सेतोः ४ संवरादि | १८ |
| | मार्गस्य ६ पन्थादि | १८ |
| | खर्ल्लगपुरस्य १ खपुरेति | १९ |
| | शोभपुरस्य २ हरिचन्द्रपुरादि | १९ |
| | प्रतिमार्गस्य ४ प्रतिमार्गादि | १९ |
| | पण्याजीवस्य ३ निर्मुटादि | २० |
| | हट्टस्य ४ हट्टादि | २० |

॥ इतिभूमिवर्गः ॥

---

| नाम संख्या | श्लोक |
|---|---|
| शाखानगरस्य २ अभिस्यंदिरमणादि | १ |
| राजशासनस्य २ शासनादि | १ |
| मूद्रशासनस्य २ मकुत्यादि | १ |
| व्यवस्थापत्रस्य २ पट्टोलिकादि | २ |
| अनामपट्टोलिकायाः १ पांशुकूलेति | २ |
| अंगुष्ठस्य १ घङ्गिरिति | २ |
| वितस्तेः १ एतैरिति | २ |

| नाम संख्या | श्लोक |
|---|---|
| हस्तस्य १ अनइति | ३ |
| हस्तचतुष्टयस्य २ दण्डादि | ३ |
| क्रोशस्य १ अन्तरमिति | ३ |
| गव्यूतेः १ नाभ्यामिति | ४ |
| योजनस्य १ तदिति | ४ |
| ग्रामभेदयोरेकैकं २ चतुरिति | ४ |
| गर्भागारस्य २ गर्भागारादि | ५ |
| वास्तुनः २ वास्त्वादि | ५ |
| गृहस्य २ ओकसादि | ५ |
| चालस्य २ पिटादि | ५ |
| वडभ्याः ३ वडभ्यादि | ५ |
| कपशीर्षस्य ३ कपिशीर्षादि | ६ |
| नापितगृहस्य २ खरकुट्यादि | ६ |
| पक्षिशालायाः २ कुलायिकादि | ७ |
| कारागृहस्य २ कारावेश्मादि | ७ |
| तृणाच्छादितगृहस्य २ कायमानादि | ७ |
| निभृतगृहस्य १ दर्भटेति | ७ |
| गृहभेदस्य ३ कुट्टिमादि | ८ |
| मंचस्य २ इंद्रकोषादि | ८ |
| वासगृहस्य ५ वासागारादि | ८ |

| नाम संख्या | श्लोक |
|---|---|
| शिववृषभगृहस्य ३ शिवस्रोति | ९ |
| गवाक्षस्य ३ वातायनादि | ९ |
| ग्रामान्तस्य २ उपशल्यादि | १० |
| कपाटस्य ४ कपाटादि | १० |
| आवरणस्य २ कन्यावाटादि | १० |

॥ इति पुरवर्गः ॥

---

| | |
|---|---|
| शैलस्य १४ शैलादि | १ |
| हिमालयस्य ४ हिमालयादि | १ |
| कैलासस्य ४ कैलासादि | १ |
| मैनाकस्य ३ हिरण्यनाभादि | २ |
| शिखरस्य ५ शैलाग्रादि | २ |
| उदयाचलस्य २ पूर्वाद्र्यादि | २ |
| अस्ताचलस्य २ अस्ताद्र्यादि | २ |
| मलयगिरेः २ चन्दनाद्र्यादि | २ |
| ाल्यवतः ३ कौञ्चादि | २ |
| नाचलानामेकैकं ७ महेन्द्रेति | ४ |
| ास्य ६ अश्मादि | ५ |

| नाम संख्या | श्लोक |
|---|---|
| शिलापुत्रस्य २ घर्षनालादि | ५ |
| शिलापट्टस्य २ गृहाश्मादि | ५ |
| गैरिकस्य ६ गैरिकादि | ६ |
| शिलाधातोः ३ शिलाधात्वादि | ६ |
| खटिकायाः ४ वर्णलेखादि | ७ |

॥ इति शैलवर्गः ॥

---

| | |
|---|---|
| वनस्य ७ वार्क्षादि | १ |
| लीलोद्यानस्य २ लीलोद्यानादि | १ |
| पंक्तेः ३ विन्त्रोल्यादि | १ |
| वृक्षस्य ६ वृक्षादि | २ |
| चैत्यस्य ५ चैत्यादि | २ |
| छायातरोः २ छायातर्वादि | २ |
| वन्दायाः २ वन्दादि | ३ |
| अपुष्पवृक्षस्य २ वनस्पत्यादि | ३ |
| फुल्लितवृक्षस्य ५ फुल्लादि | ३ |
| सूक्ष्मदारोः २ किलिञ्जादि | ४ |
| पल्लवस्य ३ पल्लवादि | ४ |

त्रिण्ड०

त्रि०ह्न०

॥ इतिमनुष्यवर्गः ॥

---

त्रि०स्क०

| नाम संख्या | श्लोक |
|---|---|
| विप्रस्य ८ वक्त्रजादि | २ |
| शुद्धकुलोत्पन्नविप्रस्य १ ब्राह्मणायनेति | ३ |
| श्रोत्रस्य २ श्रोत्रादि | ३ |
| शिक्षिताक्षरस्य ४ अक्षरमुखादि | ४ |
| पाठनिश्चयस्य ३ भविन्यादि | ४ |
| नवच्छात्रस्य २ क्रियाकारादि | ५ |
| कार्पटिकस्य २ कार्पटिकादि | ५ |
| परिषदस्य ३ पार्षदादि | ५ |
| राजसूयस्य ३ राजसूयादि | ५ |
| चान्द्रायणस्य २ चान्द्रायणादि | ६ |
| होमकुण्डस्य २ हवन्यादि | ६ |
| मखानलस्य २ महावीरादि | ६ |
| होमधूमस्य २ होमधूमादि | ६ |
| होमभस्मनः २ होमभस्मादि | ७ |
| पितृकार्यस्य १ आर्य्यकेति | ७ |
| हविषः ४ हविषादि | ७ |
| पाठकस्य २ पाठकादि | ८ |
| सभ्यानां २ सभ्यादि | ८ |
| देवयात्रायाः १ देवद्रोणीति | ८ |

| नाम संख्या | श्लोक |
|---|---|
| यागखातादिकर्मणः १ इष्टापूर्त्तमिति | ९ |
| यज्ञद्रव्यस्य २ यज्ञद्रव्यादि | ९ |
| अतिथेः २ प्राघुणादि | ९ |
| कुशलप्रश्नस्य २ कौशल्यादि | १० |
| वन्दनायाः २ समीच्यादि | १० |
| उपवासस्य २ उपोषणादि | १० |
| रोगोपवासस्य १ रोगाद्यैरिति | १० |
| द्यन्तरद्यन्तरभुक्तस्य २ षष्ठालुकालकादि | ११ |
| मासोपवासिन्याः २ चारुव्रतादि | ११ |
| गायत्र्याः २ गायत्र्यादि | १२ |
| वेदपाठभुवः २ ब्रह्मारण्यादि | १२ |
| यज्ञोपवीतस्य ४ पवित्रादि | १२ |
| कौपीनस्य ५ कच्छादि | १२ |
| छद्मतपस्विनः ३ वैडालव्रतिकादि | १३ |
| कमण्डलोः २ कमण्डल्वादि | १४ |
| उत्कटस्य ५ जोटिंगादि | १४ |
| त्रिपुण्ड्रकस्य १ भालेति | १४ |
| ऋषीणां ३ ऋष्यादि | १५ |
| महर्षीणां १ व्यासेति | १५ |

॥ इति ब्रह्मवर्गः ॥

---

41

नि०सू

| नाम संख्ता | झोक |
| --- | --- |
| शवस्य ५ शवादि | ६० |
| श्मशानस्य ४ श्मशानादि | ६१ |
| संस्कारस्य २ संस्क्रियादि | ६१ |
| चितायाः ५ चितादि | ६२ |
| शवरयस्य ३ अन्तशय्यादि | ६२ |
| बंद्याः ४ उपग्रहादि | ६३ |

॥ इति क्षत्रियवर्गः ॥

---

| नाम संख्या | झोक |
| --- | --- |
| वृत्त्यायाः २ वृत्त्यादि | १ |
| वार्द्धुष्यस्य २ वार्द्धुष्यादि | १ |
| ऋणस्य २ प्रामीत्यादि | १ |
| अर्थप्रयोगस्य १ अर्थेनि | १ |
| ऋणमुक्तेः २ ऋणमुक्त्यादि | २ |
| क्षेत्रस्य २ क्षेत्रादि | २ |
| बृहज्जलस्य २ हल्यादि | २ |
| मुद्गस्य ४ मुद्गादि | २ |
| मसूरस्य ४ मसूरादि | ३ |
| सर्षपस्य ४ सर्षपादि | ३ |

| नाम संख्या | श्लोक |
| --- | --- |
| यवस्य २ प्रवेटादि | ४ |
| गोधूमस्य २ गोधूमादि | ४ |
| कुलत्थस्य २ नाम्रवृन्तादि | ४ |
| अतस्याः ३ निःस्नेहादि | ४ |
| माषस्य ३ मूर्खादि | ५ |
| राजमाषस्य २ राजमाषादि | ५ |
| शूर्पवातस्य २ फुल्लफालादि | ५ |
| चालन्याः २ तितउइत्यादि | ५ |
| उदूखलस्य २ कण्डन्यादि | ६ |
| पात्र्याः ४ प्रस्थादि | ६ |
| कुशूलस्य २ कुशूलादि | ६ |
| कंदोः २ कंद्वादि | ६ |
| बृहज्जलाधारस्य २ आलिंजरादि | ७ |
| भाण्डभेदस्य २ मृन्नाभाण्डकादि | ७ |
| जलाधारस्य २ वार्धानादि | ७ |
| हण्डिकासुनस्य २ कणनादि | ७ |
| कलस्याः २ कलस्यादि | ८ |
| शरावस्य ५ शरावादि | ८ |
| लोहपात्रस्य ३ लोहिकादि | ८ |
| काचपात्रस्य २ भिङ्गारादि | ६ |

शि०सू०

| नाम संख्या | श्लोक |
|---|---|
| मालस्तुरायाः २ मालेति | १६ |
| पानभाजनस्य २ पार्थ्यादि | १६ |
| मद्स्थानस्य २ भुलापानादि | १७ |
| द्यूतकृतः २ द्यूनकृदादि | १७ |
| देवसभ्यस्य २ देवसभ्यादि | १७ |
| लग्नकस्य २ लग्नकादि | १७ |
| द्यूनस्य २ पुत्तुर्य्यादि | १८ |
| शारिमृङ्खलायाः २ पंचाल्यादि | १८ |
| नयपीठ्याः २ अष्टकांगादि | १८ |
| नयस्य २ नयादि | १८ |

॥ इतिमूद्रवर्गः ॥

---

॥ इतिद्वितीयःकाण्डः ॥

---

| नाम संख्या | श्लोक |
|---|---|
| क्षेमंकरस्य ४ क्षेमंकरादि | १ |
| विज्ञानस्य २ आमुख्यायणादि | १ |
| पुत्रान्नादस्य २ पुत्रान्नादादि | १ |
| विषमसंचारजीविनः १ स्थपुटेति | २ |
| शरणार्थिनः ३ शरणार्पकादि | २ |
| अलक्षणस्य २ पांडुपृष्ठादि | २ |
| उद्भटस्य ३ उद्भटादि | ३ |
| प्रेतवाहितस्य २ आविष्टादि | ३ |
| तरलितस्य २ प्रेङ्खोलितादि | ३ |
| तृषितस्य ३ तृषितादि | ३ |
| ऊर्द्धस्थस्य २ ऊर्द्धस्थादि | ४ |
| ग्राम्यस्य २ ग्राम्यादि | ४ |
| प्रतीपस्य २ पराचीनादि | ४ |
| समीचीनस्य २ समीचीनादि | ४ |
| गोष्ठस्य १ स्वस्थानेति | ५ |
| दातुः ३ दातादि | ५ |
| विदग्धस्य २ विदग्धादि | ५ |
| विज्ञस्य १० विज्ञादि | ६ |
| मेधाविनः २ मेधाव्यादि | ६ |
| शास्त्रगण्डस्य २ प्रघटाविदादि | ६ |
| युक्तस्य २ युक्तादि | ७ |
| भीमस्य २ भीमादि | ७ |
| शिथिलस्य ३ प्रश्लथादि | ७ |
| आर्द्रस्य २ तेदादि | ८ |

॥ इतिविशेष्यनिघ्नवर्गः ॥

---

त्रि॰ स्तू॰

| नाम संख्या | श्लोक |
| --- | --- |
| प्राकाम्यस्य ३ अवसर्गादि | २७ |
| चिंताकर्मणः ३ आकल्पकादि | २८ |
| आक्षेपस्य ३ अख्यानादि | २८ |
| स्वाध्यायस्य २ स्वाध्यायादि | २८ |
| हर्षस्वनस्य २ हर्षस्वनादि | २९ |
| निस्पन्दस्य २ सदृशस्पन्दनादि | २९ |
| अवसानस्य ३ अवसानादि | २९ |
| चक्रस्य २ मण्डलादि | २९ |
| प्रस्तावनायाः ३ आरंभादि | ३० |

॥ इतिसंकीर्णवर्गः ॥

---

3.8.

| नाम संख्या | श्लोक |
| --- | --- |
| आनंदार्थस्य ३ अस्त्वादि | १ |
| अद्भुतार्थस्य २ कटादि | १ |
| त्रिभुवनस्य १ भूर्भुवःस्वरिति | १ |
| इषदर्थस्य १ मनागिति | १ |
| अभ्युपगमार्थस्य १ आमखेति | २ |
| केवलार्थकस्य १ नवरेति | २ |
| प्रातरर्थकस्य १ अनपयनीति | २ |
| क्षणमात्रस्य १ क्षणक्षणेति | २ |
| पुण्यार्थस्य २ क्षेमादि | ३ |
| उच्चैरर्थस्य २ उच्चैरित्यादि | ३ |
| शश्वदर्थस्य २ वारंवारादि | ३ |
| विकल्पार्थस्य ६ उताहवादि | ४ |
| किंत्वर्थस्य २ किंत्वादि | ४ |
| पद्यर्थस्य २ पद्यपादि | ४ |
| कालसामान्यस्य १ अस्त्याहेति | ५ |
| सहार्थस्य १ सज्जेति | ५ |
| निषेधार्थस्य १ नेत्याहेति | ५ |
| विकल्पार्थस्य ३ विभाषादि | ६ |
| त्वयेत्यर्थस्य १ तेइति | ६ |
| मयेत्यर्थस्य १ मयेति | ६ |

॥ ❁ ॥ इत्यव्ययवर्गः ॥ ❁ ॥

चि०न्दू 3.8.



*************************

॥ ॐ ॥ श्रीगणेशाय नमः ॥ जयन्ति सन्तः कुशलं प्रजानां नमो मुनीन्द्रा त्रि० १
य स्तुणः स्मृताः स्थ । स्तुतासि वाग्देवि दयस्व मान्तर्विधेहि विघ्नाधिपमङ्ग स्व १
लानि ॥ १ ॥ अलौकिकत्वादमरः स्वकोषे न यानि नामानि समुल्लिलेख
। विलोक्यते रप्यधुना प्रचारमयं प्रयत्नः पुरुषोत्तमस्य ॥ २ ॥ वर्गक्रम
स्तथा नाम लिङ्गयोस्तूपदेशता । परिभाषादिकं सर्वमत्राप्यमरकोषवत्
॥ ३ ॥ स्वर्लोके देवलोकस्स्याद् वसोद्रः फलोदयः । मंदरः सैरिभः श
क्रभवनं खं दिवं नभः ॥ ४ ॥ स्वाहाभुजस्तु वसुलाः पूजितास्त्वविरायुषः
। द्यो भानि लिंपाद्गुषदः स्वर्गिणस्त्वनभःसदः ॥ ५ ॥ रुद्रनामात्वदिति
र्देवमाता स्यादथ पूर्वजाः । पितरस्त्वन्द्रगोलस्यान्यस्तु शस्ताः स्वधाभु
जः ॥ ६ ॥ काव्यबालादयस्ते च दैत्यास्तु प्रघसाः स्वराः । क्रतुद्विषस्त्विष्टिमुषो
दैत्यनाला दितिर्दनुः ॥ ७ ॥ बुद्धोकनिष्ठगमहामुनिधर्मचक्रगणाश्च
नेत्रिशरण्याः खसमोद्भवार्हः । तापी गुणाकरमहास्तु खवज्रिणस्त्वमेचीव

त्रि° १ त्वासमजितारिसमन्तभद्राः ॥ ८ ॥ महाबोधिर्धर्मधातुः श्वेतकेतुर्जिनः
ख १ खजित् । त्रिमूर्तिर्दशभूमीशः पञ्चज्ञानो बकुश्रमः ॥ ९ ॥ संबुद्धः क
रुणोऽकूर्चः सर्वदर्शी महाबलः । विम्बबोधो धर्मकायः संगुप्तोर्हन्नुत्तमि
श्चितः ॥ १० ॥ व्योमभोद्वादशाख्यस्त्ववीतरागः सुभाषितः । सर्वार्थसिद्ध
स्तु महाश्रमणः कुलिशासनः ॥ ११ ॥ गोपेशस्त्वाथास्य यशोधरेयो वाकुलः
स्तुतः । देवदत्तोऽनुजोऽथ स्युः श्रावकाः शिष्यसंज्ञिनः ॥ १२ ॥ प्रत्येक
बुद्धाः खड्गाः स्युः सुदान्ताश्चैकचारिणः । स्वयंभुवोऽथ मारीची त्रिमुखा वज्र
कालिका ॥ १३ ॥ विकटावज्रवाराही गौरीपोत्रिरथा च सा । लोकनाथ
स्तु लोकेशः सरोजी गुणसागरः ॥ १४ ॥ लोकेश्वरः कृपादेतः सुधावर्षी
हलाहलः । सुखावतीश्वरः कन्या एमोऽसिताभ्रशेखरः ॥ १५ ॥ चि
न्तामणिः पद्मपाणिर्वज्रहूपः खसर्पणः । अनीचिदर्शीकारण्डव्यूहः पो
तलकप्रियः ॥ १६ ॥ जटाधरो महावीर्यो वज्रसूर्योऽवलोकितः ।
तारा महाश्रीरेङ्कारस्वाहाश्रीस्त्वमनोरमा ॥ १७ ॥ तारिणी च जयानंता
शिवा लोकेश्वरात्मजा । खदूरवासिनी भद्रा वैश्या नीलसरस्वती ॥ १८ ॥
शंखिनी च महातारा वसुधारा धनंददा । त्रिलोचना लोचना स्यात्मणिभद्र
स्तु जंभलः ॥ १९ ॥ पूर्वयक्षो जलेंद्रोऽथ मंजुश्रीर्ज्ञानदर्पणः । मंजुभ
द्रो मंजुघोषः कुमारोऽष्टारचक्रवान् ॥ २० ॥ स्थिरचक्रो वज्रधरः प्रज्ञाका
यस्त्ववादिराट् । नीलोत्पली महाराजो नीलः शार्दूलवाहनः ॥ २१ ॥ धि

गोपतिः पूर्वजिनः खड्गी दण्डी विभूषणः । बालव्रतः पञ्चचीरः सिंह त्रि॰ १
केलिः शिखाधरः ॥ २२ ॥ वागीश्वरोऽथ हेरम्बो हेरुकश्चक्रसंवरः । स्व १
देवो वज्रकपाली च निशुम्भी शशिशेखरः ॥ २३ ॥ वज्रटीकोऽथ मैत्रेयो यु
गणजोऽजितसुतः । चीवरी श्रमणो भिक्षुर्बल्यश्चैत्योऽथ चेलुकः ॥ २४ ॥
श्रमणेरः प्रव्रजितो महोपासकगोमिनौ । अथ हंसरथो ब्रह्मा विरिञ्चो
ऽष्टश्रवाः सनत् ॥ २५ ॥ कञ्जः प्राणश्च वेदीशो वेदगर्भः पुराणगः । अब्ज
जो विश्वरेताश्च कमलः प्रपितामहः ॥ २६ ॥ नाभिजन्मा शतधृतिर्ब्राह्मी
तु ब्रह्मकन्यका । वाग्देवी शारदा शुक्ला महाश्वेता सरस्वती ॥ २७ ॥ अ
थ हरिः शशबिन्दुः श्रीकरः श्रीवराहो जितपरपुरुषः श्रीगर्भषड्विन्दनन्दाः । न
रकजिदृतधामा केशवो जन्मकीलः क्रतुपुरुषवृन्दसिंहश्चान्यजह्नूश्च देवाः
॥ २८ ॥ कोकः पुराणपुरुषो नलिनेशयश्च वास्तुर्नरायणपुनर्वसुवि
श्वरूपाः । अः श्रीनिवासधरणीधरवामनैकशृङ्गाश्च वृष्णिवृषशम्भु
र्दशावतारः ॥ २९ ॥ सोमगर्भादिदेवादिवराहस्वर्णबिन्दवः । ग
दाग्रजो मुञ्जकेशी सदायोगी सनातनः ॥ ३० ॥ रन्तिदेवशिवकीर्तनौ
चिपात्सोमसिन्धुरपि राजमूर्द्धभित् । कालनेमियवनारिपंडवाभीलवि
श्वकृष्णकेशिनः ॥ ३१ ॥ हेमशङ्खः शतावर्त्ती मनुसात्वतवारि
णः । वर्द्धमानः शतानन्दो जगन्नाथः सुयामुनः ॥ ३२ ॥ पूतनाधेनुका
रिष्टकेशिचाणूरसूदनः । भूकश्यपस्तस्य पिता दुन्दुः स्त्रीत्यदितिः स

चि॰ १ सूः ॥ ३३ ॥ स्यन्दनस्तु शतानन्दः सारथिस्तस्य दारुकः । तुरङ्गाः
स्व १ शैव्यसुग्रीवमेघपुष्पवलाहकाः ॥ ३४ ॥ ध्वजो भुजंगहा मन्त्री पवनव्या
धिरुद्धवः । शैनेयस्तु शिनेर्नप्ता युयुधानस्तु सात्यकिः ॥ ३५ ॥ बलभ
द्रस्तु हालः स्यात् सीनन्दी हलता लभृत् । संवर्त्तकी गुप्तचरो रुक्मिदार्येक
कुण्डलः ॥ ३६ ॥ मधुप्रियोऽथ प्रद्युम्नो जराभीरुः शमान्तकः । प्रद्यु
नासमपञ्चेषुः कञ्जनो मधुसारथिः ॥ ३७ ॥ रागरज्जुः कलाकेलिम
धुदीपवरीषवः । ईः कंतुर्मकराङ्कः संकल्पभवो गजस्वरूपास्त्रः ॥ ३८ ॥
रणारणको रतिरमणः संसारगुरुर्मनोजन्मा । कान्तिस्तस्य प्रियारण
लनाकेलिकिलावती ॥ ३९ ॥ सेः केननीचास्य वाणा मोहनोन्मादनस्त
था । संतापनः शोषणस्तु निश्चेष्टाकरणोपि च ॥ ४० ॥ सुतोऽनिरुद्धः
स्याद्विश्वकेतुः प्रीतितृषः सुतः । श्री च लक्ष्मी चला सा मा रमा जलधिजें
दिरा ॥ ४१ ॥ मणिः स्यमन्तको हस्ते विष्णोरुरसि कौस्तुभः । तार्क्ष्यः
शिलैका कामायुररुणावरजस्त्विरन् ॥ ४२ ॥ पक्षिसिंह उन्नतीशो व
ज्रतुण्डः सुधाहरः । स्वर्णपक्षः सुमुखसूः शाल्मलीभुजगाशनः ॥ ४३ ॥
शम्भुर्भगाली कपिशांजनस्तु हीरः कटप्रुर्भरुरेरिहाणौ । पुरारिपञ्चा
ननभैरवाट्टहासप्रहासास्तु खकुन्तलस्तु ॥ ४४ ॥ कण्ठेकालजयंत
गुह्यगुरवो जोटिंगगोपालकौ पिंगाक्षः कठमर्द रेवतजटाटंकाध्ययाः
कूटकृत् । चन्द्रापीडमहानटौ चमूमिरेहः शैलधन्वा जटापीरेड

शर्वाणीनंदिवर्द्धनगुडाकेशोऽग्रकालंजरः ॥ ४५ ॥ मिहिराणो जगद्यो चि॰ १
निर्नीलकण्ठो वृषवाहनः । कृष्णकरो वरवृद्धस्तु प्रसादो भूतभावनः ख १
॥ ४६ ॥ उग्रः स्थाणुः शिपिविष्टस्त्रिपुरान्तकः कीलो धर्मवाहनः । विरूपविष
मत्र्यक्षः संध्यानाटी वृषाङ्कनः ॥ ४७ ॥ एकपाद्भैरवो भद्रोऽर्द्धरे
तः पांशुचन्दनः । अस्थिमाली शिवश्चास्य खट्वाङ्गस्तु खट्वाङ्गः ॥ ४८ ॥
अजोऽकरोऽजकारश्च भृङ्गिरिटिस्तथा । भृङ्गरीटः शीलो भृङ्गी नाडीदेहो
ऽस्थिविग्रहः ॥ ४९ ॥ महाकालो महाभीमो महाकायो वृषाणकः । हा
स्यस्तु नन्दी शालंकायनस्तण्डवतालिकः ॥ ५० ॥ स्यान्नंदिकेश्वरोऽथा
र्य्या हिमाद्रीशिखरवासिनी । शक्तिः सिंहरथा गौला सिनीवाली दृषद्वती
॥ ५१ ॥ सोऽङ्कृष्णपिङ्गला लम्बा शैलेयी गणनायिका । वाराहिकैकानंशा
चरित्रदूती यमस्वसा ॥ ५२ ॥ कौद्रवी वाभ्रवी कैटभी कैटभायाद्वी कर्वुरी
चेश्वरी चेश्वरा । भ्रामरी दक्षकन्या च बर्हिध्वजी नन्दपुत्री चमारी च कालञ्ज
री ॥ ५३ ॥ गौतमी तामसी षष्ठी जयन्ती शूलधृक्सती । सिंहस्तस्या मनस्ता
लः सख्यौ च विजयाजये ॥ ५४ ॥ वज्रतुण्डः करिमुखः पृश्निश्च भृङ्गो गणा
ग्रणी । त्रिधातुरेकदन्तश्च द्विदेहो मूषिकाङ्कनः ॥ ५५ ॥ विघ्नहारी कुमा
रस्तु स्वामी द्वादशलोचनः । बालचर्य्यः सिद्धसेनः काकवाकुध्वजश्च
सः ॥ ५६ ॥ देवराजस्तु तः कौशिकोऽसन्महावाक्रन्दनोयदालीवर
ऽद्रिभित् । वज्रपाणिर्महेन्द्रः सुरग्रामणीर्यामनेमिर्वृषा नाकनाथोऽह

त्रि०१ रिः ॥ ५७ ॥ प्राचीनबर्हिः खदिरः कपिलाश्वो वरज्ञुः । प्राचीपतिस्त
ख १ मस्तङ्कः पुलोमारिः सुनासीरः ॥ ५८ ॥ पृतनाषाट् प्रियास्य पाटधार
शतावरी । शचीसुता देवसेना मातलिस्तु सयंकषः ॥ ५९ ॥ उच्चैःश्रवाः
श्वेतहयो वृषणाश्वोऽमरावती । वृषभासा सुरपुरी धनमैन्द्रं वृषखण्ड
॥ ६० ॥ नंदनं कंदसारं स्यान्मिश्रकावनमित्यपि । हस्तिमल्लस्तु दंतोभ्र
हरेणुर्मदांबरः ॥ ६१ ॥ श्वेतद्विपः सुदामाऽथ वज्रोऽस्त्री गिरिकण्टकः
। वज्राग्रनिर्भिद्दुर्भिद्दो जंभारिस्त्रिदशायुधं ॥ ६२ ॥ शतधारं शतारं चाभ्रि
स्थंभिदिरमम्बुजं । मार्ज्जारकर्णी चामुण्डा कर्णमोटि स्वर्चर्चिका ॥ ६३ ॥
विद्याधरः कामरूपी खेचरः स्थिरयौवनः । स्पर्शानन्दा रतिमदाप्सरसः सु
मदात्मजाः ॥ ६४ ॥ देवोद्यानानि वैभ्राजं मिश्रकं सिध्रकारणं । चैत्ररथं च
नासिक्यौ युजौ दस्रौ गदागदौ ॥ ६५ ॥ स्युष्मचासिसधयोऽश्विनोर्हू
वाणाईबिरनुषग्रचाशिरः । छागवाहनस्तूदाकुवर्हिषः स्वर्णासप्तधृतमं
चदीधितिः ॥ ६६ ॥ पर्परीकहसनीमशिपीथाः सप्तजिह्वसमिधावसिता
र्चिः । नाचिकेतुभुजिभारतविश्वप्साः शुचिः पचिसमन्तभुजौ च ॥ ६७ ॥
वडवाग्नौ तु सलिलेन्धनः स्याद्वडवामुखम् । काकध्वजो वाशिडस्वंदा
ग्निः स्तृणाकाष्ठधक् ॥ ६८ ॥ छगलस्तु करीषाग्निस्तृणाग्निः स्यात्तुवत्सलः
। तुषानलः कुकूलः स्यान्मुर्मुरोऽथाग्निकुक्कुटे ॥ ६९ ॥ संकिलोदहनोल्का
स्यादङ्गारे कोकिलाजमलौ । धूमभस्ममहदाहघतमालघिखिल

जाः ॥ ७० ॥ अग्निवाहस्तरीः स्वाहा त्वग्नायीदहनप्रिया । जीविते चि० १
शोयमः शीर्षपादश्च महिषध्वजः ॥ ७१ ॥ मंदोऽस्यकांताधूमार्णाचि ख १
त्रगुप्तस्तु लेखकः । भृत्यौ चराडमहाचराडौ कालीचीनुविचारभूः ॥ ७२ ॥
पंजिकात्वग्रसंधानीन्द्र चक्षास्तुरक्षसाम्भजः । कीलालपाःपलाशी चक्षपाटो
नरविष्वणाः ॥ ७३ ॥ संध्याबलोरण चिमटोहनूषः शमनीषदः । पला
शीविखुरःशंकुःकापिशेयस्तु पिराडकः ॥ ७४ ॥ पिशाचोमेघनादस्तु व
रुणोवःपरंजपः । दैत्यदेवस्तु वातस्तु नभःप्राणोजगद्बलः ॥ ७५ ॥
भोगिकांतःकम्पलक्ष्मापस्त्वधारवनिस्वरः । खम्वासःक्षिपणुर्धूलिध्वजः
सरयुरंकतिः ॥ ७६ ॥ वातुलोवातगुल्मःस्याच्चारवायुर्निदाघजः । मं
झानिलःप्रावृषिजोवासन्तोमलयानिलः ॥ ७७ ॥ श्रीदधनकेलिमनुष
दृश्वेतोदररत्नगर्भनिधिनाथाः । कुतनुकुवेछावसवः पिशाचकीसन्यसंग
रस्त्विशिरः ॥ ७८ ॥ अस्त्रीपद्मोमहापद्मःशंखोमरकतक्षपौ । मु
कुन्दनन्दनीलाश्चवर्चाःस्युर्निधयोनव ॥ ७९ ॥ सुतोऽस्यमायुराजःस्या
न्नथावर्णकविर्निधी । आसंगिनीचवातालीस्याद्वात्यावातमंडली ॥ ८० ॥
नाभिःस्याद्विहायस्तु खंमरुन्मेघवर्त्मच । अक्षरंचाथपथिदःखतमा
लोगदांबरः ॥ ८१ ॥ मदयित्नुर्वायुदारुर्व्योमधूमोनभोगजः । गाडवःकं
धोवातरथोवारिमसिःस्त्रियाम् ॥ ८२ ॥ करघास्याद्दूनककोवीजोदक
एचरं । मेघास्थिवर्षांगंतुस्याद्रोघृतश्चपरामृतं ॥ ८३ ॥ सौदाम्नी

चिं० १ त्वशनिविद्युद्गणभाचाचिरद्युतिः । तिथिप्रणीर्दर्शविपन्निशामणिस्त्रिनेत्र
ख १ चूडामणिरत्रिनेत्रभूः ॥ ८४ ॥ सुधांगमौ दौमृगपिप्लुपक्षजौ दशाश्व
सितप्रहरणोमि चंद्रिरः । छायामृगधरोराजामाःपरिज्ञावलक्षगुः ॥ ८५ ॥
द्विजदाक्षायणीतुङ्गीरोहिणीयज्वनांपतिः । उडुपःपर्वधिःक्लौदुर्जयंत
स्तपसोहरिः ॥ ८६ ॥ तारापीडःखचमसोविकसःसिन्धुनन्दनः । चन्द्रि
का चंद्रशालास्यान्नीहारःखनिशाजलं ॥ ८७ ॥ शीतंतुशीतलंपत्रवहि
मंतुहिमदुर्दिनम् । कुज्झटिर्धूममहिषीरतांध्री चकुहेलिका ॥ ८८ ॥
धूमिकाचनभोरेणुरथागस्त्याग्निमारुतौ । सत्याग्निर्वारुणिर्विंध्यकूटोवा
तापिसूदनः ॥ ८९ ॥ दीप्ताग्निरौर्वशेयश्चसमुद्रचुलुकोस्यतु । प्रियाकौ
शीतकीलोपामुद्राख्याचविदर्भजा ॥ ९० ॥ प्राक्फाल्गुनेयस्तूतथ्यानुजः
पारुष्यगीरथी । दीदिविर्द्वादशकरस्त्वक्षाःसुरगुरुर्गुरुः ॥ ९१ ॥
शुक्रोभाशतपर्वेशोमघाभूर्भृगुरास्फुजित् । षोडशार्चिर्नवार्चिस्तुमंगलः
खोल्मुकःकुजः ॥ ९२ ॥ बुधोहेमाराजपुत्रएकदेहःप्रहर्षणः । स्यात्पञ्चा
र्चिःश्रविष्ठाजःश्यामांगोकाङ्गरोधनाः ॥ ९३ ॥ शनैश्चरोनीलवासामंदश्छा
यात्मजःशनिः । राहुस्तुग्रहकल्लोलोऽभ्रपिशाचोऽप्यथाह्निकः ॥ ९४ ॥
केतुर्ज्योतीरथस्तुस्याद्ब्रह्माधारोध्रुवस्त्वसः । ततक्षणांतूर्थ्यमुक्तादिग्बुधैरंगा
रिणीस्मृता ॥ ९५ ॥ आसन्नास्तमयोभीरेरुच्यतेचापधूपितः । सुनी
तिर्ध्रुवमातास्यान्मातादक्षस्यमारिषा ॥ ९६ ॥ छायापथोदेवपथःसोमधा

शनभःसरित्। दिनप्रणीस्त्वव्यथिषोभानेमिरवरव्रतः ॥ ९७ ॥ चिं० १
गभस्तिहस्तोम्बुधरःखसंम्भुर्भारविर्भगः । वेदोदयःप्रतिदिवाभानुः स्व १
पीतुस्तमोपहः ॥ ९८ ॥ दिनमणिर्हरिर्हेलिब्रध्नभाकोषभास्करदर
थिखगपतङ्गेनाद्र्यःसप्तसप्तिः । मिहिरमहिरपीथाःकालकृत्पद्म
पाणिःखमणिररुणाम्भूरुवंभुमानंभुमाली ॥ ९९ ॥ छायास्यात्तप
तीमन्दजननीभूमयीवरी । संज्ञातुयमकालिन्दीरेवन्तमनुदस्त्रसूः
॥ १०० ॥ त्रसरेणुर्महावीर्य्यास्वातिःसूर्य्यासुवर्च्चला । स्वरेणुर्द्युमयी
त्वाष्ट्रीप्रियेचैतेविवस्वतः ॥ १०१ ॥ आश्मनोरमणोऽनूरुर्जटायुस्त्व
रुणात्मजः । कालस्त्वपष्टुर्जहकोभसन्तोभसदित्यपि ॥ १०२ ॥ पी
थःपीयुस्तिथस्थाथवास्तोव्युष्टांशकेदिनं । उषाप्रभातंगोसर्गःसायो
न्ध्ववैविकालके ॥ १०३ ॥ शर्वरीरक्षोजननीशत्वरीचक्रभेदिनीघोर
। श्यामायाम्यादोषातुङ्गीभौतीशताक्षीच ॥ १०४ ॥ वास्तवोषानिशा
ख्याचवासतेयीतमानिशौ । यस्यांमन्त्रानिशि श्वानःश्वनिशंश्वनिशा
चसा ॥ १०५ ॥ निःसम्पातोऽर्द्धरात्रःस्यात्सर्वावसरइत्यपि । तच्च
न्द्रापरपक्षेचैद्वादशीऽमाऽमावसीचसा ॥ १०६ ॥ भूतःकृष्णचतुर्द
श्यांपौर्णम्यान्धर्मवासरः । शक्रोत्सवोध्वजोत्थानंशारदीद्यूतपूर्णिमा
॥ १०७ ॥ कोजागरःस्मरन्तपर्वकौमुदीचारमस्त्रियां । यक्षरात्रिस्तुदी
पालीचैत्रावल्यांमधूत्सवः ॥ १०८ ॥ सुवसन्तःकाममहोवासन्तीकर्द्द

त्रि॰ १ नौस्त्रियौ । आमस्तुमासोवर्षांशोवत्सरस्तुयुगांशकः ॥ १०९ ॥ ऋ
स्व १ तुवृत्तिर्मासमानःस्यात्कालग्रन्थिरुर्वटः । कालप्रभातंशरदाप्रावृषात्तु
जलार्णवः ॥ ११० ॥ कौमुदःकार्त्तिकोमासःफाल्गुनालस्तुफाल्गुनः ।
ज्येष्ठामूलीयमिछन्तिमासमाषाढपूर्वजं ॥ १११ ॥ कृतंसत्ययुगंत्रेता
त्रायीद्वापरयज्ञियौ । कलिर्जर्जरकःकर्म्मयुगंपापन्तुपातकं ॥ ११२ ॥
शल्यंतूस्तंचकल्कोऽथभद्रंभव्यंशिवन्तथा । शंश्शुभंचाव्ययेऽथात्माजी
वःपुरुषमुद्गलौ ॥ ११३ ॥ अन्तर्यामीश्वरस्त्वान्तःकरणन्तुमनोनिगुः ।
बुद्धिःपाण्डाविदग्नचार्वीविचारेतर्कनिर्णयौ ॥ ११४ ॥ गुञ्जाचर्च्चाथसिद्धा
न्तोत्तरपक्षसमाधयः । कृतान्तःपूर्वपक्षस्तुचोद्यंगीर्भणितिर्गिरा ॥ ११५ ॥
वाचाछन्दस्तुनिगमःसाम्न्यूक्थंस्वरपत्तनं । ब्रह्माक्षरंस्यादोंकारःप्रश्न
दूतोग्रहेलिका ॥ ११६ ॥ संज्ञाधिवचनंसद्यःकृतंलक्षणनामनी । व्य
पदेशःप्रसिद्धिस्तुटङ्कारोऽथनवस्तवः ॥ ११७ ॥ शब्दाभिलापौ
त्वभिधाऽभिधानंवाचकोध्वनिः । ह्रासःकुहरितंचाथमन्मनोगद्गदध्व
नौ ॥ ११८ ॥ तूरन्तुतूर्य्यंस्यात्ताड्यमानास्तुपटहादयः । करर्द्धिःक
रतालीस्याद्ध्वनिनालातुकाहला ॥ ११९ ॥ मड्डुकोमर्द्दलोमन्द्रोढक्कावि
जयमर्द्दलः । दूगडःप्रतिपत्तूर्य्यंडमरुःस्तूत्तकोणकः ॥ १२० ॥ नाली
घटीयामनालीदण्डढक्कायमेरुका । यामघोषोऽथताम्रीस्यान्मानरं
ध्राविकालिका ॥ १२१ ॥ भवरुत्प्रेतपटहोमृत्युभङ्गुरकस्वसः । र

णातूर्यन्तुसंग्रामपटहोऽभयडिण्डिमः ॥ १२२ ॥ भक्कातूर्यन्तुपमानंगन्ध त्रि०१
तूर्य्यमहास्वनः । मुखवाद्यंवक्त्रनालंवेणौविवरनालिका ॥ १२३ ॥ ख १
बारवाणिःप्रणीतास्याः कथकैकनटौसमौ । सर्ववेशीनयारम्भःस्यान्ना
सावचरोनटः ॥ १२४ ॥ लयपुत्रोनटीनर्तुःखड्गधारादिनर्त्तके । प्ल
वकःकेलकस्थाथभण्डस्यादुवटुःसमौ ॥ १२५ ॥ गायनेगाथकस्त्रीणांच
क्लोषंसहनर्त्तनं । वात्सल्यशान्तौतुरसौशृंगारःकौशिकस्मृतः ॥ १२६ ॥
सम्भोगोविप्रलम्भस्तद्भेदौवर्णिकामसी । मसिर्नाव्यामनंतुस्याद्यामो
ऽवज्ञातुपांसनं ॥ १२७ ॥ डमरुस्तुचमत्कारःप्रौढिस्तुकियदेहिका
। खेदःप्रस्तवणंसिप्रोद्धयोर्व्रीडानटाम्बिका ॥ १२८ ॥ भामःक्रोधोनिः
श्रमस्तुशोकेवीर्य्यम्प्रुटीरता । छलंमिषंचवैदग्धीभङ्गिस्वेभनिमीलिका
॥ १२९ ॥ स्याच्चिन्ताविन्नयाथोद्वाहनंरणरणंचतत् । परिहासः
केलिमुखःकेलिर्द्दैवननर्मणी ॥ १३० ॥ रोमोद्भेदस्तुपुलकस्त्वक्पुष्पं
चत्वगङ्कुरः । स्वदोषगूहनंम्रक्षोरागसंगौतुगृध्नुता ॥ १३१ ॥ काप्यका
रःसयच्चित्तेपापमाधायशंसनं । कौत्कृत्यंविप्रतीसारोविबाधानुविहेठनं
॥ १३२ ॥ दुःखंज्ञोकोभवस्त्वेवसंसारःकष्टकारकः । निर्वाणमस्तकोमो
क्षःशीतीभावःशमोऽमृतं ॥ १३३ ॥

॥ इतिस्वर्गवर्गः ॥



चि॰ १ अधोव्ययंस्यात्पातालेविवरेकंम्त्वभ्रमस्त्रियो । तमसन्तुनिशाचर्मनीलपं
पा २ कंरजोबलं ॥ १ ॥ दिनान्तकोवियद्भूतिःखलुग्वृचोऽथनागभृत् । डु
ण्डुःस्त्रीस्यादलूताजगरावथहलाहलः ॥ २ ॥ ब्रह्मसर्पोऽम्बलालाच
द्विमुखाहिरहीरणिः । राजाहिरलगर्द्दस्तुकालसर्पोमहाविषः ॥ ३ ॥
भाण्डपुष्पस्तुभुजगोभवेत्कौकुटिकन्दलः । गोनासगोनसौहालाहलं
हालहलंविषं ॥ ४ ॥ अथाभक्षोद्विरसनःसमकोलम्बभेकभुक् ।
कुम्भीनसोमण्डलीचगरलंजंगलंविषं ॥ ५ ॥ अनन्तोवासुकिःपद्मो
महापद्मोपितक्षकः । कर्क्कोटःकुलिकःशङ्ख इत्यष्टौनागनायकाः ॥ ६ ॥
पुरीभोगवतीचैषांभोगिन्योनागकन्यकाः । अकंदुःखमघश्चैन्द्रीत्व
लक्ष्मीःकालकर्णिका ॥ ७ ॥ पाथोधिसिन्धुमकरालयवारिराशिगङ्गा
धरेन्दुजनकास्तिमिरूर्मिमाली । वार्द्धिर्मितद्रुतिमिकोषमहाशयाम्बु
क्लीवंचशैलशिविरंधरणीप्लवम्बु ॥ ८ ॥ पुमान्कपञ्जलोवाङ्कःकूल
ङ्कषपराङ्गवौ । तरन्तोदारदःपेरुर्महीप्राचीरमद्वयोः ॥ ९ ॥ नदी
नस्त्राथकमलंनीरंनाराःस्त्रियामिरा । कन्दंकंजलमस्थायमगाधेऽथाम्भ
संभ्रमः ॥ १० ॥ तानूरोवायुगुल्मस्त्वकणालाभःकलङ्कुरः । पुरीटिःपच
मङ्कारेवटालःकूलहण्डकः ॥ ११ ॥ चुलुकोघनजम्बालेदलाढ्ये
पङ्ककर्वटः । तरणोभेलकेवारिरथोनौस्तरिकःप्लवः ॥ १२ ॥ होडस्त
सन्धुर्वहनंवहित्रंवार्वटःपुमान् । पादारकःस्यात्पोलिन्दःपचबालेतु

हारा॰ स्वदोषाच्छादनं मश्वमूल्ली स्यान्मूलकारिका । वाताश्वो भूमिपक्षस्स्यादा
पर्या॰ रुद्विजयकुञ्जरः ॥ १६० ॥ प्रभाते गोसगो गोसर्गो वञ्जनी लेपकामिनी । उ
त्कटो गण्डकुस्तुर्मसिद्धस्सोमेधिको मतः ॥ १६१ ॥ वृषाकपिः शिखी मुष्मा
भस्मपा घेटमर्घटम् । उष्ट्रवामी रथोप्युष्ट्रो गन्त्री लघ्वी द्विवेशरा ॥ १६२ ॥
क्रकणः क्रमिहृद्दिष्टः शकुन्ती टेऽन्यकाहृका । भारवाहो भारिकस्स्यात्
स्कन्धचापो विहङ्गिका ॥ १६३ ॥ उन्नतोऽजगरः प्रोक्तो द्विमुखाहिरही
रगिः । पुरोटिः पुरसंस्कारे हट्टीपुरतटी मता ॥ १६४ ॥ मृणालिनीपुट
किनी स्यात्सकोवुद्बुदो भवेत् । कलाचीतु प्रकोष्ठस्स्याद्धस्तपुच्छस्तु कन्यु
षम् ॥ १६५ ॥ उत्साहस्सूत्रतन्तुस्स्यात्पिण्डीरोनीरसः स्मृतः । हरिण
हृदयो भीरुस्सन्देशोक्तिस्तु वाचिकम् ॥ १६६ ॥ शालाजिरो वर्द्धमानं कु
शीदन्तुकलाम्बिका । चर्वा तलप्रहारस्स्यात्कर्करं मुद्गरं विदुः ॥ १६७ ॥
गोष्ठागारेऽपि गञ्जः स्याच्छिन्नावेश्मनि दार्वटम् । मानग्रंथिर्भवेन्मन्तु
र्निष्कुटो गृहवाटिका ॥ १६८ ॥ शैलस्य कटकोदन्तास्तद्दिनम्प्रतिवास
रे । स्तूनमेवस्तूनतन्तुः क्षणपितिलेदने ॥ १६९ ॥ स्यादासवो पिकु
रसः सरकं मद्यभाजने । निस्तुक्षणन्दनशाखाङ्गो ग्रन्थिः मुष्कोगो भ
ये ॥ १७० ॥ अष्टापदश्मयपीठीनयस्तु जतुपुत्रकः । विन्दुतन्त्रो भ
वेदक्षः पाञ्चाली शारिशृङ्खला ॥ १७१ ॥ प्रस्तारस्तलिनं शय्या शेमगु
च्छः प्रकीर्णकम् । शिवालोपाशिका ज्ञेया सरमातु श्वरी शुनी ॥ १७२ ॥

पादाङ्गदीहंसकस्स्यात्प्रतिकर्म्मप्रसाधनम्। कर्णपालीतुकर्णान्दूरंगुली हार०
यकमूर्मिका ॥ १७३॥ खातभूःप्रतिकूपस्स्याज्जम्भास्यादाटमृङ्खला। पर्या०
कन्धरतोरणंकण्ठीस्त्रूचालीगलमेखला ॥ १७४ ॥ शासनन्धर्म्मकी
लस्स्यात्स्वत्वानंमूद्रशासनम्। पट्टोलिकाकुप्रकीलासिन्दूरंरकशा
सनम्॥ १७५॥ रसस्तुगोदुहांक्रीडागीतिःपारवतीतथा। वेणुर्व्वंब
फलोवंशोनवीनेनवकालिका ॥ १७६ ॥ मुखघंटाकलकलीतलाची
नलपट्टिका। नीषोधरकदम्बस्स्याद्वीरभद्रस्तुवीरणम् ॥ १७७॥
खङ्गटस्तुवृहत्काशंकोशाङ्गमित्कटंविदुः। गगडीरस्तुसमरकस्स्यात्
ह्रीवेरंवारिवालकम्॥ १७८॥ शितोत्पलङ्गन्धसोमंहरिमन्थोतिमु
क्तकः। कर्कारुकस्तुकालिङ्गःशृङ्गाटोजलकंटकः ॥ १७९ ॥ हिल
मोचीजलब्रह्मीवायसीकाकमाचिका। पुन्नागःकेसरश्चैवचाम्पेये।नागके
सरः ॥ १८० ॥ स्याद्दोलिकाचहिंदोलाल्यावर्णांलवणाम्मतम्। सुख
शोरजनिमिषःकटुकोरजसर्षपः ॥ १८१ ॥ सितमाषोरजमाषोम
सूरोव्रीहिकाञ्चनः। मधुक्षीरस्तुखर्ज्जूरश्शालश्शंकुतरुर्मतः॥ १८२॥
मुस्तोरजकशेरुस्स्याद्रौहिणश्चन्दनद्रुमः। काकमद्गुर्जलरंकःकोय
ष्टिर्जलकुक्कुभः ॥ १८३ ॥ वर्त्तिकाविष्फुलिङ्गीस्याद्दनाखुःशशकःस्मृ
तः। ताम्रकृमिरिन्द्रगोपोगृहगोधागृहालिका ॥ १८४ ॥ दिवान्धोह
रिनेत्रस्स्यात्द्रोनदीलक्ष्मणामता। कुरंकुरःपुष्करह्वोवातुलिस्तरून्

हारा॰ लिका ॥ १८५॥ कोलपुच्छस्तु कङ्कस्स्याद्गर्गाटो योगनाविकः। ग्रा
पर्या॰ म्यमद्गुरिकाभृङ्गीराजभृङ्गस्तु मद्गुरः॥ १८६ ॥ पङ्कग्राहस्तु मकरः
शफरः श्वेतकोलकः। चिङ्गटस्तु महाशल्कः पोनाधानञ्जलाण्डकम्
॥ १८७ ॥ फलकी तु चित्रफली मत्स्यराजस्तु रोहितः। काकोचिकस्तु
काकोचीवकाचीवकचिञ्चिका॥ १८८ ॥ कवयी क्राकचपृष्ठी खलेश
स्तु खलेशयः। इल्लिशो राजशफर इञ्चुको जलवृश्चिकः॥ १८९ ॥
दण्डपालोऽर्द्धशफरः कङ्कत्रोटो जलव्यथः। लघुगर्गस्त्रिकंटस्त्या
स्थिताङ्को वालुकागडः॥ १९० ॥ कनकपलः कुरुत्रिस्तः करिकवलो विधा
नं स्यात्। ब्राह्मी तु पंकगडकः शकुलो दण्डपालकः॥ १९१ ॥ निचोल
कं निचुलकं मन्दामणिरलिञ्जरः। वेदिःस्थण्डिलसितकंपन्याटो निष्कु
टः स्मृतः॥ १९२ ॥ लोपासिका खिङ्खिरी स्यात्पत्न्याटो निष्कुटः स्मृतः।
अङ्के ष्वेवाङ्कमङ्गा निस्सृतमुत्तानमुत्कुटम्॥ १९३ ॥ स्यान्मार्ज्जिता र
साला च बुक्कारः सिंहनादकः। कर्णगूथ कर्णमलं सिंहाणं नासिकामलम्
॥ १९४ ॥ दन्तमलं पुष्पिका स्यात्कुलकं रसनामलम्। कारन्धमी धातु
वादी दरिद्रो दुर्विधः स्मृतः॥ १९५ ॥ स्यान्मन्त्रगण्डको विद्या पक्षदारं
खडक्किका। आर्द्रवस्त्रञ्जलार्द्रः स्याद्दोषभ्यादीनवो मतः॥ १९६ ॥ यो
जनं मार्गधेनुः स्यान्नल्वः किष्कुचतुश्शतम्। चालकोवाणवारः स्यात्कुर्प्पा
सस्त्वर्द्धचोलकः॥ १९७ ॥ नागोदरमुरस्त्राणञ्जङ्घात्राणानुमंस्त्रणाम्।

स्यात्प्रासादोदेवकुलन्तत्तु चैत्यंविनामुखम् ॥ १९८ ॥ तृणपूलीतुचञ्चा 
स्याद्यथार्थन्तुयथातथम् । आघातनंवधस्थानङ्कारावन्धनवेश्मनि 
॥ १९९ ॥ स्कन्धाग्निःस्थूलकाष्ठाग्निस्तृणाग्निस्तुभवेत्तमः । इङ्ग
लस्तुकरीषाग्निर्न्वैराग्निस्त्वाधिमन्थवः ॥ २०० ॥ श्वशुरःस्वामिजनकः
साधुधीर्वरवत्सला । भङ्गसार्थस्तथाविट्टोहेलावुकोऽश्वविक्रयी ॥ २०१ ॥
गृहविज्ञोगृहपतिस्तुम्बीपुष्पंलताम्बुजम् । लोहिकाखरसोनिःस्यात्त्रि
लिम्पस्त्विदग्धःस्मृतः ॥ २०२ ॥ गण्डूपदीभूलतास्यान्मण्डरीघुर्घुरीमता
। स्वच्छत्यङ्गुलिसन्देशोलङ्घनञ्चापतर्पणम् ॥ २०३ ॥ गजढक्का
मदाम्नातःश्टङ्गारोगजमण्डनं । प्रतिमीरणारङ्कुःस्यात्त्वंटकःकदरःसृ
णिः ॥ २०४ ॥ वीचीजललताभृण्डिःफेणाग्रंबुद्बुदंविदुः । जम्बालोज
लकल्कःस्यादारणिःकुलहण्डकः ॥ २०५ ॥ विनाकृतंविरहितङ्गण्डू
खोमुखपूरणे । काष्ठमल्लश्शवयानङ्कषायस्तुवरोरसः ॥ २०६ ॥
पर्वावधिःपरग्रन्थिःपिञ्जोलापचकाहला । गोहल्लंकृगलङ्गोवि
द्परिघोद्वारकंटकः ॥ २०७ ॥ कर्करंचूर्णखण्डेस्यात्कर्कसारङ्करम्भ
कम् । स्पर्द्धायामपिसंहर्षःकठोरंकर्करंविदुः ॥ २०८ ॥ वंदीकवरकी
माङ्करसन्दीलघुखट्विका । घटराजःस्मृतःकुम्भोगर्गरीकलशिर्म्मता
॥ २०९ ॥ विदुरजन्यमुत्पातंनिर्घातेव्योममुद्गरः । पर्य्यन्तिकागुणाभ्रं
शोगाङ्गेष्ठीकटघण्टाव ॥ २१० ॥ चक्काकुन्तुक्कगुञ्जास्यात्कुलक्कस्ताल

 मर्द्दलः। सूचकोगोडमरुकंसूचवीणाचलावुकी ॥ २११ ॥ मेलानंदो
 मसिमणिर्लेखनीवर्णतूलिका। धातूपलःकठिनिकामेलापचाञ्जनंम
सिः ॥ २१२ ॥ तर्कुटीसूत्रलातर्कुर्मर्हल्लोलस्तर्कुलासकः। वर्त्तुलात
र्कुपाठीस्यात्पञ्जिकातूलनालिका ॥ २१३ ॥ निर्वेष्टनंनाडिचीरंदग्धेष्ठका
स्याज्झामकम्। दोलाप्रेंखापुमान्प्रेंखोवारासनंवास्तदनम् ॥ २१४ ॥ पिष्ट
वर्त्तिस्तुचमसश्चिचापूपःश्चरुब्रणः। म्लेच्छितम्परभाषायांतुरिटकान्याय
सारिणी ॥ २१५ ॥ मूकापूट्टस्तुणमणिश्चाचगण्डःपदाघवित्। कोस
कारःकाष्ठतन्तुर्घुणस्स्यात्काष्टलेखकः ॥ २१६ ॥ विषभृङ्गीभृङ्गरोलोवरो
लस्तृणषट्पदः। तुटुमोरंध्रबभ्रुस्स्याद्दीनालिङ्गालिकास्मृता ॥ २१७ ॥
विदारुकःककचपादोद्रुणस्त्वालिस्त्ववृश्चिकः। पद्माक्षम्पद्मवीजञ्च क
र्णिकावीजमातृका ॥ २१८ ॥ रङ्गमाताभवेल्लाक्षाधीलटिर्दुहितामता।
चाटुलोलस्तुदुल्लोलोजेङ्कटोदोहदःस्मृतः ॥ २१९ ॥ धौताञ्जलीधौत
बलीवज्रकंदुग्धपाचनम्। चित्रोक्तिःपुष्पभूकटीचासेचनमतृप्तिकृत्
॥ २२० ॥ कालराचिर्भीमरथीअस्वाध्यायोनिराकृतिः। ब्रह्मवादःश्रुता
दानंविम्बकदुरखेटिकः ॥ २२१ ॥ हिंसालुकःखादुकःस्याद्योगितोऽल
र्केइष्यते। द्रुगडस्तूर्य्यगण्डस्स्यादादर्शोमुकुरःस्मृतः ॥ २२२ ॥ राहू
त्सृष्टोरसोनस्स्याद्दङ्गरीकोलनासिका। मयटस्तृणहर्म्यस्स्यात्कुचङ्गो
मञ्चमण्डपः ॥ २२३ ॥ स्रवद्रङ्गःपण्यग्रंथिस्त्रिनिकाकटिभृङ्खला।

विशारदःप्रसिद्धेस्याच्छ्रीर्लक्ष्मीरिन्दिरामता ॥ २२४ ॥ पादावधिःसम्पू हारा॰
र्णः॥ प्राक्शालावृकशब्दाद्यैःपादैरतःपरंशब्दाः । नानार्थाअपिशब्दै पर्या॰
र्गजशब्दाप्रभृतिविज्ञेयाः ॥ २२५ ॥ अथनानार्थः ॥ क्षीरदारौ नाना॰
गुडक्षोदेगुडमधुनिचेष्यते । कूपीटपानमिच्छन्तिकेनिपातेचवारिधौ
॥ २२६ ॥ रसालारसनायांस्यान्मथितेदधिपाणिना । पाञ्चलोहेश्रुति
कटःप्रायश्चित्तेसरीसृपे ॥ २२७ ॥ विटोद्रौलवणेषिङ्गेमूषिकेखदिरेपि
च । वितण्डाकरवीर्य्याञ्चदर्व्विवादप्रभेदयोः ॥ २२८ ॥ कारण्डवे
करण्डस्स्यान्मधुकोषेदलाढके । खटःश्लेष्मण्यन्धकूपेप्रहारन्नरट
ङ्कयोः ॥ २२९ ॥ पिच्छापूगच्छटाकोषेचोलिकाफणिलालयोः । पिच्छि
लास्फोटिकावान्यारमावाताखुपांशवः ॥ २३० ॥ धरांकुरेवायुफलेनासीरेशी
करेपिच । कोद्वारेनागरेकूपेपुष्करिण्याञ्चपाटके ॥ २३१ ॥ नागाञ्जना
नागयष्टिःकरिस्तुन्दरिकाक्वचित् । पूत्यण्डःपूतिकीटेचगन्धकीटेचदृ
श्यते ॥ २३२ ॥ कटुकायाङ्कञ्चटकेकथिताशकुलादनी । क्रौञ्चादन
स्तुघेञ्चुल्याञ्चिञ्चोटकमृणालयोः ॥ २३३ ॥ सन्तानिकाक्षीरसरेतथाम
र्कटजालके । खड्गधेनुफलेफेनेपण्ञ्जसैलयंचके ॥ २३४ ॥ भालाङ्को
लोहितेदृष्टःकरपत्रेचकच्छपे । सङ्करेऽग्निचटत्कारेसम्मार्ज्जन्य
पसारिते ॥ २३५ ॥ गोधाकलंविकादन्तिबधूषुचकटम्भरा । पङ्कारःशै
वलेसेतौसोपानेजलकुब्जके ॥ २३६ ॥ पृष्ठशृङ्गीतिशब्दोयंदंशभीरेपृ

थूत्कारे। मेघपुष्पन्तु नादेयेपिखाभ्रेसलिलेविदुः ॥ २३७ ॥ पित्तज्वरे कुलालस्य पवने कूटपालकः। स्तनवृन्तेपिप्पलकन्तथासीवनसूत्रके ॥ २३८ ॥ पाटलिकोन्यमर्म्मज्ञेछात्रेस्यात्कालदेशिनि। जिह्वापीवृषदंशेचस्यादिन्द्रमहकर्म्मणि ॥ २३९ ॥ लाभेकामगुणेरूपेआमिषाख्यानुभोजने। छायापथेचदूर्वायांहरितालीध्वनिर्म्मतः ॥ २४० ॥ मालुधानश्चित्रसर्प्पेमहापद्मेपिदृश्यते। उन्मत्तेक्षपणोऽनर्थकरेकार्य्येपुटध्वनिः ॥ २४१ ॥ संघाटिकांविदुर्युग्मेकुट्टन्याञ्जलकण्टके। शूराहतेचसर्प्पेचप्रचलाकम्प्रचक्षते ॥ २४२ ॥ चन्द्रिकायामब्जधूलौरक्ताङ्गेहरिचन्दनम्। क्षीरत्नेचहरिद्रायांलाक्षायांवरवर्णिनी ॥ २४३ ॥ कृकलासेचित्रकोलेतृणगोधाध्वनिंविदुः। डिम्बम्भयेचकललेफुप्फुसेचप्रचक्षते ॥ २४४ ॥ धुन्धुमारःशक्रगोपेगृहधूमेगृहालिके। तिक्तपर्वाहिलमोचीगुडूचीमधुयष्टिषु ॥ २४५ ॥ जलविल्वःकर्कटकेपञ्चाङ्गेजलवल्कले। चोलकीनागरङ्गेचकरीरेकिष्कुपर्वणि ॥ २४६ ॥ कुलालचक्रेवाहनेदण्डारःशरयंत्रके। दिग्जयेवरयात्रायान्दण्डयात्रांविदुर्बुधाः ॥ २४७ ॥ उष्ट्रेदासीसुतेचैवदासेरकइतिस्मृतः। जलगुल्मोजलावर्त्तेकच्छपेजलचत्वरे ॥ २४८ ॥ काहलावेणुवीणादिध्वनिन,नाध्वनिंविदुः। घोङ्केकारु गिडकायाञ्जाहकध्वनिरिष्यते ॥ २४९ ॥ विद्यादुत्कलिकाशब्दमुत्कण्ठावीचिवाचकम्। दृष्टिविषेस्तू चके चद्विजि

ह्वः परिकीर्त्तितः ॥ २५० ॥ मदमत्ताविदग्धस्त्रीनर्त्तकीषु च वाशिनी । हारा०
रोमावलीमेघमालाकरटीषु च कालिका ॥ २५१ ॥ मंजुलो मधुरे कुञ्जे ज नाना०
लरङ्के जलाश्रले । अनुकंप्यस्तरस्वीस्यात्तपस्वी च धृतव्रतः ॥ २५२ ॥
इत्यर्द्धश्लोकावधिः ॥ शालावृकोकपिश्वानौ निष्ठुरः कठिनेऽचपे ।
छर्दनो लंबुषे निंबेव्युष्टङ्कल्येनथो षिते ॥ २५३ ॥ इक्षौकरी रेवोषाङ्गे व
णचिह्ने घुणेकिणः । नर्मठश्चुचुके पिङ्गे ळेकः षण्डङ्गिवक्रयोः ॥ २५४ ॥
धारटश्चानके वाहे लञ्जस्स्यात्पंगुकच्छयोः । नर्मटः खर्प्परे सूर्य्ये गो
कोलोमुशलेहले ॥ २५५ ॥ भुशिडरीवारुकुष्मारडोफाणिगुडकलम्बयोः
। नराडकः खञ्जने फेने लङ्काशिन्याङ्कगान्तरे ॥ २५६ ॥ गजेपिनागमा
नङ्गे । विशेषस्तिलकेपि च । निष्पारस्सूर्य्यवातेपिस्यूचकरठो द्विजेपि च
॥ २५७ ॥ विदुष्यपिस्मृतोवेधाः पुरंदेहेपि दृश्यते । स्वरेपिकरठ आख्या
तश्शरत्संवत्सरेपि च ॥ २५८ ॥ लाक्षापि जतुका प्रोक्ता लग्नाचार्य्येपि हि
शिडकः । नौसेचनेपि वारुराडः पादालिंदेपि पङ्किलः ॥ २५९ ॥ कचा
गोष्यति पुत्रे पि कुन्देपि भ्रमरो वटौ । भाराडं भूषणामात्रेपि रुधिरं कुङ्कुमेपि
च ॥ २६० ॥ गोमेदकेपि गंगोलः कटाहो निरयेपि च । मरीचेपि भवेत्कृ
ष्णः श्मूनां गे गुणिका भवेत् ॥ २६१ ॥ शस्त्रामपि खङ्गधेनुर्निस्त्रिंशोऽक
रुणेपि च । स्कन्धावरेपि कटको विन्दुस्तु विदुरेपि च ॥ २६२ ॥ जलसू
चिर्जलौकापि विश्यायामपि पिङ्गला । अहिरप्युदरावर्त्तेविशिखापि खनित्रि

का ॥ २६३ ॥ भ्रमरःकामुकेपिस्यादङ्गीकारेपिचाथकिम्। महालयेपितीर्थः
स्याद्भोजनेपितथाह्निकम् ॥ २६४ ॥ बलिस्थामरदण्डेपिपादपीठेपि
पादपः। गोदन्तोहरितालेपिवानीरश्चित्रकेऽपिच ॥ २६५ ॥ आधारे
प्याश्रयःप्रोक्तोगजसङ्घेप्यवग्रहः। कथिताप्साजटायाञ्चमार्गणोपिमृगः
क्वचित् ॥ २६६ ॥ मूषिकापिभेद्वीनाजटाटङ्कोहरेपिच। अश्मकृन्तेपि
फाण्टंमृद्भाण्डेप्युष्ट्रिकाभवेत् ॥ २६७ ॥ अङ्गसादेपिसदनंवनदावेपि
झिंझिमः। दन्तमांसेपिवेलास्यात्शुल्कंनारीधनेपिच ॥ २६८ ॥
निंबेपिहिङ्गुनिर्य्यासेमिलानन्द्येपिवार्द्दलम्। लेखन्याङ्कूर्णिकापिस्यात्
कठिन्यामपिवर्णिका ॥ २६९ ॥ पटलेपिकासमर्द्दोदिष्टन्दैवेपिकीर्त्ति
तम्। दाडिमेपिचहिण्डीरंवंशोवेणौकुलेपिच ॥ २७० ॥ काव्यादीना
मनन्तत्वाच्छब्दादीनांविशेषतः। क्वकदाकेनकिंदृष्टमितिकोवेदितुंक्ष
मः ॥ २७१ ॥ अतःशब्दःक्वदृष्टोऽयमर्थतस्यापिकीदृशः। इतिकाव्य
मलीकंस्यान्मात्सर्य्यमलिनात्मनाम् ॥ २७२ ॥ शब्दार्णवउत्पालिनीसं
सारवर्त्तइत्यपि। कोषावाचस्पतिव्याडिविक्रमादित्यनिर्म्मिताः ॥ २७३ ॥
आदायसारमेतेषामन्येषाञ्चविशेषतः। हारावलीनिर्म्मितेयंमयाद्वाद
शवत्सरैः ॥ २७४ ॥ उपास्यसर्व्वज्ञमनन्तमीशंभूत्वातिथिःश्रीधृतिसिं
हवाचाम्। हारावलीद्वादशमासमानैर्विनिर्मितेयम्पुरुषोत्तमेन
॥ २७५ ॥ नानाकाव्यपुराणनाटककथाकोषेतिहासस्मृतिज्योतिश्शा

स्रगजाम्भमानवभिषक्कोषान्वयत्नादियम् । दृष्ट्वान्यानिचशाब्दिकैस्स्त्वकृताहारावलीयत्नतः कर्त्तव्योऽचनसंशयस्सुमनसश्शब्दार्थलिंगेष्वतः ॥ २७६ ॥ सुधियाजनमेजयेनयत्नाद्धृतिसिंहेनसमन्निरूपितेयम् । विदितोवकृदृम्भिभिः कवीन्द्रैर्भुविकोषानुमतःश्रमोमदीयः ॥ २७७ ॥ हित्वामहाशाब्दिकताभिमानंमात्सर्य्यमन्यच्चमुकुन्दनिधाय । हारावलींयःप्रकरोतिकण्ठेविदग्धगोष्ठीषुपरंसभाति ॥ २७८ ॥ इतिश्रीशाब्दिकमहामहोपाध्यायपुरुषोत्तमदेवप्रणीताहारावलीपर्य्यवसिता

हारा० नाना०

सम्पूर्णम्



अथमेदिन्याःसूचीपत्रम्

से॰सं॰

| शब्द | पत्र | पंक्ति |
|---|---|---|
| यैकं | १०९ | ८ |
| यद्विः | १०९ | ११ |
| यत्रिः | ११४ | ५ |
| यचतुः | ११७ | १७ |
| यपंच | ११९ | ४ |
| यषड् | ११९ | ६ |

इति यान्तवर्गः

---

| | | |
|---|---|---|
| रैकं | ११९ | १० |
| रद्विः | ११९ | १२ |
| रत्रिः | १२६ | १७ |
| रचतुः | १३७ | १ |
| रपंच | १४१ | ९ |

इति रान्तवर्गः

---

| | | |
|---|---|---|
| लैकं | १४२ | १ |
| लद्विः | १४२ | २ |
| लत्रिः | १४६ | ३ |
| लचतुः | १५२ | १४ |
| लपंच | १५४ | ६ |

इति लान्तवर्गः २०सू०

---

| शब्द | पत्र | पंक्ति |
|---|---|---|
| वैकं | १५४ | १२ |
| वद्विः | १५४ | १५ |
| वत्रिः | १५६ | १६ |
| वचतुः | १५८ | ११ |
| वपंच | १५९ | ७ |

इति वान्तवर्गः

---

| | | |
|---|---|---|
| शद्विः | १५९ | १० |
| शत्रिः | १६० | ११ |
| शचतुः | १६१ | १४ |

इति शान्तवर्गः

---

| | | |
|---|---|---|
| षैकं | १६२ | ८ |
| षद्विः | १६२ | १० |
| षत्रिः | १६४ | १० |
| षचतुः | १६५ | १५ |

इति षान्तवर्गः

---

इत्यव्ययानेकार्थवर्गः







॥ ॐ ॥ श्रीगणेशाय नमः ॥ वृषाङ्काय नमस्तस्मै यस्य मौलिविलम्बिनी । जटावेष्टनजां शोभां विभावयति जाह्नवी ॥ १ ॥ पूर्वाचार्यकृतीर्वीक्ष्य शब्दशास्त्रं निरूप्य च । नानार्थशब्दकोषोऽयं लिङ्गभेदेन कथ्यते ॥ २ ॥ प्रायशो रूपभेदेन विशेषणवशात्क्वचित् । स्त्रीपुन्नपुंसकं ज्ञेयं विशेषोक्तेश्च कुत्रचित् ॥ ३ ॥ त्रिलिङ्ग्यां त्रिष्विति पदं मिथुने च द्वयोरिति । निषिद्धलिङ्गं शेषार्थं त्वन्ताथादि न पूर्वभाक् ॥ ४ ॥ रूपाद्युक्तं लिङ्गमुक्तावपि भ्रान्तिच्छिदे क्वचित् । विशेष्यनिघ्नेऽनुक्तेऽपि विज्ञेया वाच्यलिङ्गता ॥ ५ ॥ गुणेऽमुक्तादिकं ज्ञाद्याः पुंसि स्युस्तद्वति त्रिषु । तीक्ष्णाद्यास्तु गुणे क्लीबं गुणिलिङ्गास्तु तद्वति ॥ ६ ॥ क्लीबपुंसोरपि स्त्रीत्वं क्वाप्यल्पत्वविवक्षया । जातिवाचकशब्दानामपि तत्स्त्रीविवक्षया ॥ ७ ॥ उद्भिदः प्रसवे क्लीबं विपरीतकयादयः स्त्रियाम् । पुंसि जातीप्रभृतयः स्वलिङ्गा व्रीहयः फले ॥ ८ ॥ प्राङ्नानार्थान्ततश्चिन्हं द्वयोर्द्वन्द्वेन चैकता । शब्दावृत्तिर्न लिङ्गैक्ये स प्रमीनविशेषणे ॥ ९ ॥ क्लो

मेदि॰ वेनपुंसकेपुंसिस्त्रियांयोषितिचद्वयोः। त्रिषुचेत्यादियद्रूपन्तल्लिङ्गस्यैव
कान्त॰ वाचकम् ॥१०॥ नानार्थःप्रथमांतोत्रसर्व्वत्रादौप्रदर्शितः। सप्तम्यन्ताभि
धेयेषुवर्त्तमानोविनिश्चितः॥११॥ एकद्वित्रिचतुःपञ्चषड्वर्णानुक्रमात्कृ
तः। स्वरकाद्यादिकाद्यान्तवर्गैर्न्नानार्थसंग्रहः॥ १२ ॥ नानार्थकोष
पुस्तकभाराज्जनदुःखहानयेकृतिनः। मेदिनिकरकृतकोषोविमृश्य
लिङ्गेभिलिख्यतामेकः ॥ १३ ॥ कैकम् ॥ कोब्रह्मणिसमीरात्मयम
दक्षेषुभास्करे। कामग्रन्थौचक्रिणिचपतत्रिपार्थिवेतथा ॥ १४ ॥ म
यूरेऽग्नौचपुंसिस्यात्सुखशीर्षजलेषुकम् ॥ कद्वि॥ अर्कोऽर्कपर्णेस्फ
टिकेरवौताम्रेदिवस्पतौ ॥ १५ ॥ अङ्कोरूपकभेदाऽगचिह्नरेखाजिभू
षणे। रूपकांशान्तिकोत्सङ्गस्थानेऽकंपापदुःखयोः ॥ १६ ॥ एकंसं
ख्यान्तरेश्रेष्ठेकेवलेतरयोस्त्रिषु। कर्क्कःकर्क्कतिलेवह्नौशुक्लाश्वेदर्प्पणे
घटे ॥ १७ ॥ कङ्कःस्याद्द्विजेख्यातोलोहपृष्ठकृतान्तयोः। कल्कोऽ
स्त्रीघृततैलादिशेषेदम्भेविभीतके ॥ १८ ॥ विट्किट्टयोस्तपापेचत्रिषु
पापाशयेपुनः। काकःस्याद्वायसेवृक्षप्रभेदेपीठसर्प्पिणि ॥ १९ ॥
शिरोऽवक्षालनेमानप्रभेदद्वीपभेदयोः। काकास्यात्काकनासायां
काकोलीकाकजङ्घयोः ॥ २० ॥ रक्तिकायांमलप्वाश्चकाकमाच्यांच
योषिति। काकंसुरतबन्धेस्यात्काकानामपिसंहतौ ॥ २१ ॥ किष्कु
र्द्वयोर्वितस्तौचप्रकोष्ठेपिकरेपिच। कोकश्चक्रेवृकेज्येष्ठ्यांखर्ज्जूरीद्रुम

दर्दुरे ॥ २२ ॥ छेकोगृह्याश्रितमृगपक्षिणोर्नागरेऽपिषु । टङ्कोनील कपित्थे च खनित्रे टङ्कनेऽस्त्रियाम् ॥ २३ ॥ जङ्घायांस्त्रीपुमान्कोपेकोषा सिग्राबदारणे । तर्कः कांक्षावितर्केहदयेतुशास्त्रेषु कथ्यते ॥ २४ ॥ चि काकूपस्यनेमौ स्यात्चिकंपृष्ठाधरेचये । तोकंपुत्रेसुतायाञ्चद्धिकःस्यात्काक कोकयोः ॥ २५ ॥ न्यङ्कुर्मुनौमृगेपुंसिनाकस्तुचित्रिदिवेऽम्बरे । नाकुर्मु न्यन्तरेपृथ्वीधरवल्मीकयोःपुमान् ॥ २६ ॥ निष्कमस्त्रीसाष्टहेमश्च तेदीनावकर्षयोः । वक्षोऽलङ्करणेहेमपात्रेहेमपलेपिच ॥ २७ ॥ प ङ्कोऽस्त्रीकर्दमेपापेपाकःपरिणतौशिशौ । केशस्यजरसाशौक्ल्येस्थाल्या दौपचनेपिच ॥ २८ ॥ बकस्तुवकपुष्पेस्यात्कह्वेश्रीदेचरक्षसि । भू कंछिद्रे चकाले चभेकोमण्डूकमेघयोः ॥ २९ ॥ मुष्कोमोक्षकवृक्षेस्या न्मांसलेतिवृषणेपिच । मूकस्त्ववाचिनादैन्येरङ्कःकृपणमन्दयोः ॥ ३० ॥ राकानद्यन्तरेकन्यांनवजातरजःस्त्रियाम् । समपूर्णेन्दुतिथौरेकःश ङ्कानीचविरेचने ॥ ३१ ॥ रेकस्तुक्रयभिद्धीशौरेकंनाविचलेबिले । लङ्कारक्षःपुरीशाखाशाकिनीकुलटासुच ॥ ३२ ॥ लोकोजनेपिभु वनेवल्कंवल्कलशल्कयोः । वङ्कःपर्य्याणभागेनानदीपार्श्वेचभंगुरे ॥ ३३ ॥ शल्कंतुशकलेवल्केशकोजात्यन्तरेन्दपे । शङ्कुःसंख्याऽस्त्रया देभित्कीलांशकलुषेषुना ॥ ३४ ॥ शङ्कात्रासेवितर्केचशाकोद्वीपान्तरे पिच । शक्तोद्रुमविशेषेचपुमान्हरितकेऽस्त्रियां ॥ ३५ ॥ स्मुकोव्याम

मेदि०

कान्त०

मेदि० सुतेवीरेरणवशास्यचमंत्रिणि । शिरीषपादपेपुंसिग्रंथिपर्णनपुंसकम्
कान्त० ॥ ३६॥ शुल्कंघट्टादिदेयेस्याद्धरद्रव्यग्रहेऽस्त्रियाम् । शूकोऽस्त्रीशु
ङ्गदययोःश्लोकःपद्येयशस्यपि॥ ३७॥ शौकंशुकगणेस्त्रीशाकरशो
स्तूकइत्यपि । बाणावानोत्यलेस्तोकस्त्विष्वल्पेचातकेपुमान्॥ ३८॥
कचिः॥ अशोकस्त्रिषुनिःशोकेपुंसिकङ्केल्लिपादपे । स्त्रीयांतुकटुरोहिण्यां
पारदेस्यान्नपुंसकम्॥ ३९॥ अलकाकुवेरपुर्य्यामस्त्रियांचूर्णकुन्तले ।
अभीकःकामुकेक्रूरेनिर्भयेत्रिषुनाकवौ ॥ ४०॥ अनीकोऽस्त्रीरणेसैन्ये
प्यणुकोनिपुणाल्पयोः । अलीकमप्रियेपिस्याद्दिव्यसत्येनपुंसकम्
॥ ४१॥ अनूकंतुकुलेशीलेपुंसिस्याद्गतजन्मनि । अंशुकंसूक्ष्मवस्त्रे
स्यादस्त्रमात्रोत्तरीययोः॥ ४२॥ अन्तिकंनिकटेवाच्यलिङ्गंस्त्रीशातलौष
धौ । चुल्ल्यांज्येष्ठभगिन्यांचनाट्योक्त्याकथ्यतेऽन्तिका॥ ४३॥ अलर्कोध
वलार्केस्याद्योगोन्मादितकुक्कुरे । अम्बिकापार्वतीमात्रोर्धृतराष्ट्रस्यमातरि
॥ ४४॥ अम्बिकाद्यूतभेदेचरजन्यामपियोषिति । अम्लिकातिन्तिडी
काह्लोद्गारचाङ्गेरिकासुच॥ ४५॥ अर्भकःकथितोबालेमूर्खेपिचकृशेपि
च । आनकःपटहेभेर्य्यांमृदङ्गेध्वनदम्बुदे॥ ४६॥ आढकीतुतुवर्य्यां
स्त्रीपरिमाणान्तरेत्रिषु । आलोकस्तुपुमान्द्योतिदर्शनेवंदिभाषणे॥ ४७॥
आह्निकंदिननिर्वर्त्येत्रिलिङ्गमशनद्वयोः । नित्यक्रियाभोजनयोर्वृन्दे
प्रकरणस्यच॥ ४८॥ आतङ्कोरोगसंतापशङ्कासुमुरजध्वनौ । इक्ष्वा

कुःकटुतुंब्यांस्त्रीसूर्य्येवंशन्नृपेपुमान् ॥ ४९ ॥ उलूकःपुंसिकाकारावि मेदि॰
न्द्रेभारतयोधिनि । उदर्क्कश्यत्कालीनफलेमदनकंटके ॥ ५० ॥ काम॰
उद्धकस्तुनिदाघेस्यादातुरेक्षिप्रकारिणि । उष्ट्रिकामृत्तिकाभाण्डभेदेपि
करभस्त्रियां ॥ ५१ ॥ ऊर्मिकाचाङ्गुलीयेस्याद्वस्त्रभङ्गतरङ्गयोः । कनकंहे
म्निपुंसिस्यात्किंशुकेनागकेसरे ॥ ५२ ॥ धूस्तूरेकाञ्चनालेचकालीयेच
म्पकेपिच । करकस्तुपुमान्पक्षिविशेषेदाडिमेपिच ॥ ५३ ॥ द्वयोर्मेघो
पलेनस्त्रीकरङ्केचकमण्डलौ । क्रामुकस्तुपुमान्भद्रमुस्तकेब्रह्मदारुणि
॥ ५४ ॥ फलेकार्पासिकायाश्चपट्टिकालोध्रपूगयोः । कण्टकोऽस्त्रीनितम्बे
ऽद्रेर्दन्तिनान्तमण्डले ॥ ५५ ॥ सामुद्रलवणेराजधानीवलययो
रपि । कटुकाकटुरोहिण्यांस्त्रियांव्योषेनपुंसकं ॥ ५६ ॥ कण्टकोनस्त्रि
यांक्षुद्रशत्रौमत्स्यादिकीकसे । नैयोगिकादिदोषेचैस्याद्रोमाञ्चद्रुमा
ङ्गयोः ॥ ५७ ॥ करङ्कोमस्तकेऽशस्यनारिकेलफलास्थनि । कल
ङ्कोऽङ्केऽपवादेचकालायसमलेपिच ॥ ५८ ॥ कर्णिकाकरिहस्ताग्रे
करमध्यांगुलावपि । क्रमुकादिस्वकटांशेऽक्षवराटेकर्णभूषणे ॥ ५९ ॥ कणि
काकथ्यतेऽन्यन्तसूक्ष्मवस्त्वग्निमन्थयोः । कचाकुस्तुदुरधर्षेदुःशी
लेचविलेशये ॥ ६० ॥ कञ्चुकीवारवाणेस्यान्निर्मोकेकरभेपिच । बद्धा
पकगृहीताङ्गस्थितवस्त्रेचचोलके ॥ ६१ ॥ कञ्चुक्योषधिभेदेऽथकारि
कानटयोषिति । कृतौविवरणश्लोकेशिल्पयातनयोरपि ॥ ६२ ॥ न

मेदि० पुंसकन्तु कर्म्मादौ कारकङ्कर्त्तरि त्रिषु। कामुकः कमनेऽशोकपादपे चातिमुक्तके ॥ ६३ ॥

कान० कार्मुकन्धनुषि स्यान्नावंशो कर्म्मक्षमेऽन्यवत्। काथूकः कुकवाको स्यात्पीतमस्तककोकयोः ॥ ६४ ॥ क्षारकः पक्षिमत्स्यादिपिटके जालकेपि च। कालिका चण्डिकाभेदे कात्स्न्र्ये वृश्चिकपत्रयोः ॥ ६५ ॥ क्रमदेयवस्तुमूल्ये धूसरी नवमेघयोः। पटोलशाखारोमाली मांसी काकी शिवासु च ॥ ६६ ॥ मेघावलौ च किम्पाको महाकालफलाज्ञयोः। कीचके दैत्यभिद्वातहतसस्वनवंशयोः ॥ ६७ ॥ कीटकः क्रिमिजातौना निष्ठुरे पुनरन्यवत्। कुलकन्तु पटोले स्यात्सम्बद्धश्लोकसंहतौ ॥ ६८ ॥ पुंसि वल्मीककाकेन्द्रकुलश्रेष्ठेषु कथ्यते। क्षुल्लकस्त्रिषु नीचेऽल्पे कुशिको मुनिसर्जयोः ॥ ६९ ॥ कुवाकुः कपिवल्यर्केनापरे त्वापिनि त्रिषु। कुलिको नागभेदे स्याद्द्रुभेदे कुलसत्तमे ॥ ७० ॥ क्षुरकः कोकिलाक्षे स्याद्द्रौ क्षुरे तिलकद्रुमे। कूपको गुणवृक्षे स्यात्तैलपात्रे कुकुन्दरे ॥ ७१ ॥ उदपानेऽच्युतायान्तु कूपिकाऽम्भोगतोपले। कूलकं न स्त्रियां स्तूपे पुंसि स्यात्तृक्रिमिपर्वते ॥ ७२ ॥ कूर्चिका सूचिकायाञ्च तूलिकायाञ्च कुड्मले। कपाटं कुञ्चिकेक्षीरविकृतावपि योषिति ॥ ७३ ॥ कृषकः पुंसि फाले स्यात्कर्षके त्वभिधेयवत्। कोरकोऽस्त्री कुड्मले स्यात्कक्कोलकमृणालयोः ॥ ७४ ॥ कौतुकन्त्वभिलाषे स्यादुत्सवे नर्महर्षयोः। तथा परम्पराया तमङ्गले च कुतूहले ॥ ७५ ॥ विवाहसूत्रगीतादिभोगयोरपि नद्ययोः। कौशिको नकुले व्या

लग्राहे गुग्गुलुशक्रयोः ॥ ७६ ॥ कोषकोलूकयोस्स्यादिम्बामि चमुना मेदि॰
वपि । कौशिकी चण्डिकायाञ्च नदीभेदे पयोष्णिति ॥ ७७ ॥ खनकोना कान्त॰
खुरौ सन्धिचौरे चिम्बवदारके । खड्गिको महिषीक्षीरफेणशौनिकयोरपि
॥ ७८ ॥ स्यात्खोलकस्तु पाकेऽपि रस्त्रवल्मीकपूगकोषेषु । गणिकायूथी
वैश्ययोर्भोतर्का रोगे नातु दैवज्ञे ॥ ७९ ॥ ग्रन्थिकम्पिप्पलीमूले गुग्गुलुग्र
न्थिपर्णयोः । करीरे पुंसि दैवज्ञे सहदेवाख्यपाण्डवे ॥ ८० ॥ गण्ड
कः पुंसि खड्गे स्यात्संख्याविद्याप्रभेदयोः । अवच्छेदेऽन्तराये च गण्डकीस
रिदन्तरे ॥ ८१ ॥ ग्राहको घातिविहगे धान्यानाञ्च गृहीतरि । गान्धि
कोले खकेपि स्यात्सुगन्धिव्यवहारिणि ॥ ८२ ॥ गुण्डको मलिने धूलीक
लोक्तिस्नेहपात्रयोः । गृह्यको निघ्नके छेके गैरिकन्धातुरुक्मयोः ॥ ८३ ॥
गोलको विधवापुत्रे जारजस्यान्मलिके गुडे । गोरंकुः स्यात्पुमान्पक्षिभेदे
लग्नकवन्दिनोः ॥ ८४ ॥ चषकोऽस्त्री सुरापात्रे मधुमद्यप्रभेदयोः ।
चलुकः प्रसृतौ भाण्डभेदे चुलुकवत्पुमान् ॥ ८५ ॥ चतुष्की मसकह
र्म्यां पुष्करिण्यन्तरेपि च । चारकः पालकेऽश्वादेः स्यात्सञ्चालकबन्ध
योः ॥ ८६ ॥ चिचकं तिलकेना तु व्याघ्रभिच्च स्तुपाठिषु । चुम्बकस्तु म
नपरे धूर्तायस्कान्तयोरपि ॥ ८७ ॥ वक्रग्रन्थैकदेश शेधटस्योद्धीव
लम्बने । चुञ्चकी शिम्शुमारे पि कुण्डीभेदे कुलान्तरे ॥ ८८ ॥ चूलिका
नाटकस्याङ्गे कर्णमूले च हस्तिनां । चूतकः कूपकेप्याम्रे जनकः पितृभूभु

जाः ॥ ८९ ॥ जम्बूकः फेरवे नीचे पश्चिमाशापतावपि । जतुकाजिन
पत्रायां जतुकं हिंगुलाक्षयोः ॥ ९० ॥ जाहको घोङ्घमार्जारखट्वाकारह
गिडकासु च । जालकं कोरके दम्भे कुलायानाययोरपि ॥ ९१ ॥ नपुंसि
मोचकफले स्त्रियां तु वसनान्तरे । गिरिसारजलौकायामपि स्याद्विधवा
स्त्रियां ॥ ९२ ॥ भटानामश्मरचिताङ्गरक्षिण्याञ्च जालिका । जालि
कावाच्यवङ्गामजालिजालोपजीविनोः ॥ ९३ ॥ जीवकः प्राणकेपीतशा
लक्षपणयोरपि । कूर्चशीर्षेपि पुंसि स्याद्राजीवे जीविका मता ॥ ९४ ॥ त्रि
षु सेविनिवृध्याशिजीविनोराहितुण्डिके । झल्लिको दर्शनपटे स्त्रियां द्यो
ते च झिल्लिका ॥ ९५ ॥ आतपस्यहृ चैगिंट्यां टुण्टुकः शोणकाल्पयोः
। डिम्बिका जलविम्बे स्यान्मोणकेकामुके स्त्रियां ॥ ९६ ॥ तण्डकः खञ्ज
नेफेणे समासप्रायवाचि च । गृहदारुतरुस्कन्धमायावकुलकेष्वपि
॥ ९७ ॥ तक्षकस्तु पुमान्नागराजभेदे च वर्द्धकौ । तारको दैत्यभित्कर्ण
धारयोर्नन्दयोर्दृशि ॥ ९८ ॥ कनीनिकायामृक्षे च नपुँमांस्तु तरि त्रिषु
। तिलकोद्रुमरोगाश्वभेदे च तिलकालके ॥ ९९ ॥ क्लीबं सौवर्चलक्लो
म्नोर्मस्त्रियां तु विशेषके । त्रिशंकुर्ना राजभेदे शलभे वृषदंशके ॥ १०० ॥ तु
रुष्कः सिह्लके म्लेच्छजातौ देशान्तरेऽपि च । तूलिका कूर्चिकायाञ्च शय्यो
पकरणेऽपि च ॥ १०१ ॥ दर्शकः स्यात्प्रतीहारे दर्शयितृप्रवीणयोः । दा
रको बालकेऽपि स्याद्भेदकेप्यभिधेयवत् ॥ १०२ ॥ द्रावको ग्रावभेदे स्याद्विद

ष्वेमोचकेपि च । दीपकं वा गलङ्कारे वाच्यवद्दीप्तिकारके ॥ १०३ ॥ दी मेदि॰
प्यकश्चाजमोदायां यमानी बर्हिचूडयोः । दुन्दुकोगन्धकुट्यां स्याद्विडा काम॰
दन्धुवकाद्युके ॥ १०४ । दूषिकातूलिकायाञ्च मलेस्याज्जो च नस्यच ।
धनिका साधुनार्य्यां नाधन्या केचिषुसाधुधनिनोस्त्र ॥ १०५ ॥ स्याद्धेनुवा
कारिण्यां धेनावपि नातुदानवविशेषे । धेनुकं करणे स्त्रीणां धेनूनामपि संहतौ
॥ १०६ ॥ नर्त्तकः केवले पोटगलचारणयोर्नटे । नर्त्तकी लासिकायाञ्च
करेणावपि योषिति ॥ १०७ ॥ नग्निकापि कुमार्य्यां स्यात्पुमान्क्षपणवन्दिनोः । नरकः पुंसि निरये देवारातिप्रभेदयोः ॥ १०८ ॥ नन्दको
हरिखड्गे च हर्षके कुलपालके । नालीकः शरशल्याङ्गे प्वब्जषण्डे नपुंसकं ॥ १०९ ॥ नायको नेतरि श्रेष्ठे हारमध्यमणावपि । निर्मोको
मोचने व्योम्नि सन्नाहे सर्पकञ्चुके ॥ ११० ॥ नीलिका नीलिनी क्षुद्ररोग
शेफालिकासु च । पणकस्तु व्रते खड्गे प्रसेकः सेचने स्नुतौ ॥ १११ ॥ प्र
तीकोऽवयवेपि स्यात्प्रतिकूलविलोमयोः । पद्मकं स्यात्पद्मकाष्ठवि
न्दुजालकयोरपि ॥ ११२ ॥ पञ्चकस्तु पुमान्पार्श्वदारे च पार्श्वमाच
के । पल्यङ्कोमञ्चपर्य्यङ्कवृषी पर्य्यस्थिकासु च ॥ ११३ ॥ पताका वै
जयन्त्याञ्च सौभाग्य नाटकाङ्कयोः । पातुकः पतयालौ स्यात्प्रपाते जल
हस्तिनोः ॥ ११४ ॥ प्राणकः सत्त्वजातीये जीवकद्रुमचोलयोः । पाट
कः स्यान्महाकिष्कौ कटका न रवाद्ययोः ॥ ११५ ॥ अश्वादिचोलनेमु

मेदि० लद्रव्यापचययोर्धसोः । पालङ्कःशल्लकीशाकभेदयोःप्राजिपक्षिणि
कान्त० ॥ ११६ ॥ पावकोऽग्नौसदाचारे वह्निमन्थे च चित्रके । भल्लातकेविडङ्गेऽ
थप्रियकःपीतशालके ॥ ११७ ॥ नीपेचित्रमृगेचासौप्रियङ्गौकुङ्कुमेपि
च । पिण्याकोऽस्त्रीतिलकल्केहिङ्गुबाह्लीकसिह्लके ॥ ११८ ॥ पिना
कोऽस्त्रीरुद्रचापेपांशुवर्षत्रिशूलयोः । पिटकस्त्रिषुविस्फोटेमञ्जूषा
यांपुनःपुमान् ॥ ११९ ॥ पिष्टकोघृतपूपादौनेत्ररोगांतरेपिच । पुल
कःकृमिप्रभेदेप्रस्तरभेदेचमणिदोषे ॥ १२० ॥ रोमांचेहरितालेगजान्नपि
ण्डेचगन्धर्वे । पुलाकस्तुच्छधान्येस्यात्संक्षेपेभक्तसिक्थके ॥ १२१ ॥ पु
ष्पकंरीतिपुष्पेचविमानेधनदस्यच । नेत्ररोगेतथारत्नकङ्कणेचरसाञ्ज
ने ॥ १२२ ॥ लोहकांस्येमृदङ्गारशकट्यांच नपुंसकम् । स्यात्पुत्रिका
पुत्तलिकादुहित्रोर्यावतूलके ॥ १२३ ॥ नापुंचेसरभेधूर्त्तेशैलवृक्षप्रभेद
योः । पूर्णकःस्वर्णचूडेस्यान्नासाच्छिन्न्यामपूर्णिका ॥ १२४ ॥ पृदाकुर्वृ
श्चिकेव्याघ्रेसर्पेचित्रकयोःपुमान् । पृथुकःपुंसिचिपिटेशिशौस्यादभिधेय
वत् ॥ १२५ ॥ पेचकोगजलाङ्गूलमूलेपान्नेचकौशिके । पेटकंपुस्तका
दीनांमञ्जूषायांकदम्बके ॥ १२६ ॥ बल्मीकोरोगभेदेचनाकौचपुंनपुं
सकं । बन्धूकंबन्धुजीवेस्याद्बन्धूकःपीतशालके ॥ १२७ ॥ बन्धकःस्या
द्विनिमयेपुंश्चल्यांस्याच्चबन्धकी । बाकुकःकर्कटेचार्कदात्यूहेजलखा
तके ॥ १२८ ॥ बराकःशङ्करेपुंसिशोचनीयेऽभिधेयवत् । बालकस्तु

शिशावज्ञेवालधौ हयहस्तिनोः ॥ १२९ ॥ अङ्गुरीयकह्रीवेरवलयेपुं मेदि॰
सि बालिका । बालायां बालुकापञ्चकाद्दलाकर्णभूषणे ॥ १३० ॥ बारको कान्त॰
ऽश्वगतौ पुंसि वाच्यवत्स्यान्निषेधके । बालुका सिकता ह्रस्वा द्वालुकं त्वेलबालु
के ॥ १३१ ॥ भर्म्मकं रोगभेदे स्याद्विडङ्कक लधौतयोः । श्यामको जम्बुके धूर्त्तः
स्तूर्य्यावर्त्ताश्मभेदयोः ॥ १३२ ॥ भालाङ्कः करपत्रे स्याच्छाकभेदे च रो
हिते । महालक्षणसम्पन्नपुरुषे कच्छपे हरे ॥ १३३ ॥ धूमिका रच
नायां स्याद्देशान्तरपरिग्रहे । भूतीकमपि भूनिम्बे दीप्यकर्पूरकतृणे
॥ १३४ ॥ मधुका मधुपर्ण्यां स्यान्मधुकं क्लीतके खगे । वह्न्यन्तरे नाम श
को रोगकीटप्रभेदयोः ॥ १३५ ॥ मण्डूकः शोणके मुन्यन्तरे स्याद्भूढ्व त्त्रे
सि । मण्डूकपर्ण्यां मण्डूकी मल्लिको हंसभिद्यपि ॥ १३६ ॥ मल्लिकातृ
णशून्येपि मीनमृत्पात्रभेदयोः । मामकं स्यान्मदीयार्थे त्रिषु पुंसि तु मातुले
॥ १३७ ॥ मातृका धातृकामात्रोर्द्देवीभिदर्णमालयोः । मालिका सप्तला
पुत्रीग्रीवालङ्करणेषु च ॥ १३८ ॥ पुष्पमाल्ये नदीभेदे पक्षिभेदे तु मालि
कः । मेचकस्तु मयूरस्य चन्द्रके श्याम लेपुमान् ॥ १३९ ॥ तद्गुणे वा
च्यवत् क्लीवं स्रोतोञ्जनान्धकारयोः । मोचकः कदली शिग्रुनिर्मोचकविरागि
षु ॥ १४० ॥ मोदकः खाद्यभेदे ऽस्त्री हर्षुके पुनरन्यवत् । यमकं यमजे
शब्दालङ्कारे पुंसि संयमे ॥ १४१ ॥ याजकस्तु गजे राज्ञो याज्ञिकेऽप्यथ
याज्ञिकः । याजके च कुशे चाथ युतकं संशये युगे ॥ १४२ ॥ नारीवस्त्रा

मेदि० अलेयुक्ते च लनाग्रेऽपियोजके । यूथिकास्त्रीनकेपुष्पविशेषेपिचयोषिति
कान्त० ॥१४३॥ रसिकास्त्रीरसालेक्षुरसयोःसरसेचिषु । रक्तकोऽस्त्रीनबन्धू
कारक्तवस्त्रानुरागिषु ॥१४४॥ राजिकापिचकेदारेराजसर्षपरेखयोः । व
त्सकंपञ्चराचेनावेश्याविश्माद्दवासिनि ॥ १४५॥ रुचकोबीजपूरेचनिष्के
दन्तकपोतयोः । नद्वयोःसर्जिकाक्षारेप्यश्वाभरणमाल्ययोः ॥ १४६॥
सौवर्चलेपिमाङ्गल्यद्रव्येचाप्युत्कटेपिच । रुण्डिकाद्वारपिण्ड्याञ्चदूति
कायांरणक्षितौ ॥ १४७ ॥ रूपकंनाटकेमूर्त्तेकाव्यालङ्करणेपिच ।
रेणुकापिहरेणौचजामदग्न्यस्यमातरि ॥ १४८ ॥ रोहकःप्रेतभेदेनारो
हरिणिषुविश्रुतः । लम्पाकोलम्पटेदेशेलासकोलास्यकारिणि ॥ १४९ ॥
मयूरेलसकेचाथलूनकोभेदितेपशौ । लोचकोमांसपिण्डेऽस्थितारका
याञ्चकज्जले ॥ १५० ॥ ललाटाभरणेस्त्रीणांकदलीनीलवस्त्रयोः । निर्बु
द्धौकर्णपूरेचमूर्ख्येभ्रूस्त्वथचर्म्मणि ॥ १५१ ॥ वस्तुकरौमकेपुंसिशिवमल्लञ्च
कीगर्णयोः । वर्णकश्चारणेस्त्रीतुचन्दनेचविलेपने ॥ १५२ ॥ द्वयोर्नि
ल्यारिषुत्रीस्यादुत्कर्षकाञ्चनस्यच । वर्त्तकस्तुखुरेऽश्वस्यविहगेवर्त्तकी
द्वयोः ॥ १५३ ॥ वञ्चकस्तुखलेधूर्त्तेगृहवभ्रौचजम्बुके । व्यलीकमप्रि
याकार्य्यवैलक्ष्येष्वपिपीडने ॥ १५४ ॥ नानागरेऽथवाह्लीकंवाह्लिकं
धीरहिङ्गुनोः । द्वावेतौपुंसिदेशस्यप्रभेदेतुरगान्तरे ॥ १५५ ॥ वार्द्धकं
वृद्धसंघातेवृद्धस्यभावकर्म्मणोः । वार्षिकंत्रायमाणायांक्लीवंवर्षाभवेत्रि

षु ॥ १५६ ॥ वालकोऽस्त्रीपारिहार्य्येऽश्वपुंस्यादङ्गुरीयके । वितर्कस्तु मेदि॰
पुमानूहे संशयेचनिगद्यते ॥ १५७ ॥ विपाकः पचने स्वेदे कर्मणो विस काम॰
दृक्‌फले । विवेकः स्याज्जलद्रोण्यां पृथग्भावविचारयोः ॥ १५८ ॥
वृश्चिकस्त्वद्रुणोः शौ ष्मुक्ष्मूककीटौषधीभिदोः । वृषाङ्कः शङ्करे साधौ भल्लातकमहत्त्वयोः ॥ १५९ ॥ वैजिकं शिग्रुतैले स्याद्बुद्धौ सद्योऽङ्कुरेतुना । श
लाका शल्यमदनशारिकाशल्लकीषु च ॥ १६० ॥ छत्रादिकाष्ठीशरयोः
शल्लकोपक्षुतृक्षयोः । शम्बूकोगजकुम्भान्तेघोङ्गे चक्ष्मूद्रतापसे ॥ १६१ ॥
जलजन्तुविशेषे च शम्बूकान नपुंसकम् । शङ्कुकम्बलयेकम्बावस्त्रीपुं
सिशिरोरुजि ॥ १६२ ॥ शार्ककः स्याद्दुग्धफेनशर्करापिण्डयोः पुमान् ।
शिम्बुकः शिम्बुमारे स्याद्वालकोलूपिनोरपि ॥ १६३ ॥ शीनकः शीनका
ले च स्तुस्थिते दीर्घसूचिणि । स्मूककः प्रावटेपि स्याद्रसे पिपरिकीर्त्तितः
॥ १६४ ॥ सस्यको मणिभेदेऽसौ सम्पर्कोमेलके रतौ । सम्पाकस्तर्कके धृष्टे
त्रिषु नाचतुरङ्गुले ॥ १६५ ॥ स्यमोकानीलिकायां स्त्रीस्यमीकोनाकुवृक्षयोः
। स्वस्तिको मङ्गलद्रव्येषु तुष्कगृहभेदयोः ॥ १६६ ॥ सवकोऽस्त्री
सीधुपाने सीधुपाचेक्षुसीधुनोः । अच्छिन्नाध्वगपङ्क्तौ च सायकः शरखड्ग
योः ॥ १६७ ॥ स्यासकः पुंसि चार्च्चिक्ये जलादेरपि बुद्बुदे । सूच
कः सीवनद्रव्ये बोधकेपि स्मुने स्मुनि ॥ १६८ ॥ आनौकावेस्तनकोस्त्रीपा
रदेनदयोर्जनैः । स्हदाकुर्नानिलेवच्चेज्वलनेप्रतिसूर्य्यके ॥ १६९ ॥ सेब

मेदि॰ कल्पर्ससेनाबाच्यलिङ्गोनुजीविनि। सेचकः स्यात्पुमान्मेघेवाच्यलिङ्ग

काम॰ स्तुसेक्तरि॥ १७०॥ सैनिकः सैन्यरक्षेचस्यात्सेनासमवेतके। हा

रकः कितवेचौरेगद्यविज्ञानभेदयोः॥ १७१॥ क्रतुद्विषाद्यभेदेचम

न्दात्यूहपक्षिणि। हेरुकोबुद्धभेदेस्यान्महाकालगणेपिच॥ १७२॥

कपत्रुः॥ भवेदनिमकोभेकेपिकेऽलौपद्मकेशरे। मधूकेऽप्यथालिपकोभृ

ङ्गकोकिलकुक्कुरे॥ १७३॥ अङ्गारकः कुजेपिस्यादुल्मुकांशेकुरण्टके

। भवेदङ्गारिकाचेक्षुकाण्डेकिंशुककोरके॥ १७४॥ स्यादपूमन्तकमु

द्यानेमल्लिकाच्छदनेपिच। आकल्पकस्तमोमोहग्रन्थ्यावुत्कलिकामुदोः

॥ १७५॥ आक्षेपकोऽनिलव्याधौव्याधेनिन्दाकरेपिच। भवेदाखनि

कश्चौरेमूकरेमूषिकेपिच॥ १७६॥ कथितोत्कलिकोत्कण्ठाहेलासलि

लवीचिषु। एडमूकोऽन्यलिङ्गः स्याच्छठेवाक्श्रुतिवर्ज्जिते॥ १७७॥

कठिल्लः कल्पर्णासेवर्षाभूकारविल्लयोः। कपर्दकोवराटेस्याज्जटाजूटे

चधूर्जटेः॥ १७८॥ कर्कोटकः स्यान्मालूरकाद्रवेयप्रभेदयोः। कलवि

ङ्कः पुमान्ग्रामचटकेपिकलिङ्गके॥ १७९॥ कनीनिकानारकेक्ष्णः स्या

त्कनिष्ठाङ्गुलावपि। कापटिकोऽन्यमर्म्मज्ञेछात्रेपुंसिशठेत्रिषु॥ १८०॥

काकरुकोनग्नदम्भस्त्रीजितोलूकभीरुषु। निम्बकुरुवकः शोणाम्लानभि

ण्टीप्रभेदयोः॥ १८१॥ कुरुण्टकः पीतपुष्पाम्लानभिण्टिकयोः पुमान्।

द्राकवाकुर्मयूरेपिसरटेचरणायुधे॥ १८२॥ कोषातकः कठेपुंसिपटो

र्यांचोपकेस्त्रियां। अथकौकुटिकोऽदूरप्रेरितादृष्टिपदाभिके ॥ १८३ ॥ मेदि०
कौलेयकः सारमेयेकुलीनेऽथ खरालिकः। ग्रामणीभरिडनापवेष्णुपधा काण्ड०
मेचपुंस्ययं ॥ १८४ ॥ भवेद्गुणनिकानृत्येमूर्ख्याङ्केपाठनिश्चितौ। गोक
एठकोगोक्षुरकेस्थपुटेपगवांखुरे ॥ १८५ ॥ गोमेदकंपीतमणौकाकोलेप
ष्कोपिच। स्याद्गोकुलिकोवलिरेपङ्कस्थगव्युपेक्षके ॥ १८६ ॥ अथघ
र्घरिकाक्षुद्रघण्टावादिचदण्डयोः। चर्चरीकोमहाकालेकेशविन्यास
शाकयोः ॥ १८७ ॥ चण्डालिकाकिन्नरयामुमायामोषधीभिदि। अथचा
तुरकस्वक्रगण्डोपुंस्यभिधेयवत् ॥ १८८ ॥ गोचरेलोचनस्यापिचाटुका
रेनियन्तरि। जर्जरीकंवक्रुछिद्रेजरातुरेपिवाच्यवत् ॥ १८९ ॥ जीव
न्तिकागुडूच्यांस्त्रजीवाख्यशाकवन्द्योः। जैवातृकःपुमान्सोमेदीर्घायुःकृ
शयोस्त्रिषु ॥ १९० ॥ तर्तरीकंवहित्रेस्यात्तद्वयोःपारगेत्रिषु। तिक्तशा
कस्तुखदिरेवरुणेपत्रसुन्दरे ॥ १९१ ॥ त्रिवर्णकंगोक्षुरकेत्रिफला
यांकटुत्रिके। दलाढकःस्त्रयंयातनिलेपृश्न्यांस्त्रगैरिके ॥ १९२ ॥ फेन
खातकयोर्नागकेसरेचमहत्तरे। दन्दशूकस्तुपुंलिङ्गोराक्षसेचसरीसृ
पे ॥ १९३ ॥ दासेरकस्तुकरभेदासीपुत्रेचधीवरे। नियामकःकर्णधा
रेपोतवाहेनियन्तरि ॥ १९४ ॥ निम्बारकःपुरीषस्यक्षयेस्थिरेसमीरणे
। निर्ग्रन्थकःस्यान्नक्षपणेनिष्फलेप्यपरिच्छदे ॥ १९५ ॥ प्रचलाकःशरघा
तेशिखण्डिचभुजङ्गमे। प्रकीर्णकंचामरेस्याद्विस्तारेनागुरङ्गमे ॥ १९६ ॥

मेदि॰ पञ्चालिकास्त्रियां वस्त्रपुत्रिकागीतिभेदयोः। स्यात्पिप्पलकं वक्षोजवृन्तेऽसी

कान्त॰ वनस्त्रूचके ॥ १९७ ॥ पिण्डीतकः स्यात्तगरे मदनाख्यमहीरुहे। अ

थपुष्पलकोगन्धमृगेऽश्मपराकीलयोः ॥ १९८ ॥ पुण्डरीकं सिताम्भोजेसि

तच्छत्रेचभेषजे। पुंसिव्याघ्रेऽग्निदिङ्नागेकोषकारान्तरेपिच ॥ १९९ ॥

भवेत्पूर्णालकंबद्धांपगोचपटहेपिच। फर्फरीकम्मृपेटेस्यात्फर्फरीकं

तुमार्दवे ॥ २०० ॥ बलाहकोगिरौमेघेदैत्यनागविशेषयोः। वराटकः प

द्मबीजेकोषेरज्जौकपर्दके ॥ २०१ ॥ वर्वरुकावलाकाभिद्वात्तावर्जितशा

ख्ययोः। वरण्डकस्तुमातङ्गवेद्यांयौवनकण्टके ॥ २०२ ॥ वर्त्तुलेऽथो

वाणिजकोवाडवाग्नौवणिज्यपि। वृन्दारकः सुरेपुंसिमनोज्ञश्रेष्ठयोस्त्रिषु

॥ २०३ ॥ अथभ्रमरकोभृङ्गेगिरिकेचालकान्तरे। भट्टारकोनृपेनाट्यवा

चार्देवेतपोधने ॥ २०४ ॥ भयानकः स्मृतोव्याघ्रेरसेराहौभयङ्करे। भार्य्या

टिकः पुमान्भार्य्यानिर्जितेहरिणान्तरे ॥ २०५ ॥ भवेन्मरुवकः पुष्पविशे

षेमदनद्रुमे। मण्डोदकंचित्तरागेक्लीवमातर्पणेपिच ॥ २०६ ॥ भवेन्मण्डल

कंबिम्बेकुष्ठभेदेचदर्पणे। अथमर्कटकः शस्यभेदेवानरलूतयोः ॥ २०७ ॥

मयूरकोप्यपामार्गेक्लीवंतुत्थाञ्जनेपुनः। माणवकोहारभेदेबालेकुपुरुषे

पिच ॥ २०८ ॥ मृष्टेरुकोवदान्येपिमिष्टाशिन्यतिथिद्विषि। रत्नद्धि

कंस्याद्दिवसेस्नुखस्नानेष्टमङ्गले ॥ २०९ ॥ राधरङ्कः पुमान्सीरेसीरकेच

घनोपले। लालाटिकः प्रभोर्भावदर्शिन्याम्मेषणान्तरे ॥ २१० ॥ का

र्ध्याक्षमेलेखनिकः कथितोलेखहारके । लेखिपुपरहस्तेन स्वहस्तस्य मेदि०
चलेखके ॥ २११ ॥ वर्त्तहकोनदीभेदेकाकनीडेजलावटे । विनायक कान्त०
स्तुहेरम्बेताक्ष्यैविघ्नेजिनेगुरै ॥ २१२ ॥ विनुन्नकस्तुधन्याकेशाटामल
मयूरके । विशेषकोऽस्त्रीतिलकेविशेषयितरिचिपु ॥ २१३ ॥ विदूषक
स्याठुवटौपरनिन्दाकरेपिच । वैनाशिकःस्यात्क्षणिकेपरतन्त्रोर्णनाभयोः
॥ २१४ ॥ वैदेहकोवाणिजकेशूद्राद्वैश्यासुतेपिच । वैतालिकःपुमान्
खेट्टिनालेबोधकरेचिपु ॥ २१५ ॥ शतानीकस्तुवृन्देस्यान्मणिराजप्रभे
दयोः । शालावृकःशृगालेस्यात्सारमेयेबलीमुखे ॥ २१६ ॥ शिलाटकः
पुमानट्टेविलेपेपरिकीर्त्तितः । शृगालिकाशिवायांस्याच्चासादपिपला
यने ॥ २१७ ॥ शृङ्गाटकंभवेद्वारिकण्टकेचचतुष्पथे । सन्तानिकापि
क्षीराद्दिसारेमर्कटजालके ॥ २१८ ॥ सन्दंशिकापिस्तुत्रुटीलोहयन्त्र
विशेषयोः । सञ्चारिकातुयुगलेकुट्टनीघ्राणयोरपि ॥ २१९ ॥ सङ्घा
टिकास्त्रियांयुग्मेकुट्टन्यांजलकण्टके । सुप्रतीकःशोभनाङ्गेभवेदीशान
दिग्गजे ॥ २२० ॥ अथसैकतिकंमातृयात्रामङ्गलसूत्रके । नासन्थ
सोक्षपणकेचिपुसन्देहजीविनि ॥ २२१ ॥ सोमवल्कस्तुधवलखदिरे
कटूफलेपिच । सौगन्धिकन्तुकह्लारेपद्मरागेपिकत्तृणे ॥ २२२ ॥ पुंलि
ङ्गोगन्धपाषाणेसुगन्धव्यवहारिणि । ॥ कपञ्च ॥ अनेडमूकउद्दिष्टःश
ठेवाक्श्रुतिवर्जिते ॥ २२३ ॥ स्यादास्फुरितकंहासनखरघातभेदयोः ।

मेदि॰ स्तुपकारिकोपकार्य्योपिष्टभेदेन्नृपालये ॥ २२४ ॥ कक्ष्यावेक्षकइत्येव
वाम॰ मन्तुद्धानोद्यानपालयोः । रङ्गाजीवेकयोषड्गेदाःस्थेऽथकटखादकः
॥ २२५ ॥ खादकेकाचकलशेबलिपुष्टेचजम्बुके । क्रमिकण्टकनुचिन्ना
क्रविउङ्गेडुम्बरेषुच ॥ २२६ ॥ गोजागरिकंमङ्गलेपुंसिस्यात्कण्टकारके ।
चिल्लमीलिकातुकण्ठीभेदेखद्योतविद्युतोः ॥ २२७ ॥ अथोजलकरङ्कस्या
न्नारिकेलफलेम्बुजे । शङ्खेजललतायाञ्चवारिवाहेचकीर्त्तितः ॥ २२८ ॥
जलतापिकइत्त्रीसकाकेचीत्रषयोस्त्रपुंसिस्यात् । नवफलिकास्त्रीनव्ये
नवजातरजोऽङ्गनायाञ्च ॥ २२९ ॥ नागवारिकउद्दिष्टोराजकुञ्जर
हस्तिपे । गरुडस्थराजगरुडेचित्रमेखलकेपिच ॥ २३० ॥ स्याद्व्रीहिरा
जिकःकङ्गुधान्यचीनकधान्ययोः । व्यवहारिकास्याल्लोकयात्रासंमार्ज
नीङ्गुदे ॥ २३१ ॥ शतपर्व्विकातुदूर्व्वायांवचायामपियोषिति । शीतच
म्पकइत्येषस्याद्दातर्पणदीपयोः ॥ २३२ ॥ सुवसन्तकउद्दिष्टोवासन्त्यां
मदनोत्सवे । स्याद्धेमपुष्पिकायूथ्यांचम्पकेहेमपुष्पकः ॥ २३३ ॥ कषट् ॥
ग्राममद्गुरिकाग्रामयुद्धभृङ्गीभषेस्त्रियां । मदनशलाकाकामोद्दीपक
भेषज्यसारिकयोः ॥ २३४ ॥ मातुलपुत्रकइत्यपिमामकतनयेफले
चधूर्त्तस्य । वर्णविलोडकएषस्त्रोकस्तेनेचसन्धिचौरेच ॥ २३५ ॥ सिन्दू
रतिलकउक्तोमतङ्गजेस्त्रीतुकामिन्यां ।

इतिकान्तवर्गः





॥ खैकं ॥ खमिन्द्रियेपुरेक्षेत्रेशून्येबिन्दौविहायसि । संवेदनेदेवलोके कर्म्मण्यपिनपुंसकं ॥ १ ॥ खद्वि ॥ नखोस्त्रीक्लीवयोः शुक्तौ नखरेपुन्नपुंसकं । न्युङ्खः सम्यङ्ग्नोङ्खे वसाम्नः षटप्रणवेषु च ॥ २ ॥ प्रेङ्खापर्य्यटनेप्यश्वगतौसंवेशनांतरे । मुखंनिःसरणेवक्त्रेप्रारम्भोपाययोरपि ॥ ३ ॥ खंध्यन्तरेनाटकादेःशब्देपिचनपुंसके । लेखोलेख्येसुरे लेखालिपिराजिकयोर्मता ॥ ४ ॥ रिङ्खाश्वगतिभेदेपिस्मृकशिंब्याश्च नर्त्तने । शङ्खः कम्बौ नयोषिन्नाभालास्थिनिधिभिन्नखे ॥ ५ ॥ शाखापक्षान्तरेबाहौ वेदभागद्रुमाङ्गयोः । शिखाशाखावर्हिचूडालाङ्गलिक्यग्रमात्रके ॥ ६ ॥ चूडामात्रेशिखायाञ्चज्वालायांप्रपदेपिच । सखामित्रेसहायेनावयस्यायांसखीमता ॥ ७ ॥ सुखंशर्म्मणिनाकेचसुखापुर्य्यांप्रचेतसः । खत्रि ॥ गोमुखंकुटिलागारेवाद्यभाण्डे चलेपने ॥ ८ ॥ पुंसिमातलिपुत्रेचमहादेवगणान्तरे । त्रिशिखेरक्षसेक्लीवंत्रिशूलेमण्डलान्तरे ॥ ९ ॥ दुर्मुखः कपिभिन्नागभिदोर्नामुखरेत्रिषु । प्रमुखः प्रथमेश्रेष्ठेमयूखः किरणेपिच ॥ १० ॥ ज्वालायामपिशोभायांविशिखस्तोमरेशरे । विशिखानुखनित्र्याश्चरथ्यानलिकयोरपि ॥ ११ ॥ विशाखस्तर्कमेस्कन्देस्त्रियामृक्षेकठिल्लके । वैशाखोमासभेदेपिमन्थानेचप्रकीर्त्तितः ॥ १२ ॥ सुमुखस्तार्क्ष्यतनयेशाकनागप्रभेदयोः । ॥ खचतुः ॥ भवेदग्निमुखोदेवेविप्रेभल्ला

मं दि॰ न्तकेस्त्रियां ॥ १३ ॥ अथाग्निशिखमुद्दिष्टं कुसुम्भे कुङ्कुमेपि च । लाङ्गलि
खान्त॰ क्यासौषधौ च विशल्यायां स्त्रियोषिति ॥ १४ ॥ इन्दुलेखाऽमृतासोमलताश
शिकलासु च । अथ बद्धशिखा स्त्री स्याद् उच्चटायां शिशौ त्रिषु ॥ १५ ॥ म
हाशङ्खो मानुषास्थि संख्याभेदालिकेषु च । भवेद्व्याघ्रनखं कन्दगन्धद्रव्य
विशेषयोः ॥ १६ ॥ नखक्षतान्तरे क्लीबं शिलीमुखोऽलिकाण्डयोः ।
शशिलेखा कलाभागे गुडूचीवृत्तभेदयोः ॥ १७ ॥ भवेत्स्वस्तिमुखो लेखे
ब्राह्मणे वन्दिनि त्रिषु । ॥ खपञ्च ॥ मलिनमुखोऽग्नौ गोलाङ्गूले पुंसि त्रिषु
क्रूरे ॥ १८ ॥ शीतमयूखश्चन्द्रे घनसारे चापि पुंलिङ्गः । सर्वतोमुखस्त्वग्रे
चश्चेव च ब्रह्मणः पुमान् ॥ १९ ॥ नपुंसकन्तु पानीये स्तुरवर्त्मण्यपि स्मृतं

॥ इति खान्तवर्गः ॥



गान्त॰ ॥ गैकं ॥ गौः सर्गे वबलीवर्द्दे रश्मौ च कुलिशे पुमान् । स्त्री सौरभेयी दृग्बाण
दिग्वाग्भूष्वप्सु भूम्नि च । १ ॥ गद्वि ॥ अगः स्यान्नगवत् पृथ्वीधरपादपयोः पु
मान् । अङ्गं गात्रे प्रतीकोपाययोः पुंभूम्नि नीवृति ॥ २ ॥ क्लीबैकत्वे त्वप्रधा
ने त्रिष्वङ्गवति चान्तिके । इङ्गः स्याद् अद्भुते ज्ञाने जङ्गमेङ्गितयोरपि ॥ ३ ॥
खगः सूर्य्ये ग्रहे देवे मार्गणे च विहङ्गमे । खड्गो गण्डकशृङ्गासि बुद्धभेदेषु
गण्डके ॥ ४ ॥ गाङ्गस्तु गङ्गासम्भूते त्रिषु भीष्मे गुहे पुमान् । चङ्गस्तु शो
भनेदक्षे टङ्गोऽस्त्री स्यात्खनित्रके ॥ ५ ॥ खड्गभेदे च जङ्घायां त्यागे दा

नेचवर्जने । तुङ्गीनिशावर्व्वरयोः पुन्नागनगयोः पुमान् ॥ ६ ॥ उन्नतेचिषु भेदि॰
दुर्गेमानोल्ल्योः स्त्रीदुर्गमेत्रिषु । नागंनपुंसकंरङ्गेसीसकेकरणान्तरे ॥ ७ ॥ गाम॰
नागः पन्नगमातङ्गक्रूरचारिषुतोयदे । नागकेसरपुन्नागनागदन्तकमुस्त
के ॥ ८ ॥ देहानिलप्रभेदेचश्रेष्ठेस्यादुत्तरस्थितः । पिङ्गागोरोचनाहि
ङ्गुनालिकाचण्डिकासुच ॥ ९ ॥ पिङ्गोश्यम्यांपिशङ्गेनाबालकेतुनपुंसकं ।
पूगस्तुक्रमुकेबृन्देफलवसारेऽभिधेयवत् ॥ १० ॥ नदीभेदेमलप्वांस्त्रीभङ्गो
जयविपर्य्यये । भेदरोगतरङ्गेषुभङ्गाशस्यान्तरेस्त्रियां ॥ ११ ॥ भगंश्री
योनिवीर्य्येच्छाज्ञानवैराग्यकीर्त्तिषु । माहात्म्यैश्वर्य्ययत्नेषुधर्ममोक्षेचना
रवौ ॥ १२ ॥ भागोरूपार्द्धकेभाग्यैकदेशयोर्भृगुः पुमान् । मुनौहरेनटे
स्युक्तेभृङ्गोधूम्याटपिङ्गयोः ॥ १३ ॥ मधुव्रतेभृङ्गराजेपुंसिभृङ्गेगुडत्वचि
। भोगः सुखेधनेचाहेः शरीरफणयोरपि ॥ १४ ॥ पालनेव्यवहारेच
योषिदादिभृतावपि । मार्गोमृगमदेमासप्रभेदेऽन्वेषणाध्वनोः ॥ १५ ॥
मृगः पशौकुरङ्गेचकरिनक्षत्रभेदयोः । अन्वेषणेचयाञ्चायांमृगीतुवनि
तान्तरे ॥ १६ ॥ युगोरथहलाद्यङ्गेनद्वयोस्तुकृतादिषु । युग्मेहस्तचतु
ष्केपिवृद्धिनामौषधेपिच ॥ १७ ॥ योगोऽपूर्वार्थसम्प्राप्तौसङ्गतिध्या
नयुक्तिषु । वपुः स्थैर्य्यप्रयोगेचविष्कम्भादिषुभेषजे ॥ १८ ॥ विस्रब्ध
घातकेद्रव्योपायसन्नहनेष्वपि । कार्म्मणेपिचरङ्गोनारागेन्तत्थेरणक्षि
तौ ॥ १९ ॥ अस्त्रीनपुंसिरागस्तुमात्सर्य्येलोहितादिषु । क्लेशादाव

 नुरागे च गान्धारादौ नृपेऽपि च ॥ २० ॥ रोगः कुष्ठौषधे व्याधौ लङ्गस्तु सङ्गषि
 ङ्गयोः । लिंगं चिह्नेऽनुमाने च साङ्ख्योक्तप्रकृतावपि ॥ २१ ॥ शिवमूर्त्ति
विशेषेऽपि मेहनेऽपि नपुंसकं । व्यङ्गो भेके च हीनाङ्गे रङ्गं सीसकरङ्गयोः
॥ २२ ॥ वार्त्ताकेऽपि च कार्पासे पुंभूम्नि नीवृदन्तरे । वल्गुः स्याच्छगले पुंसि
सुन्दरे चाभिधेयवत् ॥ २३ ॥ वेगो जवे प्रवाहे च महाकालफलेऽपि च ।
शार्ङ्गः कार्मुकमात्रेऽपि विष्णोरपि शरासने ॥ २४ ॥ शुङ्गो वटाम्रातकयोः
पर्कट्यामपि चास्त्रियां । शृङ्गं प्रभुत्वे शिखरे चिह्ने क्रीडाम्बुयन्त्रके ॥ २५ ॥
विषाणोत्कर्षयोश्चाथ शृङ्गः स्यात्कूर्चशीर्षके । स्त्री विषायां स्वर्णमीनभेद
योर्ऋषभौषधे ॥ २६ ॥ सर्गस्तु निश्चयाध्यायमोहोत्साहात्मसृष्टिषु ।
॥ गत्रि ॥ अयोगो विधुरे कूटे विश्लेषे कठिनोद्यमे ॥ २७ ॥ अनङ्गो म
दनेऽनङ्गमाकाशमनसोरपि । अपाङ्गस्त्वङ्गहीने स्यान्नेत्रान्ते तिलकेऽपि
च ॥ २८ ॥ आभोगो वरुणच्छत्रे पूर्णतायत्नयोरपि । आयोगो व्यापृतौ ग
न्धमाल्योपहारबोधयोः ॥ २९ ॥ आशुगो मारुते वाणेप्युद्वेगं क्रमुकी
फले । उद्वेगोप्युद्भ्राकुलकोद्वेजनोद्गमनेषु च ॥ ३० ॥ उत्सर्गः पुंसि
सामान्येन्याये च त्यागदानयोः । कलिङ्गः पूतिकरजे धूम्याटे भूम्नि नीवृ
ति ॥ ३१ ॥ नद्योः कौटजफले महिलायां तु योषिति । कालिङ्गो भूमि
कर्कारौ दन्तावलभुजङ्गयोः ॥ ३२ ॥ कालिङ्गी राजकर्कट्यां चक्राङ्गो मा
नसौकसि । चक्राङ्गी कटुरोहिण्यां जिह्मगोऽहौ च मन्दगे ॥ ३३ ॥ त

डागोऽस्त्रीजलाधारविशेषेपियन्त्रकूटके। नागरुःक्षुद्रताते नाजनकस्य हि मेदि०
मेत्रिषु ॥ ३४ ॥ त्रिवर्गोधर्मकामार्थैःत्रिफलायांकटुत्रिके। वृद्धिस्था गान्त०
नक्षयेसत्त्वरजस्तमसिचेष्यते ॥ ३५॥ तुरगीचाश्वगन्धायांतुरगश्चित्त
वाजिनोः। धारङ्गोऽस्त्रीचतीर्थेचनरङ्गस्तुवराण्डके ॥ ३६॥ मेहनेनद्वयो
श्चाथनारङ्गःपिप्पलीरसे। यमजप्राणिनिविटेनागरङ्गद्रुमेपिच ॥ ३७॥
निषङ्गःसङ्गतेतूणेनिसर्गोरूपसर्गयोः । नीलाङ्गुःस्यात्क्रमौपुंसिभ
भ्रमरल्यान्तुयोषिति ॥ ३८ ॥ पत्राङ्गंनद्वयोर्भूर्जेपद्मकेरक्तचन्दने
। पन्नगस्त्रौषधीभेदेतथैवपवनाशने ॥ ३९ ॥ प्लवगोवानरेभेकेसार
थौचोष्णदीधितेः। परागःसुमनोरेणौधूलिस्नानीययोरपि ॥ ४० ॥ गि
रिप्रभेदेविख्यातावुपरागेचचन्दने। प्रयागस्तीर्थभेदेस्याद्यज्ञेशक्रमख
श्वयोः ॥ ४१ ॥ प्रयोगःकार्मणेपिस्यात्प्रयुक्तौचनिदर्शने। पतङ्गःस
लभेशालिप्रभेदेपक्षिसूर्ययोः ॥ ४२॥ क्लीवंसुतेप्रियङ्गुःस्त्रीराजिका
कणयोरपि। फलिन्यांकङ्गसस्येचपुन्नागस्तुसितोत्पले ॥ ४३॥ जाती
फलेनरश्रेष्ठेपाण्डुनागेद्रुमान्तरे । वराङ्गंयोनिमातङ्गमस्तकेषुगुडत्व
चि ॥ ४४ ॥ भुजङ्गोऽहौचषिङ्गेचमातङ्गःश्वपचेगजे । मृदङ्गःपट
हेघोषेरथाङ्गस्तुमहीसुते ॥ ४५॥ कम्पिल्लेस्त्रीतुजीवन्त्यांक्लीवंविद्रु
मधीरयोः । रथाङ्गंनद्वयोश्चक्रेनाचक्राङ्गविहङ्गमे ॥ ४६॥ वाति
गःपुंसिभण्टाक्यांधातुवादिनिपान्यवत्। विडङ्गःत्रिष्वभिज्ञेस्यात्कृमि

मेदि॰ घ्रेपुन्नपुंसकं ॥ ४७ ॥ विसर्गस्तुपुमान्दानेत्यागेचमलनिर्गमे । विस
गान्त॰ र्जनीयेप्ययनभेदेपिचविभावसोः ॥ ४८ ॥ विडङ्गस्त्रिलिङ्गःस्ना
दाम्रुगेचविहङ्गमे । सर्व्वगंसलिलेक्लीवंसर्व्वगःशङ्करेविभौ ॥ ४९ ॥
सम्भोगस्तुपुमान्भोगेसुरतेजिनशासने । सारङ्गःपुंसिहरिणेचातके
षमतङ्गजे ॥ ५० ॥ शरलेत्रिषुहेमाङ्गःगरुडेपरमेष्ठिनि । ॥ गचतुः ॥
स्यादपवर्गस्त्यागेमोक्षेकार्य्यावसानसाफल्ये ॥ ५१ ॥ अभिषङ्गानपुं
लिङ्गःपराभवाक्रोशशपथेषु । ईहामृगस्तुपुंसिस्यात्कोकरूपकभेदयोः
॥ ५२ ॥ उपरागस्तुपुंसिस्याद्राहुग्रस्तार्कचन्द्रयोः । दुर्नयेग्रहकल्लो
लेव्यसनेपिनिगद्यते ॥ ५३ ॥ उपसर्गःपुमान्रोगभेदोपप्लवयोरपि
। कटभङ्गस्तुशस्यानांहस्तच्छेदेन्टपात्यये ॥ ५४ ॥ दन्तभङ्गोपिवैध
व्येस्त्वातव्यन्टपनाशयोः । दीर्घाध्वगःपुमानुष्ट्रेलेखहारेतुभेद्यवत् ॥ ५५ ॥
मल्लनागोभ्रमातङ्गेवात्स्यायनमुनावपि । समायोगस्तुसंयोगेसमवा
येप्रयोजने ॥ ५६ ॥ सम्प्रयोगोरतेपिस्याद्न्वितौकार्मणेपिच । गप
ञ्च ॥ कथाप्रसङ्गोवातूलेविषवैद्येचवाच्यवत् ॥ ५७ ॥ नाडीतरङ्गः
काकोलेहिण्डकेरतहिण्डके ।

**************************

॥ इतिगान्तवर्गः ॥

घान्त॰ ॥ घैकं ॥ घोघण्टायांघर्घरेनास्त्रियान्तुकाङ्क्षिघातयोः । घद्वि ॥ अघः

ग्भुव्यसनेदुःखेदुरितेचनपुंसकं ॥ १॥ अर्घःपूजाविधौमूल्येप्यह्नः मेदि॰
स्याद्देवजानिले। अगौघस्तपुटेशस्तेऽप्योघोवेगेजलस्यच ॥ २॥ वृ घान्त॰
न्दे परम्पराया श्च द्रुतनृत्योपदेशयोः। मघामघीचनक्षत्रेधान्यभेदे
यथाक्रमं ॥ ३ ॥ मघोद्वीपान्तरेमेघोमुस्ताजलदयोःपुमान्। मोघा
स्त्रीपाटलायांस्याद्धीननिष्फलयोस्त्रिषु ॥ ४॥ लघुरगुरौचमनोज्ञेनिः
सारेवाच्यवत्क्लीवं। शीघ्रेचकृष्णागुरुस्पृक्कानाम्नोषधौतुस्त्री ॥ ५॥
श्लाघास्त्रियांप्रशंसायांपरिचर्य्याभिलाषयोः।॥ घत्रि ॥ अनघोनिर्म
लापापमनोज्ञेष्वभिधेयवत् ॥ ६॥ अमोघंसफलेवाच्यवत्स्त्रीपथ्याविड
ङ्गयोः। उल्लाघोपिपटुश्चैवाकृष्णोदक्षनीरोगयोस्त्रिषु ॥ ७॥ काचिघःका
श्चनेपिस्याच्छेमराडिमूषिकेपिच। निदाघोग्रीष्मकालेस्यादुष्णस्वेदाम्बु
नोरपि ॥ ८ ॥ पलिघःकाचकलसेघटेप्राकारगोपुरे। परिघोयोगभे
देऽस्त्रविशेषेऽर्गलघातयोः ॥ ९ ॥ प्रतिघःप्रतिघातेस्यात्क्रोधेऽपिप
रिकीर्त्तितः। महार्घस्तुमहामूल्येत्रिषुस्यान्नारकेपुमान् ॥ १०॥ सैर्वोघो
गुरुभेदेचसर्वसन्नहनेपुमान्।

॥ इतिघान्तवर्गः ॥



॥ ङैकं ॥ ङःपुमान्विषयेख्यातःस्पृहायांविषयस्य च। ङान्त॰

॥ इतिङान्तवर्गः ॥

भेदि॰ ************************

चान्त॰ ॥ चैकं ॥ चश्चण्डे शेपुमानुक्तः कच्छपे चन्द्रचौरयोः । ॥ चद्वि ॥ अ
र्च्चापूजाप्रतिमयोः कचः केशे गुरोः सुते ॥ १ ॥ बन्धे मुष्कव्रणे पुंसि क
रिण्यां तु कचा स्त्रियां । काचः शिक्ये मणौ नेत्ररोगभेदे मृदन्तरे ॥ २ ॥ का
ञ्ची स्यान्मेखलादाम्नि प्रभेदे नगरस्य च । कूर्च्चमस्त्री भ्रुवोर्मध्ये कठिनश्म
श्रुकैतवे ॥ ३ ॥ क्रौञ्चो द्वीपविशेषे स्यात् पक्षिपर्वतभेदयोः । चर्च्चा चि
न्तास्थासकयोश्चर्चिकायां तु योषिति ॥ ४ ॥ चञ्चा तु नलनिर्माणे तृणनि
र्मितपूरुषे । चञ्चूर्लोट्यां स्त्रियां पुंसि गोनाडीके व्यडम्बके ॥ ५ ॥ त्वक्
स्त्री चर्म्मणि वल्के च गुडत्वचि विशेषतः । न्यङ्गी च निम्नयोर्नीचः पामरे वा
मनेपि च ॥ ६ ॥ प्राञ्च हृष्टादिशि देशे च काले च वाच्यलिङ्गकः । पिचुर्नी
कुष्ठभेदे च कर्षे तूलेऽसुरान्तरे ॥ ७ ॥ मोचः शोभाञ्जने पुंसि मोचा शाल्म
लिरम्भयोः । रुचिः स्त्री दीप्तौ शोभायामभिष्वङ्गाभिलाषयोः ॥ ८ ॥
रुक् स्त्री शोभाद्युतीच्छासु वचः कीरे वचौषधौ । शारिकायां च वाग्वा चे भा
रत्यां वचने स्त्रियौ ॥ ९ ॥ वीचिः स्वल्पतरङ्गे स्याद् वकाशे मुखे दयोः ।
शचीन्द्राण्यां शतावर्य्यां तथा स्त्री करणान्तरे ॥ १० ॥ शुचिर्ग्रीष्माग्निशृ
ङ्गारेष्वाषाढे शुद्धमन्त्रिणि । ज्येष्ठे च पुंसि धवले शुद्धेऽनुपहते त्रिषु
॥ ११ ॥ सूची तु सीवनद्रव्ये प्याङ्गिकाभिनयान्तरे । ॥ षचि ॥ उद
ग्दिग्देशकालेषु वाच्यवच्चितयेऽव्ययं ॥ १२ ॥ कणीची पुष्पितलतागु

ञ्जयोःसकटेस्त्रियां । कवचोगर्दभाण्डेचसन्नाहेपटहेपिच ॥ १३ ॥ मेदि॰
क्रकचःकरपत्रेऽस्त्रीग्रन्थिलाख्यतरौपुमान् । नमुचिस्तुपुमान्दैत्यभेदेकु चान्त॰
सुमकार्मुके ॥ १४ ॥ नाराच्येषणिकायांनालोहवाणाम्बुहस्तिनोः । प्रप
ञ्चःसञ्चयेपिस्याद्विस्तारेचप्रतारणे ॥ १५ ॥ प्रत्यग्दिग्देशकालेषुवा
च्यवञ्चितयेऽव्ययं । मरीचिर्मुनिभेदेनागभस्तावनपुंसकं ॥ १६ ॥ मा
रीचोराक्षसेभेदेकक्कोलेयाजकद्विजे । मारीचीदेवताभेदेविपञ्चीकेलिवी
णयोः ॥ १७ ॥ विकचःक्षपणकेनाऽकेशेस्फुटितेऽन्यवत् । विरि
ञ्चिर्नाविरिञ्चश्चवैकुण्ठेपरमेष्ठिनि ॥ १८ ॥ सङ्कोचोमीनभेदेस्याद्बन्धे
क्लीवन्तुकुङ्कुमे । सम्यक्स्याद्वाच्यलिङ्गन्तुमनोज्ञेसङ्गतेपिच ॥ १९ ॥
॥ चचतुः ॥ जलसूचिःकङ्कत्रोटिमत्स्यशृङ्गाटयोरपि । शिशुमारे
चपुंलिङ्गोजलौकायान्तुयोषिति ॥ २० ॥ मलिम्लुचोमासभेदेचौरज्वल
नयोःपुमान् । ॥ चपञ्च ॥ रतनारीचोनारीणांशीत्कारेचमुनिस्मरे ॥ २१ ॥

॥ इतिचान्तवर्गः ॥

************************

॥ छैकं ॥ छाछादनेस्त्रियांख्यातानिर्मलेऽन्यवदिष्यते । ॥ छद्वि ॥ अच्छः छान्त॰
स्फटिकभल्लूकनिर्मलेष्वच्छमव्ययम् ॥ १ ॥ आभिमुख्येऽथकच्छःस्याद
नूपेतुन्नकद्रुमे । नौकाङ्गेपुंसिवाराह्यांचीरिकायाञ्चयोषिति ॥ २ ॥ स्या
द्गुच्छःस्तवकेसम्बेहारभेदकलापयोः । पिच्छापूगच्छटाकोषमोचास्रा

मेदि० स्मालिविष्टके ॥ ३ ॥ भक्तसंभूतमण्डेचपङ्क्तावम्बुपद्यामये । स्त्रियांपुंसि
छान्त० तुलाङ्गूलेनद्वयोर्वर्हचूडयोः ॥ ४ ॥ पुच्छःपश्चात्प्रदेशेस्याल्लाङ्गूलेपुच्छ
मिष्यते । म्लेच्छःपामरभेदेचपापरक्तेऽपभाषणे ॥ ५ ॥ ॥ छन्तुः ॥ म
हाकच्छस्तुपुंसिस्यात्समुद्रेचप्रचेतसि ।

॥ इतिछान्तवर्गः ॥



जान्त० ॥ जैकं ॥ जोनामृत्युञ्जयेजन्यांतातमाचेजनार्द्दने । जूस्त्वरगमनेप्रा
कासामान्यगमनेस्त्रियां ॥ १ ॥ जूर्णाकाशसरस्वत्यांपिशाच्यांजवनेस्त्रि
यां । ॥ जद्वि ॥ अजश्छागेहरिब्रह्मविधुस्मरन्टपेहरे ॥ २ ॥ अब्जो
ऽस्त्रीशङ्खेनानिचुलेधन्वन्तरौचहिमकिरणे । क्लीबंपद्मेऽथाजिःस्त्रीस
मभूमौचसंग्रामे ॥ ३ ॥ ऊर्जस्तुकार्त्तिकोत्साहबलेषुप्राणनेपिच । कञ्जः
केशेविरिञ्चेचकञ्जंपीयूषपद्मयोः ॥ ४ ॥ कुजाकात्यायनीदेव्यांकुजोन
रकभौमयोः । कुब्जोवृक्षप्रभेदेनान्युब्जेस्याद्वाच्यलिङ्गकः ॥ ५ ॥ कु
ञ्जोऽस्त्रियांनिकुञ्जेपिहनौदन्तेपिहस्तिनां । खञ्जाछन्दःप्रभेदेस्त्रीकुटि
लाङ्घ्रौतुवाच्यवत् ॥ ६ ॥ खजामन्थेप्रहस्तेऽथखर्ज्जुःकीटान्तरेस्मृ
ता । खर्ज्जूरीपादपेकण्ड्वांगजोमानेमतङ्गजे ॥ ७ ॥ वास्तुनःस्यान
भेदेपिगञ्जाखनौसुरागृहे । गञ्जःस्यान्नपुंसिरीठायांभाण्डागारेतुनस्त्रि
यां ॥ ८ ॥ गुञ्जातुकाकचिञ्चायांपटहेचकलध्वनौ । द्विजःस्याद्ब्रा

ह्मणाक्ष चवैश्यदन्ताण्डजेषुना ॥ ९ ॥ द्विजाभार्ग्यां हरेणौ च ध्वजः मेदि॰
स्याच्छौण्डिकेपुमान्। नस्त्रियान्तुपताकायांखट्वाङ्गेमेढ्रचिह्नयोः ॥ १० ॥ जान्त॰
निजंस्वीयेचनित्येचन्युब्जोदर्भमयस्रुचि। कर्मरङ्गफलेक्लीबंकुब्जाधोमुख
योस्त्रिषु ॥ ११ ॥ प्रजालोकेचसन्तानेपिञ्जातूलहरिद्रयोः। बलेक्ली
बंबधेपुंसिव्याकुलेत्रिष्वथोभुजा ॥ १२ ॥ द्वयोर्बाहौकरेमञ्जूःस्त्रीमुद्गा
धावकेपिच। रजोरेणौपरागेस्यादार्त्तवेचगुणान्तरे ॥ १३ ॥ रज्जुर्वे
ण्यांगुणेयोषिद्राजिःस्त्रीपङ्क्तिलेखयोः। रुजारोगेचभङ्गेऽथलाजःस्या
दार्द्रतण्डुले ॥ १४ ॥ नपुंसकमुशीरेऽथस्त्रियांपुंभूम्निचाक्षते। व्रजोगोष्ठा
ध्ववृन्देषुवाजोनिस्वनपक्षयोः ॥ १५ ॥ वेगेपुमानथक्लीबेघृतयज्ञान्न
वारिषु। व्याजःशाठ्येऽपदेशेऽथबीजमङ्कुरकारणे ॥ १६ ॥ हेतुत
न्त्वाधानशुक्रेसर्जूर्वणिजिविद्युति। स्त्रियांस्वञ्जोविधौरूढेस्वजःप्रस्वे
दपुत्रयोः ॥ १७ ॥ क्लीबंरक्तेऽथसञ्जःस्यात्सन्नद्धेसभृतेत्रिषु।
॥ जत्रि ॥ अण्डजामृगनाभीस्यात्सरटेऽहौखगेझषे ॥ १८ ॥ अङ्ग
जंरुधिरेऽनङ्गकेशपुत्रमदेषुना। अम्बुजोनिचुलेपुंसिकमलेतुनपुंसकं
॥ १९ ॥ अब्जकस्याद्योगभेदेनारकेपिस्यान्नपुंसकं। कम्बोजोहस्तिभेदे
पिशङ्खेदेशविशेषयोः ॥ २० ॥ करजंस्याद्व्याघ्रनखेकरञ्जनखयोः
पुमान्। कारुजःशिल्पिनांचित्रेवामलूरेगजार्भके ॥ २१ ॥ काम्बोजोऽ
श्वान्तरेशामवल्केपुन्नागपादपे। काम्बोजीमाषपर्ण्यांस्त्रीबलक्षखदि

रेस्त्रियां ॥ २२ ॥ कुटजो वृक्षभेदे स्यादगस्त्यद्रोणयोरपि । गिरिजं त्व
भ्रकेपि स्याच्छिलाजतुनि शैलजे ॥ २३ ॥ लोहेपि गिरिजा गौरीमा
तुलुङ्ग्योश्च योषिति । जलजं कमले शङ्खे नीरजं कुष्ठपद्मयोः ॥ २४ ॥
पररञ्जस्तैलयन्त्रे स्याच्छुरिकाफलफेनयोः । बलजं गोपुरक्षेत्रे शस्यसङ्ग
रयोरपि ॥ २५ ॥ बलजा वरयोषायां पृथ्व्यामथ वणिक् स्त्रियां । वणि
ज्यायां पुमान् वाणिजके च करणान्तरे ॥ २६ ॥ बाक्रजः स्रुचियेकीरे
स्वयंजाततिलेपि च । भूमिजो नरकेऽङ्गारे सीतादेव्यान्तु भूमिजा ॥ २७ ॥
वनजा मुद्गपर्ण्यां ना मुस्तके क्लीबमम्बुजे । सहजस्तु निसर्गे ना सहो
दरेपुनरन्यवत् ॥ २८ ॥ समजः पशुवृन्दे ना विपिने तु नपुंसकं । सा
मजस्तु गजे पुंसि सामोत्थेपुनरन्यवत् ॥ २९ ॥ हिमजा तु शचीगौर्योः
पुंसि मैनाकपर्वते । ॥ जचतुः ॥ अहिभुग्बर्हिणे तार्क्ष्ये पुंसि काश्मीरजं
पुनः ॥ ३० ॥ कुष्ठकुङ्कुमयोः क्लीबेऽतिविषायान्तु योषिति । क्षीराब्धिज
स्तु सामुद्रलवणे मौक्तिकेपि च ॥ ३१ ॥ पुमांस्तुषारकिरणे कमलायान्तु
योषिति । ग्रहराजो रवौ चन्द्रे जघन्यजः कनीयसि ॥ ३२ ॥ वृषले
द्विजराजस्तु चन्द्रेऽनन्तगरुत्मति । धर्मराजो यमे बुद्धे युधिष्ठिरनृपे पु
मान् ॥ ३३ ॥ भरद्वाजो गुरोः पुत्रे व्याघ्राटाख्यविहङ्गमे । भारद्वाजी व
नकार्पास्यां ना द्रोणाक्षर्षिभेदयोः ॥ ३४ ॥ अथ भृङ्गराजस्तु नः पक्षि
विशेषे च मार्कवे भ्रमरे । यक्षराट् पुंसि धनदे मल्लानां रङ्गचत्वरे ॥ ३५ ॥

राजराजः कुवेरेपिसार्व्वभौमेस्सुधाकरे। ॥ जपञ्च॥ ऋषभध्वजए मेदि॰
षेपिपिशङ्करेचार्ह्दत्नरे ॥ ३६॥ मुनिभेषजमागस्त्यहरीतक्याञ्च जाग्न॰
लङ्घने।

॥ इतिजान्तवर्गः॥

———*************———

॥ जैकं ॥ भोजराणीशेस्सुरगुरौदैत्यराजेध्वमावपि। ॥ भ्रुद्विः॥ गञ्भ्य ग्रान्त॰
बातिनारवायौनष्टेपिकीर्त्तितेबुधैः ॥ १॥ गञ्भ्राध्वनिविशेषेचस्याद्मु
कग्गवर्षणे।

॥ इतिगान्तवर्गः॥

———*************———

॥ जैकं ॥ ज्ञःपुमान्स्याद्वलीवर्देंसुज्ञेवाममतावपि। ज्ञोब्रह्मबुधवि ज्ञान्त॰
द्वत्सुस्याद्ज्ञोजउमुर्खयोः ॥ १॥ प्रज्ञस्तुपण्डितेवाच्यलिङ्गोबुद्धोषयो
षिति। राज्ञीराजप्रियायाञ्चभार्य्यायांभास्करस्यच ॥ २॥ संज्ञानाम
निगायत्र्यांचेतनारवियोषितोः। अर्थस्यसूचनायाञ्चहस्ताद्यैरपियो
षिति ॥ ३॥ ॥ त्रचि॥ कृतज्ञःकुक्कुरेपुंसिमर्य्यादिन्यभिधेयवत्। क्षेच
ज्ञआत्मनिच्छेकेदैवज्ञोगणकेपुमान् ॥ ४॥ दैवज्ञेस्त्रिणिकायांस्त्रीसर्वं
ज्ञःशिवबुद्धयोः।

इतिज्ञान्तवर्गः



मेदि० ॥ टैकं ॥ टःपुमान्वामनेपादेनिस्वनेपिक्वचिन्मतः । ॥ टद्वि ॥ अट्टं
टान्त० भक्तेचमुच्चेनाक्षौमेऽत्यर्थेगृहान्तरे ॥ १ ॥ इष्टमाशंसितेपिस्यात्पूजि
तेप्रेयसित्रिषु । सप्ततन्तौपुमान्क्लीबेसंस्कारेक्रतुकर्मणि ॥ २ ॥ इष्टि
र्मताभिलाषेपिसंग्रहश्लोकयागयोः । कटःश्रोणौद्वयोःपुंसिकिलिञ्जेऽ
तिशयेशरे ॥ ३ ॥ समयेगजगण्डेचपिप्पल्यान्तुकटीमता । कटुः
स्त्रीकटुरोहिण्यांलताराजिकयोरपि ॥ ४ ॥ नपुंसकमकार्येस्यात्पुंलि
ङ्गेरसमात्रके । त्रिषुतद्वत्सुगंध्योश्चमत्सरेपिखरेपिच ॥ ५ ॥ कष्टन्तु
गहनेकृच्छ्रेकुष्टंरोदनरावयोः । कुटःकोटेपुमानस्त्रीघटेस्त्रीपुंसयोर्गृ
हे ॥ ६ ॥ कुटीस्यात्कुम्भदास्याञ्चमुरायांचित्रगुच्छके । कूटोऽस्त्रीनि
श्चलेराशौलोहमुद्गरदम्भयोः ॥ ७ ॥ मायाद्रिशृङ्गयोस्तुच्छेसीरावयवय
न्त्रयोः । अन्ततेचाथकृष्टिःस्यादाकर्षेस्त्रीबुधेपुमान् ॥ ८ ॥ कोटिःस्त्री
धनुषोऽग्रेऽश्रासंख्याभेदप्रकर्षयोः । खटोऽन्धकूपकफयोःप्रहारान्त
रटङ्कयोः ॥ ९ ॥ खाटिस्त्वसङ्ग्रहेपिस्यात्किणेशववरथेस्त्रियां । खे
टःकफेग्रामभेदेचर्म्मण्यस्त्र्यधमेत्रिषु ॥ १० ॥ अथगृष्टिःसकृत्सूत
गवीबदरयोःस्त्रियां । घटःसमाधिभेदेभशिरःकूटकुटेषुच ॥ ११ ॥
घटाघटनगोष्ठीभघटनासुचयोषिति । घृष्टिःस्त्रीघर्षणस्पर्द्धावि
ष्णुक्रान्तासुनाकिरौ ॥ १२ ॥ घोण्टान्तुबदरीपूगवृक्षयोरपियोषिति ।

षट्टुश्चाठैापिचिराडेचवृतिनामासनेपुमान् ॥ १३ ॥ जटालग्नकचेमूले मेदि०
मांस्यांप्लक्षेपुनर्जटी । जुट्टनुक्ली वमुश्चिद्धटेसेवितेवाच्यलिङ्गकं ॥ १४ ॥ टान्त०
जाटेनिकुञ्जेकान्तारेत्रुणादीनाञ्चमार्ज्जने । तठंनपुंसकंक्लेवेप्रतीरेतुतठी
त्रिषु ॥ १५ ॥ त्वष्टापुमान्देवशिल्पितक्ष्णोरादित्यभिद्यपि । त्रुटिःस्त्री
संशयेस्वल्पेसूक्ष्मैलाकालमानयोः ॥ १६ ॥ चोटिःस्त्रीकट्फलेचञ्चां
खगेमीनान्तरेपिच । दिष्टंदैवेपुमान्कालेदिष्टिर्मुत्परिमाणयोः ॥ १७ ॥
स्त्रियांदृष्टिःस्त्रियांबुद्धौलोचनेदर्शनेपिच । धटोदिव्यतुलायांस्याद्ध
टीचीरेचवाससः ॥ १८ ॥ नटीनल्यांषधौस्त्रीस्याच्छैलूषाशोकयोःपु
मान् । पटश्चिचपटेवस्त्रेऽस्त्रीप्रियालद्रुमेपुमान् ॥ १९ ॥ पटुर्हृद्ये
षनीरोगेचतुरेप्यभिधेयवत् । पटोलेतुपुमान्क्लीवेक्षचालवणयोरपि
॥ २० ॥ पट्टःपेषणपाषाणेत्रुणादीनाञ्चबन्धने । चतुष्पथेचराजादिशा
सनान्तरपीठयोः ॥ २१ ॥ पटिःस्त्रीपटभेदेस्याद्धागुलीकुम्भिकाद्रुमे
। पुष्टिःस्त्रीपोषणेवृद्धौफटातुफणदन्तयोः ॥ २२ ॥ वटीत्रिषुरुणेपुं
सिस्यान्न्यग्रोधकपर्दयोः । भठःस्यात्पुंसिवीरेचविशेषेपामरस्यच
॥ २३ ॥ भृष्टिःस्याद्भर्जनेशून्यवाटिकायाञ्चयोषिति । श्लिष्टंचिप्यव्य
क्तवाचिम्लानेमुष्टिर्द्वयोःफले ॥ २४ ॥ बद्धपाणौत्सरौयष्टिःपुंसिस्याद्भुज
दण्डके । द्वयोर्हारलताभार्गीर्मधुकाशस्त्रभेदयोः ॥ २५ ॥ रिष्टंक्षेमा
शुभाभावेपुंसिखड्गेचफेनिले । रिष्टिःखड्गेनाशुभेस्त्रीलाटोदेशान्तरेऽ

श्रुके ॥ २६ ॥ वाटोमार्गेवृतिस्थानेस्यात् कुटीवास्तुनोःस्त्रियां । विटोद्रो
लवणेषिङ्गेमूषिकेखदिरेपिच ॥ २७ ॥ विष्टिस्त्रिषुकर्मकरेस्याज्जू
वेतनकर्मसु । व्युष्टिःफलेसमृद्धौस्त्रीव्युष्टंकल्येचपूषिते ॥ २८ ॥
सटा जटाकेसरयोःस्फुटोव्यक्तप्रफुल्लयोः । व्याप्तेचत्रिषुस्फुटिर्स्त्रीषित्
पादस्फोटामयेपिच ॥ २९ ॥ निर्भिन्नकर्कटीशस्येऽपिस्यात्सृष्टन्तुनि
र्मिते । युक्तनिश्चितयोःप्राज्येत्रिषुसृष्टिस्तुनिर्मितौ ॥ ३० ॥ स्वभावेचा
पिकथिताहृष्टोरोमाञ्चितेपिच । जातहर्षेप्रहसितेविस्मितेप्यभिधेयव
त् ॥ ३१ ॥ ॥ टत्रि ॥ अवटःस्यात्खिलेगर्त्तेकूपेकुहकजीविनि । अ
रिष्टोलशुनेनिम्बेफेनिलेकाककङ्कयोः ॥ ३२ ॥ अरिष्टमशुभेतक्रे
सूतिकागारआसवे । शुभेमरणचिह्नेचादिष्टमादेशितेत्रिषु ॥ ३३ ॥
आज्ञप्तेप्रोच्छिष्टयोःक्लीबमुत्कटस्तीव्रमत्तयोः । उद्भटःकच्छपेशूर्पे
कर्कटोविहगान्तरे ॥ ३४ ॥ राशिभेदेकुलीरेचवालुक्यांशाल्मलीफले ।
कर्ईटःकरहाटेस्यात्पङ्कपङ्कारयोरपि ॥ ३५ ॥ करटोगजगण्डेस्यात्
कुसुम्भेनिंद्यजीवने । एकादशाहादिश्राद्धेदुर्दुरूटेपिवायसे ॥ ३६ ॥
करटोवाद्यभेदेऽथकार्पटोजन्तुकार्थिनोः । कीकटःकृपणोनिःस्वेत्रिषु
पुंभूम्निनीवृति ॥ ३७ ॥ कुरण्टोदारुपुत्र्यांनागिरटीस्नानप्रभेदयोः
। कुक्कुटस्यन्ततपर्यायांपुंसिस्याच्चरणायुधे ॥ ३८ ॥ निषादशूद्रयोः
पुत्रेतृणोल्कायाञ्चकुक्कुभे । कुनटीमनःशिलायांनैपाल्यामपियोषिति

॥ ३९ ॥ कपीटमुदरेनोयेकेशटोत्त्र्यजैकखे । चर्पटःस्फारविपुलेच मौंट
घेटेपर्पटेपिच ॥ ४० ॥ चक्राटोविषवैद्येपिधूर्तेदीनारयोरपि । चिपि यन्त
टःखाद्यभेदेनाचिपुपिट्टिकविस्रुते ॥ ४१ ॥ चिरिण्टीतुसुवासिन्यांस्या
द्वितीयवयःस्त्रियां । जकुटंवार्त्ताकुपुष्पेजकुटोमलयेश्शुनि ॥ ४२ ॥ त्र्य
ङ्कटंशिक्यभेदेपिधीताङ्गन्याङ्गनद्वयोः । त्रिकूटंसिन्धुलवणेत्रिकूटः
पर्वतान्तरे ॥ ४३ ॥ त्रिपुटामल्लिकायाञ्चसूक्ष्मैलात्रिवृतोःस्त्रियां । स
तीलकेचतीरेचत्रिपुटःसमुदाहृतः ॥ ४४ ॥ द्रोहाटःकथितोगाथाप्रभे
देमृगलुब्धके । वैतालव्रतिकेचाथधाराटश्चातकाश्वयोः ॥ ४५ ॥ निर्हट
स्तुदयाशून्येकथितोनिष्प्रयोजने । परापवादरक्तेचवाच्यलिङ्गोऽयमि
ष्यते ॥ ४६ ॥ निष्कुटस्तुगृहोद्यानेस्यात्केदारकपाटयोः । पर्कटीनूत
नफलेपूगादेःप्लक्षपादपे ॥ ४७ ॥ परीष्टिःपरिचर्य्यायांप्राकाम्येऽ
न्वेषणेस्त्रियां । पर्पटंपिष्टभेदेस्यात्पर्पटोभेषजान्तरे ॥ ४८ ॥ पाचटः
कर्परेपुंसिदेशेस्यादभिधेयवत् । पिच्चटोनेत्ररोगेस्यात्क्लीवंसीसकरङ्ग
योः ॥ ४९ ॥ वरटाद्वयोर्वरट्यांस्त्रीहंस्याञ्चततःपुमान् । बर्बटीप
ण्ययोषायांव्रीहिभेदेचयोषिति ॥ ५० ॥ वेकटःस्याद्वैकटिकेमत्स्यभेदे
चयूनिच । भावाटोभावकेसाधुनिवेशेकामुकेनटे ॥ ५१ ॥ भाकूटःशैल
मत्स्ययोर्भेदेस्यादथमर्कटी । करञ्जभिच्छूकशिम्ब्योःपुंसिवानरलूतयोः
॥ ५२ ॥ मोचाटःकृष्णजीरेचरम्भास्थिमलयोद्भवे । मोरटन्तुभके

मेदि० दिक्षुमूलाङ्कोठप्रसूनयोः ॥ ५३ ॥ सप्तराचात्यरक्षीरेमूर्विकायान्तु
टान्त० मेरटा । वर्णाटोगायनेचित्रकरेस्त्रीकृतजीवने ॥ ५४ ॥ विकटावज्र
वाराह्यांत्रिषुरूपविकरालयोः । ग्राकटंशकटस्येदमित्यर्थेनत्रयेवोढ
रि ॥ ५५ ॥ शैलाटोदेवलेसिंहेश्मुक्लकाचकिरातयोः । संसृष्टंत्रिषुसं
सर्गेसंम्मुद्धेवसनादिना ॥ ५६ ॥ ॥ टचतुः ॥ उच्चिङ्गटस्तुगण
उमत्स्येकोपनपुरुषे । करहाटःशिफास्कन्देपद्मस्यमदनद्रुमे ॥ ५७ ॥
स्यात्कार्य्यपुटःक्षपणोन्मत्तानर्थकरेषुच । कामकूटस्तुवेश्यायाःप्रिय
विभ्रमयोःपुमान् ॥ ५८ ॥ कुटन्नटन्तुकैवर्त्तीमुस्तकेपुंसिशोणके ।
कुणडकीटस्तुचार्वाकवचनाभिज्ञपूरुषे ॥ ५९ ॥ पतितब्राह्मणीपुत्रदा
सीकामुकयोरपि । खङ्गारीटस्तुफलकासिधारव्रतधारिणोः ॥ ६० ॥
गाढमुष्टिःकृपाणोनाकृपणेत्वभिधेयवत् । चक्रवाटःक्रियारोहेपर्य्यन्ते
चशिखान्तरे ॥ ६१ ॥ चतुःषष्टिःकलासंख्याभेदयोर्बहुचित्स्त्रियां । नार
कीटोऽश्मकीटेस्यात्स्वदत्ताशाविहन्तरि ॥ ६२ ॥ परपुष्टःपरभृतेवा
रनार्य्यान्तुयोषिति । प्रतिकृष्टंमतंगुह्येद्विरावृत्त्याचकर्षिते ॥ ६३ ॥ प्र
तिस्पृष्टःप्रेषितेस्यात्प्रत्याख्यातेचवाच्यवत् । वर्करटःकटाक्षेस्यात्तरुणादि
न्यरोचिषि ॥ ६४ ॥ नारीपयोधरेन्यस्तकान्तादन्तनखक्षते । शिपिविष्ट
स्तुखलतौशिवेदुश्चर्मणिस्मृतः ॥ ६५ ॥ अथश्रुतिकटःप्रायश्चित्तेऽहौपाप
धने । ॥ टपञ्च ॥ दशनोच्छिष्टःपुंसिस्यान्निश्वासाधरचुम्बयोः ॥ ६६ ॥

॥ इतिटान्तवर्गः ॥ मेदि०



॥ ठैकं ॥ ठोमण्डलेचन्द्रबिम्बेशून्येचलोकगोचरे । ॥ ठद्वि ॥ कठो ठान्त०
मुनौतदाख्यातवेदाध्येतृज्ञयोःस्वरे ॥ १ ॥ कण्ठोगलेसन्निधानेध्वनौम
दनपादपे । काष्ठादारुहरिद्रायांकालमानप्रकर्षयोः ॥ २ ॥ स्थान
मात्रेदिशिचस्त्रीदारुणिस्यान्नपुंसकं । कुष्ठंरोगेपुष्करेऽस्त्रीकुण्ठोकर्म्म
ण्यमूर्खयोः ॥ ३ ॥ कोष्ठःकुसूलेचात्मीयेमध्येकुक्षौगृहस्यच । गोष्ठं
गोस्थानकेगोष्ठीसभासंलापयोःस्त्रियां ॥ ४ ॥ ज्येष्ठःश्रेष्ठेऽतिवृद्धेचत्रि
षुमासान्तरेपुमान् । ज्येष्ठातुगृहगोधाख्यजन्तुनक्षत्रभेदयोः ॥ ५ ॥
निष्ठानिष्पत्तिनाशान्तयाञ्चानिर्वहणेषुच । प्रष्ठस्त्रिष्वग्रगेश्रेष्ठेपुंसिचा
ण्डालिकौषधौ ॥ ६ ॥ पाठस्तुपठनेख्यातोविद्धपर्ण्यान्तुयोषिति । पृष्ठं
चरममात्रेपिदेहस्यावयवान्तरे ॥ ७ ॥ वण्ठःस्यादकृतोद्वाहेखर्वेकु
न्तायुधेपिच । शठोमध्यस्थपुरुषेधूर्त्तेधूस्तूरयोरपि ॥ ८ ॥ श्रेष्ठो
वरेकुवेरेचशौण्ठोमूर्खेऽलसेपिच । षष्ठीकात्यायनीतिथ्योस्त्रिषुषण्णाञ्च
पूरणे ॥ ९ ॥ हठःस्यात्प्रसभेपृश्न्यांहेठोबाधाविहेठयोः । ॥ ठत्रि ॥
अपष्ठुःपुंसिकालेस्याद्वामेस्यादन्यलिङ्गकः ॥ १० ॥ अम्बष्ठोदेशभेदेपि
विप्राद्वैश्यासुतेपिच । अम्बष्ठाचाम्ललोण्यांस्यात्पाठायूथिकयोरपि
॥ ११ ॥ कमठःकच्छपेपुंसिभाण्डभेदेनपुंसकं । कनिष्ठोऽतियुवात्य

मेदि॰ ठान्त॰ ल्पानुजेस्त्रीदुर्बलाङ्गुलौ ॥ १२ ॥ जरठः कर्कशेपाण्डौ कठिनेऽप्यभिधेयवत् । नर्मठश्चिबुकेशिश्ने प्रतिष्ठागौरवेस्थितौ ॥ १३ ॥ स्थानेचयागनिष्पत्तिचतुरक्षरपद्ययोः । प्रकोष्ठोमणिबन्धस्यकुर्परस्यान्तरेपिच ॥ १४ ॥ भूपकक्ष्यान्तरेपिस्याद्दरिष्टं मरिचेपिच । नाग्नेक्लीवंनितम्बेरोन्नावरोहन्तमयोस्त्रिषु ॥ १५ ॥ मकुष्ठोव्रीहिभेदे नामन्थरे पुनरन्यवत् । लघिष्ठोऽत्यल्पकेभेले वैकुण्ठः इन्द्रशक्रयोः ॥ १६ ॥ श्रीकण्ठोदेशभिद्रुद्रेताधिष्ठोऽतिदृढार्थयोः । ॥ ठचतुः ॥ कलकण्ठः कलध्वानेहंसेपारावतेपिके ॥ १७ ॥ कालकण्ठस्तुदात्यूहेकलविङ्केचखञ्जने । मयूरेपीनशणैसेचस्यात्खण्डपरशौपुमान् ॥ १८ ॥ कालपृष्ठं कर्णचापेपुंसिकङ्कविहङ्गमे । स्याद्दन्तशठोजम्बीरेकपित्थेकर्मरङ्गके ॥ १९ ॥ नागरङ्गेपिचपुमान्स्याच्चाङ्गेर्यान्तुयोषिति । पूतिकाष्ठश्चसरलदेवदारुमस्त्रीरुद्रोः ॥ २० ॥ स्तूनकण्ठःपुमान् विप्रेखञ्जरीटकपोतयोः । हारिकण्ठःपिकेपुंसिहारान्वितगलेत्रिषु ॥ २१ ॥

इतिठान्तवर्गः



डान्त॰ डैकं ॥ डःपुमान्बाडवाग्नौस्याड्डाकिन्यांस्त्रीनिगद्यते । ॥ डद्वि ॥ आडंम्बुपर्णे वपेश्यांस्यादिडातुबुधयोषिति ॥ १ ॥ सौरभेय्याञ्चवचने वसुमत्यामपिस्त्रियां । काण्डः स्तम्बेतरुस्कन्धेबाणेऽवसरनीरयोः ॥ २ ॥ कुत्सि

नेवृक्षभिन्नाडीवृन्दे रहसि न स्त्रियां। क्रीडाकेलिप्रकारे स्यात् खलावज्ञान भेदि०
योरपि ॥ ३ ॥ कुण्डमग्न्यालये मानभेदे देवजलाशये। कुण्डीकम डान्त०
ण्डलौ जारात्पतिवत्नीसुते पुमान् ॥ ४ ॥ पिठरे तु न ना क्ष्वेडो ध्वनौ कर्णा
मये विषे। क्ष्वेडा वंशशलाकायां सिंहनादे च योषिति ॥ ५ ॥ लोहितार्क
पर्णफले घोषपुष्पे नपुंसकं। दुरासदे च कुटिले वाच्यलिङ्गः प्रकीर्त्तितः
॥ ६ ॥ क्रोडः शनौ सूकरे ना नपुमानङ्कवक्षसोः। खण्डोऽस्त्री शकले ने
क्षुविकारमणिदोषयोः ॥ ७ ॥ खडः पानान्तरे भेदे गण्डः स्यात्पुंसि ख
ड्गिनि। ग्रहयोगप्रभेदे च वीर्य्यव्यङ्गे पिटकेऽपि च ॥ ८ ॥ चिह्ने वीरकपोले
च हयभूषणबुद्बुदे। गडुः पृष्ठगुडे कुब्जे गडो मीनान्तरययोः ॥ ९ ॥ गु
डः स्याद्गोलके हस्तिसन्नाहे इक्षुविकारयोः। गुडा स्नुह्यां च कथिता गुडिका
या च योषिति ॥ १० ॥ गोण्डः पामरजातौ च वृद्धनाभौ च तद्वति। चण्डो
ना तिन्तिडीवृक्षे यमकिङ्करदैत्ययोः ॥ ११ ॥ चण्डी कात्यायनीदेव्यां हिं
स्रकोपनयोषितोः। चण्डा धनहरीशङ्खपुष्प्योस्त्वत्यन्तकोपने ॥ १२ ॥
तीव्रेऽपि चूडा वडभौ शिखायां बाहुभूषणे। चोडः प्रावरणे भूम्नि देशभेदे ज
डास्त्रियां ॥ १३ ॥ मूकशीतव्याहिमग्रस्तमूकाप्रज्ञेषु तु त्रिषु। ताडस्तु ता
डने घोषे मुष्टिमेय तृणादिषु ॥ १४ ॥ ताडी पत्रद्रुमे पाथ दण्डोऽस्त्री लगु
डे पुमान्। व्यूहभेदे प्रकाण्डेऽश्वे कोणमन्थानयोरपि ॥ १५ ॥ दैन्ये काले
मानभेदे चण्डांशोः पारिपार्श्विके। दमे यमेऽभिमाने च नाडी नाले व्रणा

मेदि० न्तरे ॥ १६ ॥ श्रियां गण्डदूर्वायां चर्य्यायां कुहनस्य च । तथा षट्ध्न
डान० णाकालेपिनी उंस्थानकुलाययोः ॥ १७ ॥ पण्डः षण्डे धियि स्त्रीस्यात्पा
ण्डुर्नान्यपतौ सिते । पिण्डे बोले बले सान्द्रे देहागारैकदेशयोः ॥ १८ ॥
देहमात्रे निवापे च गोलसिह्लकयोरपि । ओद्रपुष्पे च पुंसिस्यात् क्लीवमा
जीवनायसोः ॥ १९ ॥ पिण्डी तु पिण्डीतगरेऽलाबुखर्ज्जूरभेदयोः । पी
डा कृपा शिरोमालाऽपमर्द्दसरलद्रुषु ॥ २० ॥ भाण्डं पात्रे वणिङ्मूलधने
भूषाश्वभूषयोः । मण्डः पञ्चाङ्गुले शाकभेदे क्लीव न्तु मस्तुनि ॥ २१ ॥
आमलक्यां स्त्रियां मण्डाऽथाऽस्त्रियां सारपिच्छयोः । मुण्डो दैत्यान्तरे रा
हुग्रहे नामुण्डिते त्रिषु ॥ २२ ॥ मुण्डामुण्डीरिकायां स्यात्क्लिया मस्त्री तु मू
र्द्धनि । रण्डा मूषिकपर्ण्यां च विधवायां च योषिति ॥ २३ ॥ रोडः क्षोदे
भवेत्पुंसि तृप्ते तु वाच्यलिङ्गकः । रण्डा तु पंप्सुलायां स्त्री त्रिषु हस्तादिव
र्ज्जिते ॥ २४ ॥ व्याडो हिंस्रपशौ सर्पे मण्डापानगृहे मता । अप्यम्बुह
स्तिनो वेश्याहस्तिहस्तस्तण्डस्तु च ॥ २५ ॥ शौण्डो मत्ते च विख्यातः पिप्प
ल्यां च भवेत्स्त्रियां । षण्डं पद्मादिसङ्घाते न स्त्री स्याद्गोपतौ पुमान् ॥ २६ ॥
उ त्रि ॥ करण्डो मधुकोषासिकारण्डे पुद्गलाढके । कुष्माण्डकुमायां स्त्री पुंसि
कर्कारौ च गणान्तरे ॥ २७ ॥ भूणान्तरेऽथ कोदण्डं चापे नानीवृदन्तरे
। भ्रुव्यथो गारुडं क्ष्वेडमन्त्रे मरकतेऽपि च ॥ २८ ॥ तरण्डो वडिशीसू
त्रबद्धकाष्ठादिके प्लवे । नौकायामपि न स्त्री स्यात्तिन्तिडी डिम्बचिञ्चयोः

॥ २९ ॥ द्राविडोदेश भिज्ज्ञातेसंख्याभिद्देधमुख्ययोः । निर्गुण्डीमील शेफाल्यांसिन्धुवार द्रुमेपिच ॥ ३० ॥ प्रचण्डोदुर्वहेश्वेतकर वीरेप्रतापिनि । प्रकाण्डो नस्त्रीविटपेमूलशाखान्तरेतरोः ॥ ३१ ॥ शस्तेपिचिगण्डउ दरेपशोरवयवेपुमान् । पूत्यण्डोगन्धकीटेपितथाजन्त्वन्तरेपुमान् ॥ ३२ ॥ वरण्डोप्यन्तरेवेदीसमूहमुखरोगयोः । वारुण्डीद्वारपीठ्यां स्त्रीफणिनांराजकेपुमान् ॥ ३३ ॥ नस्त्रियांसेकपात्रेचमलेस्त्रुणः श्रवणस्यच । भेरुण्डादेवताभेदयक्षिण्यन्तरयोःस्त्रियां ॥ ३४ ॥ भयानके वाच्यवत्स्यान्मार्त्तण्डःक्रोडसूर्ययोः । मारुण्डोऽण्डेभुजङ्गीनांमार्गेगोमयमण्डले ॥ ३५ ॥ वरण्डासारिकावर्त्तिशस्त्रभेदेचयोषिति । वितण्डा वादभेदेस्यात्कर्च्चीशाकेशिलाह्वये ॥ ३६ ॥ करवीर्यामपिस्त्रीस्याच्छिखण्डोवर्हचूडयोः । शरण्डस्तुपुमान्धूर्त्तेशरटेभूषणान्तरे ॥ ३७ ॥ डचतुः ॥ अपोगण्डस्तुबलिभेविकलाङ्गेशिशावपि । अतिगण्डोयोगभेदेवृहद्गण्डेतुवाच्यवत् ॥ ३८ ॥ चक्रवाडोऽद्रिभेदेस्याच्चक्रवाडन्तु मण्डले । जलरुण्डोजलावर्त्तेपयोरेणौभुजङ्गमे ॥ ३९ ॥ देवताडः सैंहिकेयेजीमूतेचहुताशने । अथवातडवात्याराजशोणितयोरपि ॥ ४० ॥ पिच्छिलस्फोटिकायाञ्चवामायामपियोषिति ।

इतिडान्तवर्गः

भेदि डान्त



मेदि० ॥ ढैकं ॥ ढाढक्कायांपुमानुक्तःश्वनितस्यचलाङ्गुले । ॥ ढद्वि ॥ गूढंरह
ढान्त० सिगुह्येचनद्वयोःसंवृतेत्रिषु ॥ १ ॥ दृढंस्थूलेनितान्तेचप्रगाढेबलव
त्यपि । माढिःस्त्रीपत्रपङ्क्तौचदैन्यस्यापिप्रकाशने ॥ २ ॥ मूढस्तुतन्द्रि
तेबालेऽढास्त्रीमुग्धेह्यशोभयोः । रूढंजातेप्रसिद्धेचबाढंदृढप्रतिज्ञयोः
॥ ३ ॥ व्यूढःसंहतविन्यस्तपृथुलेष्वभिधेयवत् । वोढानाभारिकेसूत
शसाढःस्यात्पुंसिगोपतौ ॥ ४ ॥ आक्षाशाखेवर्षवरेतृतीयाप्रक्रान्तावपि ।
सोढातितिक्षासंयुक्तेशक्तेचाप्यभिधेयवत् ॥ ५ ॥ ॥ ढत्रि ॥ अध्यूढाकृ
तसापत्न्यनार्यामध्यूढईश्वरे । आषाढोव्रतिनांदण्डेमासेमलयपर्व
ते ॥ ६ ॥ स्त्रीपूर्णिमायामालीढंपादन्यासेऽशितेत्रिषु । उदूढजढस्थूले
स्यादुपोढोनिकटोढयोः ॥ ७ ॥ प्रगाढःकृच्छ्रदृढयोःप्रमीढोमूत्रितेघ
ने । प्ररूढोजठरेबद्धमूलेवारूढइत्ययं ॥ ८ ॥ वल्लाग्लेकपाटेऽग्रो
पञ्जरेशम्बलेपिच । विरूढोऽङ्कुरितेजातेविगूढोगर्हितेपिच ॥ ९ ॥
गुप्तेपित्रिषुसंरूढःप्रौढेचाङ्कुरितेत्रिषु । सम्मूढःपुञ्जितेभुग्नेसद्योजातेनुप
प्लुते ॥ १० ॥ ॥ ढचतुः ॥ अध्यारूढंसमारूढेऽभ्यधिकेचाभिधेयवत्
। खद्वारूढःश्रितखद्वामविनीतेचवाच्यवत् ॥ ११ ॥ प्रत्यालीढनुच
रथान्यासभेदेऽशितेत्रिषु ।

इतिढान्तवर्गः



॥ णैकं ॥ णः पुमान्बिन्दुदेवे स्याद्भूषणे गुणवर्जिते । पानीयनिलयेऽपी मेदि॰
ति केचिदूचुर्विपश्चितः ॥ १ ॥ ॥ णद्वि ॥ अणुर्व्रीहिविशेषे स्यात्पुंसि णान्त॰
सूक्ष्मेऽभिधेयवत् । अणिरणिवदश्राग्रकीलाश्रिसीमसु द्वयोः ॥ २ ॥
उष्णो ग्रीष्मे पुमान् दक्षाशीतयोरन्यलिङ्गकः । ऊर्णा मेषादिलोम्नि
स्यादन्तरावर्तके भ्रुवोः ॥ ३ ॥ कर्णः पृथाज्येष्ठसुते सुवर्णालौ श्रुतावपि
। क्षणः पर्वोत्सवव्यापारेषु मानेऽप्यनेहसः ॥ ४ ॥ कणा जीरककुम्भी
रमक्षिकापिप्पलीषु च । कणोऽतिसूक्ष्मे धान्यांशे काणः काकैकचक्षुषोः
॥ ५ ॥ कीर्णो दत्ते च विक्षिप्ते हिंसितेऽप्यभिधेयवत् । कुणिस्तुन्नकवृक्षे ना
कुकरे त्वभिधेयवत् ॥ ६ ॥ कृष्णः सत्यवतीपुत्रे वायसे केशवेऽर्जुने ।
कृष्णा स्याद्द्रौपदीनीलीकणाद्राक्षासु योषिति ॥ ७ ॥ मेचके वाच्यलि
ङ्गः स्यात्क्लीबे मरिचलोहयोः । कोणो वाद्यप्रभेदे स्याद्वीणादीनां च वा
दने ॥ ८ ॥ एकदेशे गृहादीनामश्रौ च लगुडेऽपि च । गणः प्रमथसंख्यौ
घे चण्डासैन्यप्रभेदयोः ॥ ९ ॥ गुणो मौर्व्यामप्रधाने रूपादौ सूद इन्द्रि
ये । त्यागशौर्यादिसत्त्वादिसंध्याद्यावृत्तिरज्जुषु ॥ १० ॥ शुक्लादाव
पि वद्याश्च गेष्णुर्ना गायने नटे । घ्राणं क्लीबं नासिकायां घ्राते स्याद्वाच्यलि
ङ्गकं ॥ ११ ॥ घृणा जुगुप्साकृपयोरथ चूर्णी कपर्दके । चूर्णो धूलौ क्षार
भेदे चूर्णा निवासयुक्तिषु ॥ १२ ॥ जर्णश्चन्द्रे च वृक्षे च जिष्णुर्ना वासवेऽ
र्जुने । जित्वरे वाच्यवज्जीर्णं परिपक्वपुराणयोः ॥ १३ ॥ भूणिः क्षु

कभेदेपिदुष्टदैवश्रुतौस्त्रियां । चाणानुचायमाणायांरक्षणोरश्चितेत्रिषु

मेदि॰ ॥ १४ ॥ तीक्ष्णांसामुद्गलवणोविषलोहाजिमुष्कके । क्लीबंजवाग्रजेपुं

शान्त॰ ॥ १४ ॥ तीक्ष्णांसामुद्गलवणोविषलोहाजिमुष्कके । क्लीवंजवाग्रजेपुं सितिग्मात्मत्यागिनोस्त्रिषु ॥ १५ ॥ तूणीनील्यांनिषङ्गेनानृणास्या त्तर्ष

लिप्सयोः । दीर्णविदारितेभीतेद्रुणश्चापेऽलिनिद्रुणः ॥ १६ ॥ द्रुणय

म्बुद्रोणीकाष्ठप्योर्दण्डुर्दान्तरिदुर्गम । द्रोणास्त्रियामाढकेस्यादाढवापचनु

ष्ये ॥ १७ ॥ पुमान्कृपीपतौदग्धकाकेस्त्रीनीवृदन्तरे । तथाकाष्ठाम्बु

वाहिन्यांगवादिन्यामपीष्यते ॥ १८ ॥ पणोवराटमानेस्यान्मूल्येकार्षा

पणोग्रहे । क्रय्यशाकादिकाद्यूतव्यवहारेभृतौधने ॥ १९ ॥ पर्णंप

र्णेकिंशुकेनापार्ष्णिःस्यादुन्मदस्त्रियां । स्त्रियांद्वयोःसैन्यपृष्ठेपादग्रं

थ्यधरेपिच ॥ २० ॥ प्राणोहृन्मारुतेवालेकाव्यजीवेऽनिलेऽबले । पुंलि

ङ्गः पूरितेवाच्यलिङ्गःपुंभूम्निचासुषु ॥ २१ ॥ पूर्णःस्यात्सममग्रेनापूरिते

स्वभिधेयवत् । फाणिर्गुडेकरम्भेचस्त्रियांबाणौनुयोषिति ॥ २२ ॥ व्यूताव

पिसरस्वत्यांभ्रूणःस्त्रीगर्भडिम्भयोः । मणिःस्त्रीपुंसयोरश्मजातौमुक्ता

दिकेपिच ॥ २३ ॥ कण्ठदेशेस्तनेजायालिङ्गाग्रेऽलिञ्जरेपिच ।

भेदिकेपिच ॥ २३ ॥ कण्ठदेशेस्तनेजायालिङ्गाग्रेऽलिञ्जरेपिच ।

मेणाःमुष्कफलेनक्रमक्षिकाऽहिकरण्डयोः ॥ २४ ॥ रणःकोणेक्वणे

पुंसिसमरेपुन्नपुंसकं । रेणुःस्त्रीपुंसयोर्धूलौपुंलिङ्गःपर्पटेपुनः ॥ २५ ॥

वर्णोद्विजादिशुक्लादियशोगुणकथासुच । स्तुतौनानस्त्रियांभेदरूपा

क्षरविलेपने ॥ २६ ॥ बाणःस्याद्गोस्तनेदैत्यभेदेकेवलकाण्डयोः । वा

णातुवाणमूलेस्त्रीनीलझिंट्यांपुनर्द्वयोः ॥ २७ ॥ वीणाविद्युतिवल्लक्यां मेदि॰
वृष्णिःपाण्डवचन्द्रयोः । त्रिषुनायादवेमेषेवेणीकेशस्यबन्धने ॥ २८ ॥ णान्त॰
नद्यादेरन्तरेदेवतालेवेणुर्नृपान्तरे । त्वक्सारेपिचपुंसिस्याच्छाणोमा
षचतुष्टये ॥ २९ ॥ लौहादीनाञ्चनिकषेशाणीप्रावरणान्तरे । शीर्णंप
र्णेयवाग्वांस्त्रीशीर्णानतुविशीर्णयोः ॥ ३० ॥ श्रेणिःस्त्रीपुंसयोःपङ्क्तौसमा
नशिल्पिसंहतौ । शोणःकृशानौश्योनाकेलोहिताश्वेनदेपुमान् ॥ ३१ ॥
त्रिषुकोकनदच्छायेस्थाणुःकीलेहरेपुमान् । अस्त्रीध्रुवेऽथस्थूणास्यात्सू
र्म्यांस्तम्भेगृहस्यच ॥ ३२ ॥ ॥ णत्रि ॥ अरुणोऽव्यक्तरागेऽर्केसंध्यारा
गेर्कसारथौ । निःशब्देकपिलेकुष्ठभेदेनागुणिनित्रिषु ॥ ३३ ॥ अरुणा
तिविषाश्यामामञ्जिष्ठात्रिवृतासुच । अरणिर्वह्निमन्थेनाद्वयोर्निर्मन्थ
दारुणि ॥ ३४ ॥ अभीक्ष्णन्तुभृशेनित्येतद्युक्तक्रिययोस्त्रिषु । इन्द्रा
णीकरणेस्त्रीणांपौलोमीसिन्धुवारयोः ॥ ३५ ॥ ईरिणन्तूषरेशून्येपीक्ष
णंदर्शनेदृशि । उषणंमरिचेक्लीवंकणायामुषणास्त्रियां ॥ ३६ ॥ ए
षणीव्रणमार्गानुसारिण्यांचतुलाभिदि । करुणस्तुरसेवृक्षेकृपायांकरु
णामता ॥ ३७ ॥ कर्तृणंतृणभित्पृश्न्योःकरणंचेतुकर्मणोः । वणिजा
दौहस्तलेपेनृत्यगीतप्रभेदयोः ॥ ३८ ॥ क्रियाभेदेन्द्रियक्षेत्रकायसं
वेशनेषुच । कायस्थेसाधनेक्लीवंपुंसिशूद्राविशोःसुते ॥ ३९ ॥ कल्या
णमक्षयस्वर्गेमङ्गलेपिनपुंसकं । कङ्कणंकरभूषायांसूत्रमण्डनयो

मेदि० रपि ॥ ४० ॥ करेणुर्गजयोषायां स्त्रियां पुंसि मतङ्गजे । कार्म्मणं मन्त्रत
णान्त० न्त्रादियोजने कर्म्मठेऽपि च ॥ ४१ ॥ काकिणी पणतुर्य्यांशे मानदण्डे च
दृश्यते । कृष्णले त्ववराट्योः स्यादुन्मानस्यांशकेऽपि च ॥ ४२ ॥ कारणं क
रणे हेतुबधयोस्त्र नपुंसकं । स्त्री जातनायां कुर्वाणो भृत्यकारकयोस्त्रिषु
॥ ४३ ॥ कृपाणः खड्गछुरिकाकर्त्तर्य्योरपि योषिति । कृपणस्तु कृमौ
पुंसि मन्दकुत्सितयोस्त्रिषु ॥ ४४ ॥ क्षेपणं प्रेरणे नौकादण्डजालभिदोः
स्त्रियां । ग्रहणं स्वीकारादरकरेऽपरागोपलब्धिबन्दिषु ॥ ४५ ॥ स्याद्ग्रामणीः
प्रधानेऽधिपतौ त्रिषु नापिते पुंसि । ग्रामीणा नीलिकायां स्त्री ग्रामोद्भूतेऽभिधेय
वत् ॥ ४६ ॥ गोकर्णोऽश्वतरे सर्पे सारङ्गे च गणान्तरे । अङ्गुष्ठानामिकोन्माने
गोकर्णी मूर्विकौषधौ ॥ ४७ ॥ चरणोऽस्त्री बह्वृचादौ मूले गोत्रे पदेऽपि च । भ्र
मणे भक्षणे चापि नपुंसक उदाहृतः ॥ ४८ ॥ जरणं जीरकेऽजाजी हिङ्गु
सौवर्च्चलेऽपि च । तरुणं कुब्जपुष्पे नारुबुके यूनि तु त्रिषु ॥ ४९ ॥ तरणि
र्द्युमणौ पुंसि कुमारी नौकयोः स्त्रियां । दक्षिणो दक्षिणोद्भूत सरलच्छन्द
वर्त्तिषु ॥ ५० ॥ आगमे त्रिषु यज्ञादिविधिदाने दिशि स्त्रियां । द्रविणं न
द्वयोर्वित्ते काञ्चने च पराक्रमे ॥ ५१ ॥ दारुणो रसभेदे ना त्रिषु तु स्याद्भ
यावहे । द्रुघणो मुद्गरेऽपि स्याद्द्रुहिणे च परश्वधे ॥ ५२ ॥ दुर्वर्णं त्रिष्व
सद्वर्णे क्लीबं मैलेयरूप्ययोः । दौर्वीणं मृष्टपर्णे स्याद्दूर्बायां स्वरसेऽपि च
॥ ५३ ॥ धर्म्मणस्तु पुमान् वृक्षभेदसर्पप्रभेदयोः । धरणं मानभेदेऽपि

धारणेधरणीभुवि ॥ ५४ ॥ धर्षणंस्यात्परिभवेरतेऽसत्यान्तुधर्षणी । ध मेदि०
रुणः सम्मतेनीरेस्वर्लोकेपरमेष्ठिनि ॥ ५५ ॥ धारणीनाडिकायांस्याद्बु णान्त०
द्धोक्तमन्त्रभिद्यपि । धारणाऽङ्गेवयोगस्यनपुंसिस्याद्विधारणे ॥ ५६ ॥
धिषणस्त्रिदशाचार्येधिषणाधियियोषिति । निःश्रेणिरधिरोहिण्यांख
र्जूरीपादपेस्त्रियां ॥ ५७ ॥ निर्याणंत्वारणापाङ्गदेशेमोक्षेऽध्वनिर्गमे ।
निर्माणंनिर्मितौसारेसमञ्जसेनपुंसकं ॥ ५८ ॥ निर्वाणमस्तङ्गमनेनि
र्वृतौगजमज्जने । सङ्गमेप्यपवर्गेचप्रवणोनाचतुष्पथे ॥ ५९ ॥ क्रम
निम्नमहीभागोदरप्रह्वेषुचत्रिषु । प्रघणस्ताम्रकुम्भेस्यादालिन्देलोह
मुद्गरे ॥ ६० ॥ प्रमाणंनित्यमर्य्यादाशास्त्रेषुसत्यवादिनि । इयत्ताया
श्चहेतौचक्लीवैकत्वेप्रमातरि ॥ ६१ ॥ पञ्चोर्णंधौतकौषेयेक्लीवंस्याच्छोण
केपुमान् । पक्षिणीपूर्णिमायांस्याद्विहग्यांशाकिनीभिदि ॥ ६२ ॥ आगा
मिवर्त्तमानाहर्युक्तरात्रावपिस्त्रियां । प्रवेणिःस्त्रीकुथावेण्योःपुराणंपञ्च
लक्षणे ॥ ६३ ॥ पणेपुंसित्रिषुप्रत्नेपूरणःपूरकेत्रिषु । क्लीवंपिण्डप्रभे
देचपूरणीशाल्मलिद्रुमे ॥ ६४ ॥ पटारम्भकसूत्रेषुप्रोक्षणंसेचनेबधे
। वरुणस्तरुभेदेऽप्सुपश्चिमाशापतावपि ॥ ६५ ॥ वरणस्तुपुमान्सेतु
कशाकप्राकारयोरपि । क्लीवंकन्यादिवरणेवेष्टनेस्त्रीनदीभिदि ॥ ६६ ॥
वारणंप्रतिषेधेस्याद्वारणस्तुमतङ्गजे । ब्राह्मणंब्रह्मसंघातेवेदभागेन
पुंसकं ॥ ६७ ॥ भूमिदेवेतुपुंलिङ्गस्पृक्काकापृक्कयोःस्त्रियां । वारुणीग

मेदि० णडदूर्वायांप्रतीचीस्तुरयोरपि ॥ ६८ ॥ भरणीघोषकेऽश्वृक्षेभरणंवे
शाश्व० तनेभृतौ । भ्रमणीकारुण्डिकायांक्रीडायामधीशितुः ॥ ६९ ॥ भी
षणोरसेशल्लक्यांनागाढ्येदारुणेत्रिषु । मसृणोऽकर्कशेस्निग्धेत्रिषूमा
यान्तुयोषिति ॥ ७० ॥ मत्कुणोनिर्विषाणेभेनिःश्मश्रुपुरुषेपिच । उ
द्दंशेनारिकेलेचमार्गणोयाचकेशरे ॥ ७१ ॥ यात्रान्वेषणयोःक्लीवंयन्त्र
णंरक्षणेस्मृतं । बन्धनेस्यान्नियमनेवरणःशहृनेखरे ॥ ७२ ॥ र
मणंपटोलमूलेनार्य्यांस्त्रीनाधवेस्मरे । रोषणःपारदेहेमघर्षणोपलयोः
पुमान् ॥ ७३ ॥ क्रोधनेवाच्यलिङ्गःस्याद्रोहिणीकणरुग्भिदि । तडित्
कटुम्भरासोमवल्केषुलोहितागवोः ॥ ७४ ॥ लवणंसैन्धवादौनासि
न्धुरक्षोभिदोरसे । तद्युक्तेवाच्यलिङ्गःस्यान्नदीभेदद्विषोःस्त्रियां ॥ ७५ ॥
लक्षणंनाम्निचिह्नेचसारस्यांलक्षणाक्वचित् । लक्ष्मणात्वोषधीभेदेसार
स्यामपियोषिति ॥ ७६ ॥ रामभ्रातरिपुंसिस्याच्छ्रीकेचाभिधेयवत् । विषा
णीक्षीरकाकोल्यामजशृङ्ग्यांचयोषिति ॥ ७७ ॥ कुष्ठनाम्नौषधेक्ली
बंपशुशृङ्गेभदन्तयोः । विपणिःपण्यवीथ्यांचभवेदापणपण्ययोः
॥ ७८ ॥ शरणंगृहरक्षित्रोर्वधरक्षणयोरपि । श्रवणंचश्रुतौकर्णे
नक्षत्रेननपुंसकं ॥ ७९ ॥ श्रमणोयतिभेदेनानिंद्यजीविनितुत्रिषु ।
स्त्रियांतुदर्शनामांस्योमुण्डीरीशबरीभिदोः ॥ ८० ॥ श्रावणोमासिपा
षण्डेदध्यात्यांश्रावणास्त्रियां । शिङ्घाणंकाचपात्रेचलोहनासिकयोर्मले

॥ ८१ ॥ श्रीपर्णीकाश्मरीकुम्भ्योः क्लीवंपद्माग्निमन्थयोः । सङ्कीर्णंनिचि मेदि०
तेपिस्यादशुद्धेचापिभेद्यवत् ॥ ८२ ॥ सरणिःपङ्क्तौमार्गेचसारणोराक्ष णान्त०
सान्तरे । रुग्भेदेनाप्रसारण्यांस्त्रीस्वल्पनद्यांचसारणी ॥ ८३ ॥ सुघे
णःकरमर्देस्याद्विष्णुसुग्रीववैद्ययोः । सुवर्णोनास्वर्णकर्षेसुवर्णानुम
खान्तरे ॥ ८४ ॥ श्रीकृष्णागुरुणिक्लीवेकाञ्चनेहरिचन्दने । सुपर्णः
स्वर्णचूडेचगरुडेकृतमालके ॥ ८५ ॥ सुपर्णीकेमलिन्यांचवैनतेय
स्यमातरि । हरेणुर्नासतीलेस्त्रीरेणुकाकुलयोषितोः ॥ ८६ ॥ हरणं
यौतुकादीनांद्रव्येभुजेहृतावपि । हरिणःपुंसिसारङ्गेविषदेत्वभिधेयवत्
॥ ८७ ॥ हरिणीहरितायाञ्चनारीभिद्वृत्तभेदयोः । सुवर्णप्रतिमाया
ञ्चहर्षणोऽक्षिरुगन्तरे ॥ ८८ ॥ हर्षकेयोगभेदेचश्राद्धदेवेपिचक्वचि
त् । हिरण्यंरेतसिस्वर्णेवराटेचनपुंसकं ॥ ८९ ॥ ॥ णचतुः ॥ अङ्गा
रिणीहसन्त्याञ्चभास्करत्यक्तदिश्यपि । अथर्वणिनोऽथर्ववेदब्राह्म
णेचपुरोधसि ॥ ९० ॥ आतर्पणंप्रीणनेस्यान्मङ्गल्यालेपनेपिच । आरोह
णंस्यात्सोपानेसमारोहेप्ररोहणे ॥ ९१ ॥ उत्क्षेपणन्तुव्यजनेधान्य
मर्दनवस्तुनि । स्यादुद्धरणमुद्धारवान्तान्नोन्मूलनेष्वपि ॥ ९२ ॥ कार्षा
पणोऽस्त्रीकार्षिकेपणेषोडशकेपिच । अथकामगुणोरागेविषयाभोगयो
रपि ॥ ९३ ॥ चीर्णपर्णस्तुनिम्बेपिखर्जूरीभूरुहेपुमान् । चूडामणिः
शिरोरत्नेकाकचिञ्चाफलेपुमान् ॥ ९४ ॥ जुहुवाणोपिचाध्वर्यावपिस्या

मेदि० ज्जातवेदसि । नरड्डवीणः कीटमात्रे वर्वरे नरड्डलोदके ॥ ९५ ॥ चाय
णान्त० माणावार्षिकेस्त्रीरक्ष्यमाणेऽभिधेयवत् । तैलपर्णीमलयजेश्रीवासेसिह्ल
केपिच ॥ ९६ ॥ दाक्षायणीत्वपर्णायामश्विन्याद्युडुषुस्त्रियां । अथदे
वमणिर्भर्गेऽश्वावर्त्तेकौस्तुभेपिच ॥ ९७ ॥ नारायणोऽच्युतेभीरुगौर्य्यो
र्नारायणीमता । अथोनिगरणंक्लीवंभोजनेस्यात्कुलेपुमान् ॥ ९८ ॥
अथनिःसरणंमृत्यूपायमोक्षेषुनिर्गमे । स्यान्निस्तरणमुपायेनिस्तारेत
रणेपिच ॥ ९९ ॥ निरूपणंस्यादालोकेविचारेचनिदर्शने । पर्परी
णम्बुपर्णस्यशिरायांद्यूतकम्बले ॥ १०० ॥ पर्णचूर्णरसेपिस्यात्पर्परीण
न्तुपर्वणि । प्रवारणंनिषेधेस्यात्काम्यदानेचनद्वयोः ॥ १०१ ॥ परीर
णःस्यात्कमठेदण्डेचपट्टशाटके । परायणमभीष्टेस्यात्तत्परआश्रययोर
पि ॥ १०२ ॥ परवाणिःपुमान्धर्माध्यक्षवत्सरयोरपि । पारायणंस
मासङ्कात्स्न्येपारगतावपि ॥ १०३ ॥ पीलुपर्णीबिम्बिकायांमूर्वायामो
षधीभिदि । अथपुष्करिणीवभ्यांसरोजिन्यांजलाशये ॥ १०४ ॥ म
धुपर्णीतुगम्भार्य्यांनीलीसंज्ञौषधावपि । मीनाघ्रीणस्तुपुंसिङ्गोदर्दुर
म्रेचखञ्जने ॥ १०५ ॥ रक्तरेणुस्तुसिन्दूरपलाशकोरकेपुमान् । रा
गचूर्णःपुमान्दन्तधावनेमकरध्वजे ॥ १०६ ॥ रेरिहाणस्तुपुंसि
स्यान्महादेवेऽम्बरेपिच । लम्बकर्णःस्मृतोऽङ्कोठपादपेछगलेपिच
॥ १०७ ॥ विदारणंविडम्बेचभेदेक्लीवंरणेद्वयोः । अथवैतरणीम

श्वांप्रेतानांयातुमातरि ॥ १०८ ॥ शरवाणिःशरमुखेपापिष्ठेशरजी मेदि०
विनि । पुमानथोशिखरिणोरसालावृत्तभेदयोः ॥ १०९ ॥ नारीर यान्त०
त्नेमल्लिकायां रोमावल्ल्यामपिस्त्रियां । अथसंसरणं क्लीवमसंबाधच
मूगतौ ॥ ११० ॥ घण्टापथेचसंसारेरणारम्भेचकुत्रचित् । समीरणः
स्यात्पवनेपथिकेचफणिज्झके ॥ १११ ॥ हस्तिकर्णस्त्वोरुवूकेपला
शगणभेदयोः । ॥ णपञ्च ॥ अवग्रहणमित्येतत्प्रतिरोधेप्यनादरे
॥ ११२ ॥ अवतारणं भूतादिग्रहेवस्त्राञ्चलेऽर्चने । प्रविदारणमाख्या
तंसम्पराये ऽवदारणे ॥ ११३ ॥ परिभाषणंतनिन्दोपालम्भनेनियमेपिच ।
उक्तोमत्तवारणस्तुप्रक्षिप्तकटकुञ्जरे ॥ ११४ ॥ क्लीवंप्रासादवीथी
नांकुण्डवृक्षवृत्तावपि । मण्डूकपर्णीमञ्जिष्ठाब्राह्म्योर्नातुशोणके
॥ ११५ ॥ रोमहर्षणंरोमाञ्चेनासूतेचविभीतके । वातरायणउन्म
त्तेनिष्प्रयोजनपूरुषे ॥ ११६ ॥ काण्डेचकरपात्रेचकूटेचपरसंक्रमे ।
॥ णषट् ॥ दोहदलक्षणमुक्तंवयःसन्धौचगर्भेच ॥ ११७ ॥ यौवन
लक्षणमप्याख्यातंलावण्यकुचयोस्च ।

इतिणान्तवर्गः

❁❁❁❁❁❁❁❁❁❁❁❁❁❁❁❁❁❁❁❁❁❁❁❁❁❁❁❁❁❁❁

॥ तैकं ॥ तस्त्रैणमृतपुच्छेपुंक्रोडिल्लेच्छेचकुत्रचित् । अपुमांस्तरणेपुण्ये तान्त०
कथितःशब्दवेदिभिः ॥ १ ॥ तद्वि ॥ अस्तंक्षिप्तेप्यवसितेचिपुनापस्त्रि

मेदि॰ माचले। अन्तं स्वरूपे नाशे ना स्त्री शेषेऽन्तिके त्रिषु ॥ २॥ अर्त्तिः पी
तान्त॰ डाधनुष्कोट्योः स्यादाप्ते लब्धे स्वसत्ययोः । आप्तिः स्त्री योगसम्प्राप्त्योरितं
स्मृते गते त्रिषु ॥ ३ ॥ ईतिर्डिम्बे प्रवासेऽतिवृष्ट्यादिषट्सु च स्त्रियां ।
उक्तमेकाक्षरछन्दस्युक्तं स्याद्भाषिते त्रिषु ॥ ४ ॥ ऊतिः स्त्री रक्षणे स्यू
तावूतिः कल्याणवर्त्मनोः । जुगुप्सास्पर्द्धयोः स्त्री स्यादृतमुञ्छशिले जले
॥ ५ ॥ सत्ये दीप्ते पूजिते स्यादृतुर्वर्षादिषट्सु च । आर्त्तं वेमासि च पुमानेतः
कर्बुर आगते ॥ ६ ॥ क्षत्ता भूद्राक्षत्रियजे प्रतीहारे च सारथौ । भुजि
ष्या तनये पि स्यान्नियुक्ते वेधसोः पुमान् ॥ ७ ॥ कर्त्तानुकारके वाच्यलि
ङ्गो ना परमेष्ठिनि । क्रतुर्यज्ञे मुनौ पुंसि कान्तिः शोभेच्छयोः स्त्रियां ॥ ८ ॥
कान्तानार्य्यां प्रियङ्गौ स्त्री शोभने त्रिषु नाधरे । लोहे च चन्द्रसूर्य्यायःप
र्य्यायान्तः शिलासु च ॥ ९ ॥ क्षितिर्निवासे मेदिन्यां कालभेदे क्षये स्त्रियां
। कीर्त्तिः प्रसादयशसोर्योषित्कुक्ती गवेधुकायां स्यात् ॥ १० ॥ प्राप्तायु
धे च कुन्ती गुग्गुलपृथयोः स्वशालुक्यां । कृतं युगेऽलमर्थे स्याद्विहिते हिंसि
ते त्रिषु ॥ ११ ॥ कृत्तन्तु वेष्टिते छिन्ने कृतिः करणहिंसयोः । कृत्ति
श्चर्म्मत्वचोर्भुर्जे कृत्तिकायां द्वयं स्त्रियां ॥ १२ ॥ केतुर्ना रुक्पताकाऽविग्र
होत्पातेषु लक्ष्मणि । गर्त्तः स्त्री गर्त्तभेदे स्याद्वटे च कुकुन्दरे ॥ १३ ॥ ग्र
स्तं ग्रासीकृते पि स्याद्धनुप्रवर्णे पदे पि च । गतिः स्त्री मार्गदशयोर्ज्ञाने यात्राभ्युपा
ययोः ॥ १४ ॥ नाडीव्रणसरण्योश्च गतं विज्ञातयातयोः । गातुर्ना कोकिले

मृङ्गेगन्धर्वेऽश्विपुरोषयो ॥ १५ ॥ गीतिश्छन्दसिगानेस्त्रीगीतंशब्दितगानयोः भेदि
। गुप्तिःस्याववकरस्यानेकारागारेचरक्षणे ॥ १६ ॥ गुप्तंस्याद्रक्षितेगूढेघा तान्त
तःकाराडप्रहारयोः । घृतमाज्येजलेक्लीवंप्रदीप्तेत्वभिधेयवत् ॥ १७ ॥
चितंछन्नेचिपुचिताचित्यायांसंहतौस्त्रियां । चितिश्चित्यावृन्दयोःस्त्रीजातं
व्यक्तौघजन्मसु ॥ १८ ॥ क्लीवंचिलिङ्गमुत्पन्नेजातिःस्त्रीगोचजन्म
नोः । अश्मन्तिकामलक्योस्सामान्यच्छन्दसोरपि ॥ १९ ॥ जातीफ
लेचमालत्यांज्ञातिस्तातसगोत्रयोः । पुमानथततंव्याप्तेविस्तृतेचचिलि
ङ्गकं ॥ २० ॥ क्लीवंबीणादिवाद्येस्यात्पुंलिङ्गस्तुसमीरणे । ताताऽनुकं
प्येजनकेतिक्तोरसस्तुगन्धयोः ॥ २१ ॥ तिक्तानुकटुरोहिण्यांपर्पटेतुन
पुंसकं । तूस्तंरेणौचविख्यातंजटायाञ्चनपुंसकं ॥ २२ ॥ त्रेतायुगेऽग्नि
त्रितयेदत्तंविश्राणितेऽर्पिते । दन्तोऽद्रिकटकेकुञ्जेदशनेऽथौषधौस्त्रि
यां ॥ २३ ॥ दान्तस्तुदमितेपिस्यात्तपःक्लेशसहेचिपु । दितिर्दैत्यज
नन्याञ्चखण्डनेपिषयोषिति ॥ २४ ॥ दीप्तंनिर्भासितेदग्धेप्ज्वलितेथ
द्रुतंचिपु । शीघ्रेविलीनेविद्राणेद्युतिःस्त्रीरश्मिशोभयोः ॥ २५ ॥ दृति
श्चर्मपुटेमत्स्येनाधातुर्नेन्द्रियेपुच । शब्दयोनिमहाभूततद्गुणेषुरसादि
षु ॥ २६ ॥ मनःशिलादौश्लेष्मादौविशेषाङ्गैरिकेस्त्रिष । धातान्हिर
ण्यगर्भेनापालकेचिप्वथोधुतं ॥ २७ ॥ त्यक्तेविधूतेधूतस्तुकम्पितेभर्त्सि
तेचिपु । धूर्त्तस्तुखण्डलवणेधूस्तूरेनाविटेचिपु ॥ २८ ॥ धृतिर्नन्द्यैस्त्रि

मेदि॰ यंतुहेयोगभिद्धैर्य्यधारणे । नतंतगरपाद्यांस्यात्क्लीवंकुटिलनम्र
तान्त॰ योः ॥ २९ ॥ त्रिषुनीतिर्नयेपिस्यात्प्रापणेपिचयोषिति । पङ्क्तिःस्त्रीगौ
रवेपाकेपत्तिर्नापदगेस्त्रियां ॥ ३० ॥ गतावेकरथेकेभत्र्यश्वपञ्चपदा
तिके । पंक्तिर्दशाक्षरच्छन्दोदशसंख्यालिषुस्त्रियां ॥ ३१ ॥ पतिर्धवेना
त्रिष्वीशेप्राप्तंलब्धेसमञ्जसे । पातोनिपातनेत्रातेत्रिषुप्राप्तिर्महोदये
॥ ३२ ॥ लाभेपिवस्त्रियांप्रातिःपूर्त्तिप्रादेशयोःस्त्रियां । पीतिर्नाश्वेस्त्रियां
पानेप्रीतंहृषितनर्मणोः ॥ ३३ ॥ पीतंपानेहरिद्रायांस्त्रियांगौरेऽभिधे
यवत् । प्रीतिर्योगान्तरेप्रेम्णिस्मरपत्नीमुदोःस्त्रियां ॥ ३४ ॥ पुस्तंक्लीवंपु
स्तकेचलेप्यादिशिल्पकर्मणि । प्लुतंतुरङ्गमगतौक्लीवंपुंसित्रिमाचके
॥ ३५ ॥ पूतंत्रिषुपवित्रेचशटितेबहुलीकृते । पूर्त्तंत्रिषुपूरितेस्यात्क्ली
वंखातादिकर्म्मणि ॥ ३६ ॥ प्रोतंनपुंसकंवस्त्रेखचितेवाच्यलिङ्गकम् ।
प्रेतोभूतान्तरेपुंसिमृतेस्याद्वाच्यलिङ्गकः ॥ ३७ ॥ पोतःशिशौवहित्रेच
गृहस्थानेचवाससि । वृतिस्तुवरणेपिस्याद्वेष्टनेपिचयोषिति ॥ ३८ ॥
भर्त्तास्वामिनिपुंसिस्यात्त्रिषुधातरिपोष्टरि । भक्तिर्विभागेसेवायांस्त्रियांभ्रा
न्तिस्तुयोषिति ॥ ३९ ॥ मिथ्यामतौचभ्रमणेभित्तिःकुड्यप्रदेशयोः ।
भीतिर्भयेस्त्रियांभीतंभयेऽथभीयुतेत्रिषु ॥ ४० ॥ भूतिर्भस्मनिसम्पत्तौ
हस्तिशृङ्गारयोःस्त्रियां । भूतंक्ष्मादौपिशाचादौजन्तौक्लीवंत्रिषूचिते
॥ ४१ ॥ प्राप्तेवृत्तेसमेसत्येदेवयोन्यन्तरेतुना । कुमारेपिभूतिःस्त्री

स्यान्मूल्येपिभरणेपिच ॥ ४२ ॥ मतन्तुसम्मतेज्ञातेमतिःस्त्रीच्छाधि 
योःस्मृतौ । मन्तुःपुंस्यपराधेपिमनुष्येपिप्रजापतौ ॥ ४३ ॥ मातागौ 
र्य्यादिजननीगोब्राह्मण्यादिभूमिषु । मातिर्मानेप्यवच्छेदेदृक्ति
र्मौक्तेचमोक्षणे ॥ ४४ ॥ माचादयःस्त्रियामुक्तःप्राप्तमोक्षेचमोचिते । वि
मुक्ती मौक्तिकेमूर्त्तिःकायकाठिन्ययोःस्त्रियां ॥ ४५ ॥ मूर्त्तंस्यात्त्रिषुमू
र्च्छालेकठिनेमूर्त्तिमत्यपि । मृतन्तुयाचितेमृत्यौक्लीवंमृतःमतित्रिषु
॥ ४६ ॥ यतिःस्त्रीपाठविच्छेदेनिकारयतिनोःपुमान् । यन्तामेठेचसूते
नायुक्तिःस्त्रीन्याययोगयोः ॥ ४७ ॥ युतोयुक्तोऽपृथग्भूतेक्लीवंहस्तचतुष्टये
। रक्तोऽनुरक्तेनील्यादिरञ्जितेलोहितेत्रिषु ॥ ४८ ॥ क्लीवन्तुकुङ्कुमेताम्रे
प्राचीनामलकेऽसृजि । रतिःस्त्रीस्मरदारेषुरागेसुरतगुह्ययोः ॥ ४९ ॥
रत्नंवर्त्मनिनद्यांस्त्रीरतंसुरतगुह्ययोः । रितंभून्येवनेरीतिःस्त्रियांस्य
न्दप्रचारयोः ॥ ५० ॥ पित्तलेलोहकिट्टेचलताप्रियङ्गुश्यामयोः । पृक्काज्यो
तिष्मतीवल्लीलताकस्तूरिकासुच ॥ ५१ ॥ माधवीदूर्वयोर्लिप्तंविलिप्तं
विषदिग्धयोः । भुक्तेलूतातूर्णनाभपिपीलिकागदान्तरे ॥ ५२ ॥ वप्तातु
जनकेपुंसिवापकेप्यभिधेयवत् । वक्तातुपण्डितेपिस्याद्वाग्मिन्यप्यन्यलि
ङ्गकः ॥ ५३ ॥ व्यस्तन्तुव्याकुलेव्याप्तेव्यक्तःस्फुटमनीषिणोः । वस्तिर्द्व
योर्निरूहेनाभ्यधोभून्निदशासुच ॥ ५४ ॥ वर्त्तिर्भेषजनिर्म्माणेन
यनाञ्जनलेखयोः । गात्रानुलेपनीदीपदशदीपेषुयोषिति ॥ ५५ ॥

मेदि॰ वार्त्तानुवर्त्तनेवार्त्तिङ्गयोव्ट्याद्युदन्तयोः। निःसारारोग्ययोः क्लीबंवृत्तिर्मे
मान्त॰ स्त्रीरुजोस्त्रियां ॥ ५६॥ व्याप्तंख्यातेसमाक्रान्तेव्याप्तिर्व्यापनरम्भयोः।
स्त्रियांविवित्तिर्विचारेचलाभसम्भावयोःस्त्रियां ॥ ५७ ॥ वित्तंक्लीबंधने
वाच्यलिङ्गंख्यातेविचारिते। वीतमसारगजेस्याद्ङ्कुशकर्मण्यसारतु
रगेच ॥ ५८ ॥ वीतिर्गतौचदीप्तौप्रजनाशनधावनेषुस्त्री। वृत्तिर्वि
वरणाजीवकौशिक्यादिप्रवर्त्तने ॥ ५९ ॥ स्त्रीवृन्तंप्रसवबन्धेघटीधार
कुचाग्रयोः। वृत्तोऽधीतेष्यभीतेतिवर्त्तुलेपिवृतेमृते ॥ ६० ॥ दृढेऽन्य
लिङ्गंवाक्लीबंछन्दस्याचारिचवृत्तिषु। शक्तिरस्त्राकारेगौर्य्यामुत्साहादौब
लेस्त्रियां ॥ ६१ ॥ शस्तंक्षेमेप्रशस्तेचशान्तिःस्त्रीमङ्गलेशमे। शास्तास
मन्तभद्रेनाशासकेपुनरन्यवत् ॥ ६२ ॥ शान्तोऽभियुक्तरसयोःपुंसि
त्रिषुशमन्विते। अव्ययंवारणेशान्तंशातंशितच्चदुर्बले ॥ ६३ ॥ नि
शितेचशितिर्भूर्जेनासितासितयोस्त्रिषु। शीतंहिमगुणेक्लीबंशीतलालस
योस्त्रिषु ॥ ६४ ॥ वानीरेबकुवारेनास्मुक्तंपूतास्लनिष्ठुरे। श्रुतिःश्रोत्रेच
तत्कर्म्मण्याम्नायवार्त्तयोःस्त्रियां ॥ ६५ ॥ शुक्तिःकपालशकलेशङ्खेश
ङ्खनखेपिच। नख्यश्वावर्त्तदुर्नामसुक्तास्फोटेषुचस्त्रियां ॥ ६६ ॥ श्रु
तमाकर्णितेशास्त्रेश्वेतोद्वीपाद्रिभेदयोः। श्वेतावराटिकाकाष्ठपाटला
शङ्खिनीषुच ॥ ६७ ॥ क्लीबंरूप्येऽन्यवच्छुक्लेसन्साधौधीरशस्तयोः।
मान्येसत्येविद्यमानेत्रिषुसाध्व्युमयोःस्त्रियां ॥ ६८ ॥ सातिर्दानेऽवसा

नेस्त्रीस्वान्तंचेतसिगह्वरे । स्थितंप्रतिज्ञानवतिचोर्द्ध्वनिश्चलयोस्त्रिषु 
॥ ६९ ॥ स्थितिःस्त्रियामवस्थानेमर्य्यादायाञ्चसीमनि । सितमवसितेचब 
द्धेधवलेत्रिषुशर्करायांस्त्री ॥ ७० ॥ सीतालाङ्गलपद्धतिवैदेह्योस्वर्ग
गङ्गायां । सुतस्तुपार्थिवेपुत्रेस्यादपत्येसुतास्मृता ॥ ७१ ॥ सुप्तिःस्प
र्शाज्ञतानिद्राविस्रम्भशयनेस्त्रियां । सूतस्तुसारथौतक्ष्णिक्षत्त्रियाद्ब्राह्म
णीसुते ॥ ७२ ॥ बन्दिपारदयोःपुंसिप्रसूतेप्रेरितेत्रिषु । सूतिःसीवन
सन्तत्योःस्त्रियांसूतःप्रसेवके ॥ ७३ ॥ नाचिषूतेस्मृतिर्धर्म्मशास्त्रस्मरणा
ध्योःस्त्रियां । स्रुतिःस्त्रीगमनेमार्गेसेतुर्नाऽलौकुमारके ॥ ७४ ॥ हस्तःक
रेकरिकरेसप्रकोष्ठकरेपिच । नक्षत्रेकेशात्परेव्रातेहितंपथ्येगतेधृते
॥ ७५ ॥ हेतिःस्यादायुधज्वालासूर्य्यतेजःसुयोषिति ।॥ तचि ॥ अ
मृतंयज्ञशेषेस्यात्पीयूषेसलिलेघृते ॥ ७६ ॥ अयाचितेचमोक्षेचनाध
न्वन्तरिदेवयोः । अमृतामागधीपथ्यागुडूच्यामलकीषुच ॥ ७७ ॥
अनृतंकृषावसत्येप्यजितोनाहरौत्रिषु । अनिर्जितेचाच्युतस्तुहरौपुंसित्रि
षुस्थिरे ॥ ७८ ॥ अर्दितंयाचितेपिस्याद्वातव्याधौचहिंसिते । अक्षतंन
द्वयोःपण्डेलाजेषुत्रिष्वहिंसिते ॥ ७९ ॥ यवेपिक्वचिदव्यक्तोहरौस्मरह
रेपुमान् । परमात्ममहदाद्योःक्लीवंस्यादस्फुटेत्रिषु ॥ ८० ॥ अनन्तः
केशवेशेषेपुमाननवधौत्रिषु । अनन्ताचविशल्यायांशारिवादूर्व्वयोरपि
॥ ८१ ॥ कणादुरालभापथ्यापार्वत्यामलकीषुच । विश्वम्भरागुडूच्योः

 स्यादनन्तोऽम्बरवर्त्मनि ॥ ८२ ॥ अश्मन्तमशुभे चुल्ल्यां मरणेऽनव
 शावपि । क्लीबेऽप्यथायतिः पुंसि हिमदीधितिकालयोः ॥ ८३ ॥ अर्हन्
स्तः क्षपणे बुद्धे पुंसि मान्येऽन्यलिङ्गकः । अर्हन्त्यश्वापि स्तुगतेः क्षपणेपि
च दृश्यते ॥ ८४ ॥ अगस्तिः कुम्भयोनौ च वङ्गसेनतरौ पुमान् । अर्वती
कुम्भदास्यां च बडवायां च योषिति ॥ ८५ ॥ अङ्गतिः पुंस्यग्निहोतृब्रह्म
वह्निष्वथादितिः । भूदेवमातरं हन्ति स्यागेरोगेष्वभे स्त्रियौ ॥ ८६ ॥
आपातः पुंसि पतने तदात्वे च प्रकीर्त्तितः । आघ्रातं घ्राणितेऽक्रान्तेऽप्या
घ्यातं भाषिते त्रिषु ॥ ८७ ॥ आध्मातः शब्दिते दग्धे वातरुग्भेद संयुते
। आप्लुतः स्नातके स्नातेऽप्यादृतः सादरेऽर्चिते ॥ ८८ ॥ आचितः श
कटोन्मेये पलानामयुतद्वये । पुंलिङ्गः संगृहीते पिक्षेपेपि स्यात्त्रि
लिङ्गकः ॥ ८९ ॥ आहतं गुणिते चापि ताडिते च मृषार्थके । स्यात्पुराण
नवस्त्रेपि नववस्त्रे च नाऽनके ॥ ९० ॥ आनर्त्तो देशभेदेपि नृत्यस्थाने
जले रणे । आवर्त्तश्चिन्तने वारिभ्रमे चावर्त्तने पुमान् ॥ ९१ ॥ आस्फो
तस्तु पुमानर्कपर्णे स्यात्कोविदारके । आस्फोता गिरिकर्ण्यां च वनमल्ल्या
च योषिति ॥ ९२ ॥ आयस्तस्तेजिते क्षिप्ते क्लेशिते कुपिते हते । आ
यतिस्तु स्त्रियां दैर्घ्ये प्रभावागामिकालयोः ॥ ९३ ॥ आयत्तिस्तु स्त्रियां
स्नेहे वशित्वे वासरे बले । आकृतिस्तु स्त्रियां रूपे सामान्य वपुषोरपि
॥ ९४ ॥ आसत्तिः सङ्गमे लाभे स्त्रियामापत्तिरापदि । प्रापणेऽपि च योषि

वयादुदन्तः साधुवार्त्तयोः ॥ ९५ ॥ उषितं व्युषितेदग्धेप्युदान्तस्तु स्त मेदि०
स्तान्तरे । दयात्यागादिसम्पन्नेकाव्यालङ्कारकान्तयोः ॥ ९६ ॥ उप तान्त०
प्रंमुक्तमांसेऽथचिषुतप्तेपरिप्लुते । उचितन्तुभवेन्न्यस्तेमितेज्ञातेसम
ञ्जसे ॥ ९७ ॥ उद्धृतंस्याच्चिषूत्क्षिप्तेपरिभुक्तोज्झितेपिच । उच्छ्रितं
स्याच्चिषूत्पन्नेप्रोच्छ्रितेवृद्धिमत्यपि ॥ ९८ ॥ उद्घातस्तुपुमान्पादस्ख
लनेसमुपक्रमे । पवनाभ्यासयोगस्यकालभेदेचकीर्त्तितः ॥ ९९ ॥
उत्तुङ्गेमुद्गरेपिस्यादुदितन्तुक्तआगते । उच्छृतंचिषुसञ्जातेसमुन्नद्ध
प्रवृद्धयोः ॥ १०० ॥ उन्मत्तउन्मादवतिधूस्तूरमूचुकुन्दयोः । उद्दान्तो
निर्मदगजेपुमानुदमितेचिषु ॥ १०१ ॥ ऋधतुःपुरुषेऽग्नौनाकलितं
विदिताप्तयोः । कपोतःस्याच्चिचकरालपारावतविहङ्गयोः ॥ १०२ ॥
अथक्रन्दितमाह्वानेरुदितेऽपिनपुंसकं । क्षारितःस्यात्त्रिक्षारेरभिश
स्तेपिचचिषु ॥ १०३ ॥ कापोतान्चकेक्लीवेकपोताधेऽञ्जनान्तरे । कि
रातोम्लेच्छभेदेस्याद्भूनिम्बेऽल्पतनावपि ॥ १०४ ॥ स्त्रियांचामरधा
रिण्यांकुट्टिनीदुर्गयोरपि । कृतान्तोयमसिद्धान्तदैवाकुशलकर्म्मसु
॥ १०५ ॥ गर्जितंवारिवाहादिध्वनौनामत्तकुञ्जरे । ग्रथितंगुम्फितेज्ञाते
हिंसितेचचिलिङ्गकं ॥ १०६ ॥ गभस्तिःकिरणेसूर्य्येनास्वाहायान्तु
योषिति । गन्धुतल्लीस्वर्णलतयोर्गोपतिःशिवषण्डयोः ॥ १०७ ॥
नृपभास्करयोःपुंसिचेष्टितंगमिचेष्टयोः । जगत्स्याद्विष्टपे क्लीवंवायौनाज

मेदि० ङ्गमेचिषु ॥ १०८ ॥ जगतीभुवनेक्ष्मायांछन्दोभेदेजनेपिच । जयन्तीवृ
नाम० क्षभिद्दौर्य्यौरिन्द्रपुत्रीपताकयोः ॥ १०९ ॥ पुमानैन्द्रौहरेभीमेज्वलितं
दग्धउज्वले । जामाता दुहितुः पत्यौसूर्य्यावर्त्तेधरेपुमान् ॥ ११० ॥
जीमूतोऽद्रौधृतिकरेदेवताडेपयोधरे । जीवातुरस्त्रियांभक्तेजीवितेजीव
नौषधे ॥ १११ ॥ जीवन्तीजीवनीशम्योर्गुडूचीवृन्दयोरपि । जृम्भितं
करणेस्त्रीणांमीहास्फोटितयोरपि ॥ ११२ ॥ त्वरितंप्रजवेधौघेचिगर्त्तो
गणितान्तरे । देशेपिनाघ्रघर्घरिकाकामुकाङ्गनयोःस्त्रियां ॥ ११३ ॥ तृष्णा
ताधनुषितृणाच्चेदंशितमपिजातदंशितेपिस्यात् । कवचाचितेद्विजातिर्विप्रा
ण्डजयोस्तुपुंलिङ्गः ॥ ११४ ॥ दुर्जातंव्यसनेक्लीबेऽसम्यग्जातेऽन्यलि
ङ्गकं । दुर्गतिर्नरकेनैःस्वेस्त्रीदृष्टान्त उदाहृतौ ॥ ११५ ॥ शास्त्रेच
मरणेधीमान्पण्डितेचवृहस्पतौ । निर्ऋतिःस्यादलक्ष्म्यांस्त्रीदिशांपा
पालान्तरेपुमान् ॥ ११६ ॥ निकृतंविप्रलम्भेस्यान्नीचेविप्रकृतेपिच ।
निर्मुक्तस्त्यक्तसङ्गेस्यान्मुक्तकञ्चुकभोगिनि ॥ ११७ ॥ निरस्तस्त्रिषु
निष्ठ्यूतेप्रेषितेचोद्धृतोदिते । संत्यक्तेचप्रतिहतेनिमित्तंहेतुलक्ष्मणोः
॥ ११८ ॥ निशान्तोदृढसन्नाहेवातमूर्त्येपिचाश्रये । निशान्तस्त्रिषु
शान्तेस्यान्नक्लीवन्तुभवनोषसोः ॥ ११९ ॥ निकृतिर्भर्त्सनेक्षेपेशठेशा
ठ्येपिचस्त्रियां । निर्वृतिःसुस्थितावस्तंमगनेचसुखेस्त्रियां ॥ १२० ॥ नि
यतिर्नियमेदैवेस्त्रीपतन्नूपातुकेखगे । प्रहृतंविततेक्षुण्णपर्य्यस्तःपतिते

क्षते ॥ १२१ ॥ प्रभूतमुद्गते प्राज्ये पण्डितः सिह्लके कवौ । पलितं शैल मेदि०
जे तापे केशपाके च कर्द्दमे ॥ १२२ ॥ प्रसृतः स्तु प्रसारे स्याद्विनीते वेगिते त्रि तान्त०
षु । अर्द्धाञ्जलौ तु पुंलिङ्गो जङ्घायां प्रसृता मता ॥ १२३ ॥ प्रसूतं कुसु
मे क्लीवं त्रिषु संजातसूतयोः । प्रणीतः संस्कृताग्नौ ना यज्ञपात्रान्तरे स्त्रि
यां ॥ १२४ ॥ त्रिषु क्षिप्तोपसम्पन्नविहितेषु प्रवेशिते । प्रतीतः सादरे
ज्ञाते हृष्टप्रख्यातयोस्त्रिषु ॥ १२५ ॥ प्रमीतं वाच्यलिङ्गं स्यात्प्रोक्षितेपि
मृतेपि च । परेतो वाच्यलिङ्गः स्यान्मृते भूतान्तरे पुमान् ॥ १२६ ॥ पर्वतः
पादपे पुंसि शाकमत्स्यप्रभेदयोः । देवमुन्यन्तरे शैले प्रपातो निर्झरेऽत
टे ॥ १२७ ॥ पर्य्याप्तं तु यथेष्टे स्यात्तृप्तौ शक्ते निवारणे । पञ्चता पञ्च
भावे स्यान्मरणेपि च योषिति ॥ १२८ ॥ पक्षतिस्तु भवेत्पक्षमूले च प्रतिपत्ति
थौ । प्रसूतिरुद्भवेपि स्यात्तनये दुहितर्य्यपि ॥ १२९ ॥ प्रततिर्विस्तृतौ
वल्ल्यां पद्धतिः पंक्तिवर्त्मनोः । प्रवृत्तिस्तु प्रवाहे स्यादुदन्ते च प्रवर्त्तने
॥ १३० ॥ आवन्त्यादौ च पर्य्याप्तिः प्रकामप्राप्तिरक्षणे । प्रकृतिर्गुण
साम्ये स्यामात्यादिस्वभावयोः ॥ १३१ ॥ योनौ लिङ्गे पौरवर्गेऽमी पञ्च
न्यादयः स्त्रियां । पार्व्वती शल्लकीदुर्गागोपालपुत्रिकासु च ॥ १३२ ॥
प्रार्थितं याचिते शत्रुसंरुद्धेऽभिते हि त्रिषु । पित्सन्विहङ्गमे पुंसि पतनेच्छौ पु
नस्त्रिषु ॥ १३३ ॥ पिसितं मांसे मांस्यां स्त्री पिण्डितं गणिते घने । पीडि
तं करणे स्त्रीणां यन्त्रिते बाधितेपि च ॥ १३४ ॥ पुटितं स्याद्धि पुटेपा

मेदि० ठितस्यूतयोरपि। पृषन्मृगेपुमान्बिन्दौनद्वयोःपृषतोपिना॥ १३५॥ अन
तान्त० योस्त्वत्रिषुश्वेतबिन्दुयुक्तेप्युभाविमौ। प्रोक्षितंनिहतेसिक्तेवृहतीवसनांतरे
॥ १३६॥ छन्दोभित्क्षुद्रवार्ताकीवारिधानीषुवाचिच। कण्टकारीमहत्योस्तु
भवद्युष्मत्सतोस्त्रिषु॥ १३७॥ स्त्रीबाणभेदेभरतोनाट्यशास्त्रमुनौनटे।
रामानुजेचदौष्मन्तौभास्वान्भास्वरसूर्ययोः॥ १३८॥ भारतंग्रंथभेदे
स्याद्वर्षभेदेऽथभारती। वचनेचसरस्वत्यांपक्षिवृत्तिप्रभेदयोः॥ १३९॥
भासन्तःसुन्दरसकारेत्रिषुनाभासपक्षिणि। भावितंवासितेप्राप्तेभूभृन्नादौ
महीपतौ॥ १४०॥ महतीवल्लकीभेदेराज्येस्यात्तुनपुंसकं। तत्त्वभे
देपुमान्वृद्धेवाच्यवन्मथितंपुनः॥ १४१॥ क्लीवंनिर्जलघोलेस्यात्त्रिष्वा
लोडितघृष्टयोः। मरुद्देवेसमीरेनाग्रन्थिपर्णेनपुंसकम्॥ १४२॥ मु
षितंहृतखण्डितयोर्मूर्छितमपिसोच्छ्रयेचमूढेच। रजतन्त्रिषुशुक्लेस्या
त्क्लीवंहारेचदुर्वर्णे॥ १४३॥ रमतिर्नायकेनाकेपुंसिस्याद्रसितंपुनः।
रुतस्वनितयोःक्लीवंस्वर्णादिखचितेत्रिषु॥ १४४॥ रेवतीहलिपत्न्यां
चताराभिन्मातृभेदयोः। रैवतस्तुसुवर्णालौशैलभेदेचशङ्करे॥ १४५॥
रोहितंकुङ्कुमेरक्तेऽनृजुशक्रशरासने। पुंसिस्यान्मीनमृगयोर्भेदेरोहित
कद्रुमे॥ १४६॥ रोहिन्मृग्यांलताभेदेस्त्रीनार्केललितंत्रिषु। ललितेचेप्सि
तेपिस्याद्धारभेदेतुनद्वयोः॥ १४७॥ लोहितंरक्तगोशीर्षकुङ्कुमेरक्तचन्द
ने। पुमान्नदान्तरेभौमेवर्णेचत्रिषुतद्वति॥ १४८॥ वर्द्धितंप्रसितेछिन्नेपू

रितेवद्धतिर्गवि । सवितेपुंसिवहन्तुः पथिकेवृषभेपुमान् ॥ १४९ ॥ वनि 
ताजातरागस्त्रीस्त्रियोस्त्रीषुचयाचिते । सेवितेवापितंबीजाकृतमुण्डितयोस्त्रि 
षु ॥ १५० ॥ वसतिः स्यात्स्त्रियांवासेयामिन्यांचनिकेतने । व्यायतंव्यापृते
दीर्घेदृढेचातिशयेन्यवत् ॥ १५१ ॥ व्याघातोयोगभेदेस्यादन्तरायप्रहा
रयोः । वासिताकरणीनार्योर्वासितंभावितेरुते ॥ १५२ ॥ वासन्तीमाधवी
यूथ्योरुष्ट्रेनावहितेत्रिषु । विविक्तंविजनसंपृक्तेरहःपूतविवेकिषु ॥ १५३ ॥
वसुनष्टेनाविहस्तः पण्डितेव्याकुलेत्रिषु । विनीतः सुवहाश्वेस्याद
णिज्यपिपुमान्स्त्रिषु ॥ १५४ ॥ जितेन्द्रियेऽपनीतेचनिभृतेविनयान्विते
। विश्वस्तोजातविश्वासेविश्वस्ताविधवस्त्रियाम् ॥ १५५ ॥ विद्युत्तडित
संध्यायांस्त्रियांत्रिषुतुनिष्प्रभे । विवृताक्षुद्ररुग्भेदेविस्तृतेत्वभिधेयवत्
॥ १५६ ॥ विनेतादेशकेराज्ञिनाविधातानुवेधसि । स्मरेनाविनतातार्क्ष्य
जनन्यांपिटकाभिदि ॥ १५७ ॥ विनतः प्रणतेभुग्नेशिक्षितेचाभिधेयव
त् । विकृतन्त्रिषुबीभत्सेरोगितेसंस्कृतेपिच ॥ १५८ ॥ विच्छित्तिरङ्गरागे
विच्छेदेहारभेदेस्त्री । विदितंबुधितार्थितयोर्विपत्तिरपियातनापदोर्योषि
त् ॥ १५९ ॥ वृत्तान्तः प्रक्रियायांस्यात्कार्त्स्न्येवार्त्ताप्रभेदयोः । प्रस्तावेवेष्टितं
रुद्धेलासकेकरणान्तरे ॥ १६० ॥ वेल्लितंगमनेक्लीवंकुटिलेविधुते
त्रिषु । विवर्त्तः समुदायेस्यादपवर्त्तननृत्ययोः ॥ १६१ ॥ शकुन्तः कीट
भेदेस्याद्भासपक्षिविहङ्गयोः । श्रीमाँस्तिलकवृक्षेनामनोज्ञेधनवेत्रि

मेदि० षु ॥ १६२॥ श्रीपतिःपुंसिपृथिवीनाथेचमधुसूदने । समुन्नीतः
नान० पुरेक्ष्माभृद्गृहःकक्षान्तरेपिच ॥ १६३ ॥ स्रवन्तीतुतरङ्गिण्यांगुल्मस्या
नौषधीभिदोः । संवर्त्तःप्रलयेमुन्यंतरेकर्षफलेपिच ॥ १६४ ॥ स्ख
लितःस्खलितेभ्रेषेसंहतंसङ्गतेदृढे । संस्कृतःकृत्रिमेशस्तेभूषितेप्यन्य
लिङ्गकः ॥ १६५ ॥ क्लीबंतुलक्षणोपेतेस्थपतिःकंचुकिन्यपि । जीवेष्टि
याजकेशिल्पिभेदेनाऽसत्तमेत्रिषु ॥ १६६ ॥ सङ्घातःपुंसिघातेचसंहतौ
नरकान्तरे । संवित्तिःप्रतिपत्तौस्यादविवादेजनस्यच ॥ १६७ ॥ स
न्ततिस्स्यात्पङ्क्तौगोत्रेचपारम्पर्य्येपुत्रपौत्राद्याम् । सङ्गतिस्सङ्गमेज्ञानेस
न्नतिःप्रणतौध्वनौ ॥ १६८ ॥ समितिःसम्परायेस्यात्सभायांसङ्गमे
पिच । समाप्तिरवसानेस्यात्समर्थनेऽथसम्मतिः ॥ १६९ ॥ अभिला
षेप्यनुज्ञायांसम्वित्याद्यास्तुयोषिति । स्थापितंनिश्चितेन्यस्तेस्तिमितोऽ
चञ्चलार्द्रयोः ॥ १७० ॥ सिकतास्त्रीसिकतिलेवालुकायान्तुभूमनि ।
सुरतंस्यान्निधुवनेदेवत्वेसुरतास्मृता ॥ १७१ ॥ सुकृतंतुशुभेपुण्येक्ली
वंसुविहितेत्रिषु । सुव्रतासुखसंदोह्याशोभनव्रतयोरपि ॥ १७२ ॥
सुनीतिःशोभननयेध्रुवमातरियोषिति । सूक्तंमङ्गलेपिस्यात्प्रिय
सत्येवचस्यपि ॥ १७३ ॥ हरिर्दिशिस्त्रियांपुंसिहयवर्णविशेषयोः ।
अस्त्रियांस्यात्तृणेचाथहर्म्मितंक्षिप्तदग्धयोः ॥ १७४ ॥ हरितास्त्रीचदू
र्वायांहरिद्वर्णयुतेन्यवत् । हसन्त्यङ्गारधान्याञ्चमल्लिकाशाकिनीभि

द्रोः ॥ १७५ ॥ हारीतः पक्षिभेदे स्यान्मुनिभेदे च कैतवे । हृषितं विस्मिते प्री मेदि॰
ते प्रहते हृष्टलोमनि ॥ १७६ ॥ न चतुः ॥ अवसितमृद्धे ज्ञाते प्यवसान तान्त॰
गते च वाच्यलिङ्गं स्यात् । अर्थपतिः पुंल्लिङ्गो धनाधिनाथे च नरनाथे
॥ १७७ ॥ अवदातः सिते गौरे विशुद्धे प्यन्यलिङ्गकः । अवगीत
स्तु निर्वादे न्वष्टगर्हितयोरपि ॥ १७८ ॥ अन्तर्गतं विस्मृते स्यान्मध्यप्राप्ते
च वाच्यवत् । अङ्गारितं तु दग्धे स्यात्पलाशकलिकाद्रुमे ॥ १७९ ॥
हसंत्याश्च लतामात्रे नदीभेदे च योषिति । अपावृतस्तु पिहिते स्वतन्त्रेपि
च वाच्यवत् ॥ १८० ॥ अत्याहितं महाभीतौ जीवनापेक्षकर्मणि ।
अभिनीतस्त्रिषु न्याय्ये संस्कृतामर्षिणोरपि ॥ १८१ ॥ अभिजातः कु
लीने स्यान्न्याय्यपण्डितयोस्त्रिषु । अभियुक्तः परैरुद्धे तत्परेप्यभिधेयवत्
॥ १८२ ॥ अतिमुक्तस्तु निःसङ्गे वासन्त्यां तिनिशेपि च । अवध्वस्तः परि
त्यक्ते निन्दिते प्यवचूर्णिते ॥ १८३ ॥ अधिक्षिप्तः प्रणिहिते कुत्सिते भर्त्सि
ते त्रिषु । अंशुमान्भास्करे शालपर्ण्यामंशुमती स्मृता ॥ १८४ ॥ भवेदप
चितिः पूजाव्ययनिष्कृतिहानिषु । अथानुमतिरूनेन्दुपूर्णिमानुज्ञयो
रपि ॥ १८५ ॥ अभिशस्तिः प्रार्थनापवादयोश्च यं स्त्रियाम् । आयु
ष्मान्योगभेदे ना वाच्यवच्चिरजीविनि ॥ १८६ ॥ उपाहितोऽनलोत्पा
ते पुमानारोपिते त्रिषु । उपाकृतोऽध्वरहतपशौ नोपद्रुते त्रिषु ॥ १८७ ॥
उदा[illegible]तः प्रतीहारे प्रव्रज्यावसिते चरे । स्यादुच्छ्रितमुन्नीर्णे नतू

मेदि॰ क्तेपवा च्यवेत् ॥ १८८ ॥ उद्ग्राहितमुदीर्णेस्याद्बद्धग्राहितयोस्त्रिषु
नाना॰ । भवेदुपचितन्त्वृद्धेसमृद्धेचान्यलिङ्गकं ॥ १८९ ॥ उज्जृम्भितंचिष्टत्
फुल्लेचेष्टायान्तुनपुंसकम् । उपरक्तोव्यसनार्त्तेराहुग्रस्तेंदुसूर्य्ययोः
॥ १९० ॥ उपसत्तिःसङ्गमाचेसेवायामपियोषिति । ऋष्यप्रोक्ताश
तावर्य्यंतिबलाम्भूकशिंबिषु ॥ १९१ ॥ ऐरावतोऽभ्रमातङ्गेनारङ्गेल
कुचद्रुमे । नागभेदेचपुंसिस्यादिद्युत्तड्डेदयोःस्त्रियां ॥ १९२ ॥ नपुंस
कंमहेंद्रस्यऋजुदीर्घशरासने । कलधौतंसुवर्णेस्याद्रजतेचनपुंसकम्
॥ १९३ ॥ भवेत्कुहरितंक्लीवंपिकालापेरतध्वनौ । कुमुद्वान्कुमुदप्रायदे
शेस्याद्वाच्यलिङ्गकः ॥ १९४ ॥ कुमुद्वतीकुमुदिन्यांकुशपत्न्यांचयोषिति
। कृष्णवृन्तापाटलायांमाषपर्ण्यांचयोषिति ॥ १९५ ॥ अथगन्धव
तीपृथ्वीपुरीभिद्व्याससमातृषु । सुराग्रांचगरुत्मांस्तुपक्षिमात्रेखगाधिपे
॥ १९६ ॥ भवेद्गृहपतिःपुंसिगृहस्थेपिचमंत्रिणि । चन्द्रकान्तस्तुपुंसि
स्यान्मणिभेदेचकैरवे ॥ १९७ ॥ चर्मण्वतीनदीभेदेकदलीपादपेस्त्रियाम् ।
चित्रगुप्तस्तुपुंसिस्याद्यमेतस्यचलेखके ॥ १९८ ॥ दिवाभीतःकुम्भिलेस्या
दुलूकेकुमुदाकरे । दिवाकीर्त्तिस्तुपुंसिस्यान्नापितान्तावसायिनोः ॥ १९९ ॥
द्वीपवान्सिंधुनदयोर्द्वीपवत्यापगाभुवोः । दृषद्वतीनदीभेदेकात्याय
न्यामपिस्त्रियाम् ॥ २०० ॥ स्याद्धूमकेतुरुत्पातभेदेवैश्वानरेपुमान् ।
नंद्यावर्त्तःपुमान्वेश्मप्रभेदेभगवद्द्रुमे ॥ २०१ ॥ नदीकांतःसमुद्रेस्यादिज्ज

लेसिंदुवारके । नदीकान्तास्त्रियां जम्ब्वां काकजंघौषधावपि ॥ २०२ ॥ मेदि०
नागदन्तो द्विपरदे गृहान्निर्गतदारुणि । नागदन्ती तु कुम्भायां श्रीहस्तिन्या नाक०
मपि स्त्रियां ॥ २०३ ॥ निष्कासितो निर्गमितेऽप्याहितेऽधिकृतेऽपि च ।
अथ निस्तुषितं त्यक्तेऽन्वग्विहीने लघूकृते ॥ २०४ ॥ निराकृतिरनाकारे
ऽस्वाध्याये वारणे त्रिषु । परिगतं त्रिषु प्राप्ते विस्मृतज्ञातचेष्टिते ॥ २०५ ॥
अथ प्रणिहितं न्यस्ते प्राप्तेऽपि च समाहिते । अथ पल्लवितं लाक्षारक्ते सप
ल्लवे तते ॥ २०६ ॥ भवेत्प्रणिहतं द्विष्टे प्रतिस्खलितबद्धयोः । प्रति
क्षिप्तं वारितेऽस्यात्प्रेषिते पञ्चकं त्रिषु ॥ २०७ ॥ परिवर्त्तो विनिमये कूर्मरा
जे प्रवर्त्तने । परिस्रुता स्त्री वारुण्यां स्यन्ने स्यादभिधेयवत् ॥ २०८ ॥
प्रधूपिता क्लेशितायां सूर्ययेगन्तव्यदिश्यपि । पञ्चगुप्तस्तु चार्वाकदर्श
ने कमठे पुमान् ॥ २०९ ॥ प्रजापतिस्तु दक्षादौ महीपाले विधातरि ।
प्रतिपत्तिः प्रवृत्तौ च प्रागल्भ्ये गौरवेऽपि च ॥ २१० ॥ संप्राप्तौ च प्रबोधे च प
दप्राप्तौ च योषिति । अथ प्रव्रजिता मांसी मुण्डीरी तापसीषु च ॥ २११ ॥
प्रतिकृतिरथार्चायां प्रतिनिधिप्रतीकारयोः स्त्री । पाशुपतो बकपुष्पे स्या
त्पशुपत्यधिदैवते च तद्भक्ते ॥ २१२ ॥ पारिजातः सुरतरौ पारिभद्र
तरावपि । पारावती गोपगीते नदीभिल्लवलीफले ॥ २१३ ॥ पारावतः क
लरवे तथा मर्कटतिंदुके । पुष्पदन्तस्तु दिग्नागभेदे विद्याधरान्तरे ॥ २१४ ॥
पुरस्कृतोऽभिग्रस्तारिग्रस्ताग्रेकृतपूजिते । भगवान्नाजिने गौर्यां स्त्रियां

मेदि० पूज्येतुवाच्यवत् ॥ २१५ ॥ अथभोगवतीनागपुरीनद्योरहोपुमान्
नाना० । रङ्गमानातुकुट्टिन्यांवृक्षरोगांतरेस्त्रियां ॥ २१६ ॥ लक्ष्मीपतिःपुमान्वासु
देवेनरपतावपि । व्यतीपातोमहोत्पातेयोगभेदापयानयोः ॥ २१७ ॥
वनस्पतिर्नाद्रुमाद्येविनापुष्पफलिनिद्रुमे । विनिपातोनिपातेस्याद्दैवादिव्य
सनेपुमान् ॥ २१८ ॥ विजृंभितंतुचेष्टायांक्लीबंचिषुविकस्वरे । विवस्वा
न्विबुधेसूर्य्येतन्नगर्य्यांविवस्वती ॥ २१९ ॥ वैजयन्तोगृहेशक्रध्वजप्रासा
दयोःपुमान् । वैजयन्तीपताकायांजयन्तीपादपेस्त्रियाम् ॥ २२० ॥ भवेच्छ
तधृतिःपुंसिशक्रेचपरमेष्ठिनि । स्मुभदंतीसुदन्त्यांस्यात्पुष्पदन्तेभयोषि
ति ॥ २२१ ॥ समुद्धृतंसमुत्कीर्णेप्यपनीतेषवाच्यवत् । सदागतिर्नाक
वातनिर्वाणेषुसदीश्वरे ॥ २२२ ॥ सरस्वाँस्त्वनदेचाब्धौनान्यवद्रसिकेस्त्रि
याम् । वाणीस्त्रीरत्नवाग्देवीगोनदीषुनदीभिदि ॥ २२३ ॥ मनुपत्न्या
मपिसत्यवतीव्यासस्यमातरि । नारदर्चिकयोःपत्न्यांस्त्रियांपुंसिनृपान्त
रे ॥ २२४ ॥ समुद्रान्तातुकार्पासीपृक्काद्युरालभासुच । समाहितःसमा
धिस्थेप्युक्तसिद्धांतआहिते ॥ २२५ ॥ निर्विवादीकृतेपिस्यात्प्रतिज्ञाते
पत्राच्यवत् । समाघातोबधेयुद्धेसंख्यावान्पंडितेपुमान् ॥ २२६ ॥ सं
ख्यायुक्तेऽन्यलिङ्गोथसुधाभृतिःपुमान्मखे । चंद्रेसुभाषितोबुद्धेपुमान्
सूक्तेनपुंसकम् ॥ २२७ ॥ सूर्य्यभक्तस्तुबन्धूकेपुंसिचिष्वर्कपूजके
। सेनापतिःकार्त्तिकेयेप्यनीकाधिकृतेपुमान् ॥ २२८ ॥ हिमारातिःपुमा

न्वीनिहोचेकिरणमालिनि। हेमवन्यभयास्वर्णक्षीर्यो: श्वेतवचोमयो: मेदि०
॥२२९॥ तपञ्च॥ अवलोकितोनालोकनार्थेचिपुनिरीक्षिते। अनराजित नान्त०
ईशाऽजेक्ष्यन्तरेनाऽजितेचिषु॥२३०॥ गिरिकर्णीजयादुर्गाशालपर्णीषु
योषिति। उपधूपितआसन्नमरणेपरिधूपिते॥२३१॥ स्याद्गणाधिपतिः
पुंसिशंकरेपिगजानने। भवेत्रिपतिषन्पित्वैाचिषुपुंसिविहंगमे॥२३२॥
पृथिवीपतिस्तुभूपालेऋषभाख्यौषधेपुमान्। मूर्द्धाभिषिक्तोभूपालेमंचि
णिक्षत्रियेपिच ॥२३३॥ यादसांपतिरंभोधौपश्चिमाशापतावपि।
वसंतदूतस्त्वेचेस्यात्पिकपंचमरागयो: ॥२३४॥ वसंतदूतीपाटल्याम
भियुक्तेचयोषिति।॥ नषट्॥ अर्द्धपारावतश्चित्रकण्ठेतित्तिरिपक्षिणि
॥२३५॥ तसप्त॥ समुद्रनवनीतंस्यात्क्षीवंपीयूषचंद्रयो:।

इतितान्तवर्गः

************************

॥ थैकं॥ थंरक्षणेमङ्गलेचसाध्वसेचनपुंसकम्। शिलोच्चयेपुमानेवक्लिबि थान्त०
न्नुभयरक्षके॥१॥ यदि॥ अर्थोविषयार्थनयोर्द्धनकारणवस्तुषु। अभि
धेयेचशब्दानांनिवृत्तौचप्रयोजने॥२॥ अस्थास्त्वालंबनास्थानयत्नापेक्षा
सुयोषिति। कन्थामृन्मयभित्तौचतथाप्रावरणांतरे॥३॥ क्वाथ:स्या
द्व्यसने:दुःखेपिनिष्पाकेपिद्रवस्यच। कुथ:स्त्रीपुंसयोर्वर्णकंबलेपुंसिबर्हिषि
॥४॥ काथोनानेत्ररोगस्यभेदेचाएठिलेचिषु। ग्रन्थोग्रथनाधनयो:स्याच्छा

मेदि० स्वाक्षरसंख्ययोः ॥ ५ ॥ ग्रन्थिस्तुग्रंथपर्वणोर्नाबन्धेरुग्भेदपर्वणोः । गा
थान्त० थाश्लोकेसंस्कृतान्यभाषायांगेयवृत्तयोः ॥ ६ ॥ तीर्थंशास्त्राध्वरक्षेत्रो
पायनारीरजःसुच । अवतारर्षिजुष्टांबुपात्रोपाध्यायमंत्रिषु ॥ ७ ॥ तु
त्थमञ्जनभेदेस्यान्नीलीसूक्ष्मैलयोःस्त्रियां । दुस्थःस्याद्दुर्गतेमूर्खेदुःखे
नतिष्ठतित्रिषु ॥ ८ ॥ प्रस्थोस्त्रियांमानभेदेसानावुन्नितवस्तुनि । पा
र्थोऽर्केऽग्नौजलेक्लीबंपृथुःस्यान्महतित्रिषु ॥ ९ ॥ त्वक्पर्ण्यांकृष्णजीरेऽ
स्त्रीपुमानग्नौनृपान्तरे । प्रोथोस्त्रीहयघोणायांनाकट्यामध्वगेत्रिषु ॥ १० ॥
मंथःस्यात्पुंसिमंथानेसाक्तवेचदिवाकरे । यूथंतिर्य्यक्समूहेऽस्त्रीपुष्पभेदेच
योषिति ॥ ११ ॥ रथःपुमानवयवेस्यंदनेवेतसेपिच । वीथीपंक्तौगृहांगे
चरूपकांतरवर्त्मनोः ॥ १२ ॥ संस्थस्त्रिरेऽवस्थितेस्त्रीस्थितौसादृश्यना
शयोः । सार्थोवणिक्समूहेस्यादपिसंघातमात्रके ॥ १३ ॥ सिक्थोभक्त
पुलाकेनामधूच्छिष्टेनपुंसकं । थत्रिः ॥ अतिथिःकुशपुत्रेस्यात्पुमानागंतुकेत्रि
षु ॥ १४ ॥ अश्वत्थःपिप्पलद्रौस्यादश्वत्थापूर्णिमातिथौ । अव्यथोनि
र्व्यथेसर्पेपारटीपथ्ययोःस्त्रियाम् ॥ १५ ॥ उन्माथःकूटयंत्रेस्यान्मार
णेघातकेपुमान् । उपस्थःसेफसिक्रोडेतथामदनमंदिरे ॥ १६ ॥ उ
द्रथोरतकीलेस्यात्ताम्रचूडाख्यपक्षिणि । क्षवथुर्नाक्षुतेकासेकायस्थः
परमात्मनि ॥ १७ ॥ नरजातिविशेषेनाहरीतक्यांतुयोषिति । कापथः
कुत्सितपथेउशीरेक्लीबमिष्यते ॥ १८ ॥ गोग्रंथिर्नाकरीषेस्याद्गोष्ठगोजि

ह्विकौषधौ। दमथस्तुपुमान्दंडेदमेचपरिकीर्त्तितः ॥१९॥ निशीथ मेदि०
स्तुपुमानर्द्धरात्रेस्याद्रात्रिमात्रके। निर्ग्रंथोनग्नकेपिस्यान्निःस्ववालिश थान्त०
योरपि॥२०॥ प्रमथास्याद्धरीतक्यांहरपारिषदेपुमान्। वरूथोरथगु
प्तौस्याद्वरूथंचर्म्मवेश्मनोः॥२१॥ मन्मथःकामचिंतायांकपित्थेकुसुमा
युधे। वयस्यातुस्त्रियांब्राह्मीगुडूच्यामलकीषुच॥२२॥ सूक्ष्मैलायां
चकाकोल्यांपथ्यालीतरुणीषुच। वमथुःपुंसिवमनेगजस्यकरशीकरे
॥२३॥ विदथोयोगिज्ञानिनोःशमथःशांतिमंत्रिणोः। षड्ग्रन्थातुवचा
यांस्त्रीस्यात्करंजांतरेपुमान्॥२४॥ समर्थस्तुहितेशक्तेसम्बंधेप्यन्यलि
ङ्गकः। सिद्धार्थस्तुपुमान्शाक्येसिंहेचसितसर्षपे॥२५॥ थचतुः॥ अ
नीकस्थोरणगतेहस्तिशिक्षाविचक्षणे। राजरक्षिणिचिह्नेचवीरमर्द्दन
केपिच॥२६॥ भवेदितिकथापार्थवाच्यश्रद्धेयनष्टयोः। चतुष्पथंचतुर्मा
र्गेसंगमेब्राह्मणेपिना॥२७॥ अथचित्ररथःसूर्य्यगंधर्व्वान्तरयोःपुमा
न्। दशमीस्थोनष्टवीर्य्येस्थविरेप्यन्यलिंगकः॥२८॥ प्राणनाथोय
मेनास्मान्निष्ठप्राणाधिपेमतः। वानप्रस्थोमधूकेऽपिस्यात्तृतीयाश्रमेपुमा
न्॥२९॥ भवेदुदरथिःपुंसिसमुद्रेचवियन्मणौ।

॥ इतिथांतवर्गः ॥

* * * * * * * * * * * * * * * * * * * * * * *

॥ दैफं ॥ दःपुमानचलेदन्तेस्त्रियांशोधनदानयोः। छेदोपतापरक्षासु दान्त०

पुमांस्तुदान्तरिस्मृतः ॥ १ ॥ ॥ द्विः ॥ अब्दः संवत्सरे वारिवाहमुस्त
कयोः पुमान् । कन्दोऽस्त्री सूरणे ग्रन्थमूले जलधरे पुमान् ॥ २ ॥ अन्दूः
स्त्रियां स्यान्निगडे प्रभेदे भूषणस्य च । कुन्दो माघ्येऽस्त्री मुकुन्दभ्रमिनिध्यन्त
रे पुनः ॥ ३ ॥ क्ष्वेदः स्यात्पुंसि रजसि प्रेषशब्दे च प्रकीर्त्तितः । गदो भ्रातरि
विष्णोः स्याद्दामयेनायुधे गदा ॥ ४ ॥ छदः पत्त्रे गरुति ग्रन्थिपर्णतमा
लयोः । छन्दो वशेऽप्यभिप्राये धीदाण्ड्री मनीषयोः ॥ ५ ॥ नन्दिर्द्यूताङ्ग
आनन्देऽस्त्री नन्दिकेश्वरे पुमान् । नदी सरिति शोणादौ नानन्दा स्या
द्दलिञ्जरे ॥ ६ ॥ गौर्य्यान्तिथिविशेषेस्त्री निधिराजभिदोः पुमान् । निन्दा
स्याद्दपवादेपि कुत्सायामपि योषिति ॥ ७ ॥ पदं शब्दे च वाक्ये च व्यवसा
यप्रदेशयोः । पादतच्चिह्नयोः स्थानत्राणयोरङ्कवस्तुनोः ॥ ८ ॥ श्लो
कपादेपि च क्लीवं पुल्लिङ्गः किरणे पुनः । पादो बुधे तुरीयांशे शैलप्रत्यंतप
र्वते ॥ ९ ॥ चरणे च मयूखे च बन्दा लताकारे स्मृता । भिक्षुक्यामपि बन्द्या
द्ध्वबिन्दुर्दन्तक्षतान्तरे ॥ १० ॥ भुवोर्मध्ये रूपकार्य्ये प्रक्तौ पृषते पुमा
न् । वेदिमध्येन्यलिङ्गः स्याद्बुद्बुद्ध्याणशमयोः ॥ ११ ॥ भेदो द्वैधे वि
शेषे स्यादुपजापे विदारणे । मदो रेतसि कस्तूर्य्यां गर्व्वे हर्षेभदानयोः
॥ १२ ॥ मन्दोऽतीक्ष्णे च मूर्खे च स्वैरे चाभाग्यरोगिणोः । अल्पे च त्रिषु
पुंसि स्याद्धस्तिजात्यंतरे शनौ ॥ १३ ॥ मृदुः स्यात्कोमलेऽतीक्ष्णे रदो दन्ते
विलेखने । विदा ज्ञाने च निर्द्दिष्टा मनीषायाञ्च योषिति ॥ १४ ॥ वेदः श्रुतौ

चवृत्ते चवेदिःस्यात्पण्डितेपुमान्। स्त्रियामंगुलिमुद्रायांस्यात्परिष्कृतभू मेदि॰
तले ॥ १५ ॥ शादःस्यात्कर्द्दमेशष्पेस्वादुर्मिष्टमनोज्ञयोः । सूदस्तुक दान्त॰
थितःसूपकारेचव्यञ्जनान्तरे ॥ १६ ॥ स्वेदस्तुस्वेदनेघर्मेहृद्क्लीबंबुक्क
चित्तयोः । ॥ दचिः ॥ अङ्गदःकपिभेदेनाकेयूरेतुनपुंसकम् ॥ १७ ॥
अङ्गदायाम्यदिग्दन्तिहस्तिन्यामपियोषिति । अर्द्धेन्दुरर्द्धचन्द्रेस्या
द्गलहस्तनखाङ्कयोः ॥ १८ ॥ अर्द्धेदुःस्यादनिप्रौढस्त्रीयोन्यङ्गुलि
येजने । अर्बुदोमांसकीलेस्यात्पुरुषेदशकोटिषु ॥ १९ ॥ महीधर
विशेषेनाथास्पदंस्पदकृत्ययोः । आमन्दोवासुदेवेस्यान्खड्गभेदेच
योषिति ॥ २० ॥ आक्रन्दःक्रन्दनेह्वानेमित्रदारुणयुद्धयोः । भ्रा
तर्य्यपिचपुंसिस्यादामोदोगन्धहर्षयोः ॥ २१ ॥ ककुद्स्त्रीककुदोप्य
स्त्रीवृषाङ्कराड्ध्वजेवरे । क्षणदोगणकेरात्रौक्षणदाक्षणदंजले ॥ २२ ॥
कपर्द्दःखण्डपरशोर्जटाजूटेवराटके । कर्णोन्दुःक्षिप्पिकायांकर्णपा
ल्यामपिस्त्रियाम् ॥ २३ ॥ क्रव्याद्रक्षसिपुंसिस्यान्मांसाशिन्यन्यलिङ्ग
कः । कामदाकामधेनौस्त्रीकामदातरिवाच्यवत् ॥ २४ ॥ कुमुद्चिषुस्या
त्कृपणेकैरवेतुनपुंसकम् । कुमुदंकैरवेरक्तपद्मेस्त्रीकुम्भिकौषधौ ॥ २५ ॥
गम्भार्य्यांपुंसिदिग्नागनागशाखामृगान्तरे । कुसीदंजीवनेवृद्ध्याक्लीबंचिषु
कुसीदिके ॥ २६ ॥ कौमुदःस्यात्कार्त्तिकेचचन्द्रिकायांतुकौमुदी । गोष्पदं
गोष्पद [illegible]गवांचगतिगोचरे ॥ २७ ॥ गोविन्दोवासुदेवेस्याद्गवाध्य

मेदि० क्ष्वेडूस्थितौ । गोनर्द्दमपिकैवर्त्तीमुस्तकेपुंसिसारसे ॥ २८ ॥ जलदो
दान्त० मुस्तकेमेघेजीवदोवैद्यविद्विषोः । नरद् स्त्रियां न्नवेपिस्यात्कारण्डेचविद्रु
मभे ॥ २९ ॥ तोयदोमुस्तकेमेघेपुमानाज्येनपुंसकम् । दरद् स्त्रियांप्र
पातेपिभयपर्वतयोरपि ॥ ३० ॥ दारदोविषभेदेस्यात्पारदोहिंगुलेपु
मान् । दायादस्तुभवेत्पुंसिसपिण्डेतनयेपिच ॥ ३१ ॥ दृषद्निष्पेष
णशिलापट्टप्रस्तरयोःपुमान् । धनदस्तुकुवेरःस्यात्पुलिङ्गोदातरिचि
षु ॥ ३२ ॥ नलदंस्यात्पुष्परसोशीरमांसीषुनद्वयोः । नर्मदःकेलिस
चिवेनर्मदासरिदन्तरे ॥ ३३ ॥ निर्वादःस्याल्लोकवादेपरिनिष्ठितत्त
वादयोः । निषादःस्वरभेदेस्याच्चण्डालेधीवरान्तरे ॥ ३४ ॥ प्रम
दःसंमदेमत्तेस्त्रियामुत्तमयोषिति । प्रसादोऽनुग्रहेकाव्यगुणस्वास्थ्यप्र
सत्तिषु ॥ ३५ ॥ प्रणादस्तुपुमांस्तारशब्देचश्रवणामये । प्रासादोदेव
नृपयोर्गृहेथवरदास्त्रियां ॥ ३६ ॥ कन्यायांवाच्यलिङ्गस्तुप्रसन्नेचस
मर्द्धके । भसद्स्त्रीभास्वरेयोनौमर्य्यादासीमनिस्थितौ ॥ ३७ ॥ माकन्दः
सहकारेस्त्रीधात्रीनगरभेदयोः । मुकुन्दोनिधिभिद्विष्णुरत्नभेदेचकुन्दु
रौ ॥ ३८ ॥ मेनादस्तुपुमान्केकिमार्ज्जारछगलेषुच । विशदःपाण्ड
रेव्यक्तेशरद्स्त्रीवत्सरेप्यृतौ ॥ ३९ ॥ शारदोऽब्देस्त्रियांतोयपिप्पलीसप्तप
र्णयोः । सस्येक्लीवंशरज्ज्ञातनूतनाप्रतिभेचिषु ॥ ४० ॥ षड्बिन्दुःस्यात्की
टभेदपुण्डरीकाक्षयोःपुमान् । सम्पद्भूतौगुणोत्कर्षेहारभेदेपिचस्त्रिया

म् ॥ ४१ ॥ सम्विद्स्त्रियांप्रतिज्ञायामाचारज्ञानसङ्गरे । सम्भाषणोक्ति मेदि०
प्रकारेसङ्केतेनाम्नितोषणे ॥ ४२ ॥ सम्भेदःस्फुटनेसङ्गेस्तुनद्याश्च दान्त०
नामयोः । ॥ दचतुः ॥ अभिष्यन्दोनिवृद्धौस्यादास्रावेऽक्षिगदेपिच
॥ ४३ ॥ अष्टापदोऽस्त्रीकनकेशारीणांफलकेपिच । अष्टापदीचन्द्रम
ल्ल्यांशरभेमर्कटेपुमान् ॥ ४४ ॥ अववादस्तुनिन्दायामाज्ञाविस्रंभयो
रपि । अभिमर्दस्तुपुंसिस्यादवमर्देसम्परायेच ॥ ४५ ॥ एकपदन्तत्का
लेनपुंसकंवर्त्मनिस्त्रीस्यात् । कटुकन्दःपुमान्शिग्रौशृङ्गवेररसोनयोः
॥ ४६ ॥ कुरुविन्दुरत्नभेदेमुस्ताकुल्माषयोःपुमान् । अथकोकनदंर
क्तकुमुदेरक्तपङ्कजे ॥ ४७ ॥ चतुष्पदीतुपद्येनापशौचकरणान्तरे ।
भवेज्जनपदोजानपदोपिजनदेशयोः ॥ ४८ ॥ तमोनुदग्नींदर्केना
प्रतिपत्स्त्रीतिथौमतौ । परिवादोपवादेस्याद्वीणावादनवस्तुनि ॥ ४९ ॥
प्रियंवदःखेचरेनाप्रियवाचितुवाच्यवत् । पीठमर्दोतिधृष्टेस्यान्नायकस्य
प्रियेपिच ॥ ५० ॥ पुटभेदोनदीवक्रेपत्तनातोद्ययोरपि । महाना
दःकुञ्जरेस्यात्वर्षुकाब्देमहास्वने ॥ ५१ ॥ मुचुकुन्दोवृक्षभेदेमान्धातृत
नयेपिच । मेघनादस्तुवरुणेतनयेरावणस्यच ॥ ५२ ॥ विशारदः
पण्डितेचधृष्टेविष्णुपदन्तुखे । क्षीरोदेचस्त्रियांगङ्गारविसंक्रान्तिभेद
योः ॥ ५३ ॥ शशविन्दुःपुमान्वासुदेवेराजान्तरेपिच । शतानन्दोमुने
मेददे वशीन ध्वनेपिच ॥ ५४ ॥ शतह्रदास्त्रियांवज्रेसौदामिन्याञ्चसा

मेदि० र्त्तिता । समर्यादः समीपेनामर्य्यादासहितेत्रिषु ॥ ५५ ॥ दषञ्च ॥
दान्त० भवेदुपनिषद्धर्मवेदान्तविजनेस्त्रियाम् । सहस्रपादःकारण्डेमार्त्तण्डे
यज्ञपूरुषे ॥ ५६ ॥

इतिदान्तवर्गः

************************

धान्त० ॥ धेकं ॥ धेनाधर्म्मेकुवेरेचक्लीवंतुवस्तुनिस्मृतं । धेधाचब्रह्मणिस्त्र्यातोधा
तुस्याद्द्वारकेऽपिच ॥ १ ॥ धीर्ज्ञानेज्ञानभेदेऽपिधूःस्मृताधूननेस्त्रियां ।
॥ धद्विः ॥ अर्द्धंसमांसेखण्डेनाऽब्धिर्नासरसिवारिधौ ॥ २ ॥ अन्धः
स्यात्तिमिरेक्लीवंचक्षुर्हीनेऽभिधेयवत् । आधिःपुमांश्चित्तपीडाप्रत्याशाब
न्धकेषुच ॥ ३ ॥ व्यसनेचाप्यधिष्ठानेविद्धमातपदीप्तयोः । ऋद्धंस
म्पन्नधान्येवस्तुसमृद्धेचवाच्यवत् ॥ ४ ॥ ऋद्धिःस्त्र्यौषधीभेदेसमृद्धा
वपियोषिति । गन्धःप्रतिवेश्यामोदलेशसम्बन्धगन्धके ॥ ५ ॥ गाधःस्था
नेचलिप्सायांगोधानलनिहाकयोः । दधिस्त्रीरेनरवस्याभावेश्रीवाससस
र्जयोः ॥ ६ ॥ दग्धंप्लुष्टेऽन्यलिङ्गंस्यात्स्यितार्कदिशिचस्त्रियाम् । दि
ग्धोविषाक्तवाणेस्यात्पुंसिलिप्तेन्यलिङ्गकः ॥ ७ ॥ दुग्धंप्रपूरितेक्षीरेदु
ग्धाक्षीरविकौषधौ । दोग्धार्थोपजीविकवौवत्सगोपालयोःपुमान् ॥ ८ ॥
नद्धोबद्धेतथोद्वृत्तेगन्धआधौचबन्धने । बन्धुःस्यात्पुंसिबन्धूकेमि
त्रेभ्रातरिबान्धवे ॥ ९ ॥ बाधादुःखेनिषेधेचबुधःसौम्येचपण्डिते । बुद्धो

जिने लक्ष्मवर्णे पुंसि स्याद्बुधिनेन्यवत् ॥ १० ॥ बोधिः पुंसि समाधिभेदेऽपि मेदि०
प्पलपादपे । मधुः पुष्परसे क्षौद्रे मद्ये ना तु मधुद्रुमे ॥ ११ ॥ वसन्तदैत्य धान्त०
भिच्चैत्रे स्याज्जीवन्त्यां तु योषिति । मिद्धं चिन्ताभिसंक्षेपे क्लीबमालस्यवि
भ्रमयोः ॥ १२ ॥ मुग्धस्तु सुन्दरे मूढे मेधा बुद्धौ क्रतौ पुमान् । एधोमासान्त
रेऽध्वा चित्रभेदे वधन्विनां ॥ १३ ॥ गोपीविशाखामल्लकीविप्रुक्तान्नातु
निद्युति । लुब्ध आकांक्षिणि व्याधे वधूः स्त्रीशारिवौषधौ ॥ १४ ॥ स्नुषाप्टी
नवोढासु भार्यापृक्कासु नारी च । व्याधिः कुष्ठे च रोगे ना व्याधो मृगयुदुष्टयोः
॥ १५ ॥ ना समये खे च विधुर्ना कर्पूरेन्दुहारिषु । विद्धं स्याद्वेधिते क्षिप्ते सदृ
शे वाधिते त्रिषु ॥ १६ ॥ विधिर्ना नियतौ काले विधाने परमेष्ठिनि । विधाज
न्नासने चर्द्धौ प्रकारे वेतसे विधौ ॥ १७ ॥ वृद्धो जीर्णे प्रवृद्धे च त्रिषु क्लीबं
मुशैलजे । वृद्धिस्तु वर्द्धने योगेऽप्यष्टवर्गौषधान्तरे ॥ १८ ॥ कालान्तरे चा
भ्युदये समृद्धावपि योषिति । श्रद्धादरे च कांक्षायां श्राद्धं श्रद्धान्विते त्रिषु
॥ १९ ॥ स्कन्धकव्यविधौ क्लीबं शुद्धं स्यात् त्रिषु केवले । निर्दोषे च पवि
त्रे च सन्ध्या स्थितिप्रतिज्ञयोः ॥ २० ॥ स्पर्द्धा संघर्षणेऽपि स्यात् साम्येऽक्रमस
मुन्नतौ । सन्धिः पुमान् सुरङ्गायां भगे संघट्टनेऽपि च ॥ २१ ॥ रूपका
नां मुखाद्यङ्गे साऽवकाशेऽपि कीर्तितः । स्कन्धः स्यान्नृपनावंशे सम्परायसमू
हयोः ॥ २२ ॥ कायेन रुप्रकाण्डे च भद्रादौ छन्दसो भिदि । साधुर्वार्द्धुषिके
चारौ सज्जने वाऽभिधेयवत् ॥ २३ ॥ सिद्धो नाव्यासादौ भेदे योगस्य देवयोनिषु ।

भेदि॰ चिपुनिष्पन्नेस्निग्धंस्नेहयुतेचिक्कणेपिस्यात् ॥ २४ ॥ सिन्धुर्वमथुदेशाब्धिन

धाम्न॰ देनासरितिस्त्रियाम् । सिद्धिःस्त्रीयोगनिष्पत्तिपादुकांतर्द्धिवृद्धिषु ॥ २५ ॥

सुधास्त्रीलेपनेमूर्व्यांस्नुहीगङ्गेष्टकामृते । ॥ धत्रि ॥ अवधिस्त्ववधानेस्यात्सी

म्निकालेबिलेपुमान् ॥ २६ ॥ अगाधमतलस्पर्शेत्रिषुश्वभ्रेनपुंसकं । आनद्धं

मुरजादौचक्लीवंस्यात्सन्दितेत्रिषु ॥ २७ ॥ आविद्धोवाच्यलिङ्गःस्यात्कुटि

लेवपराहते । आबद्धोदृढबंधेस्यात्प्रेमालंकारयोर्द्वयोः ॥ २८ ॥ उत्सेधस्तू

च्छ्रयेनस्त्रीक्लीवंसन्नहनेपिच । उपाधिर्द्धर्मचिन्तायांकुटुम्बव्यापृतेछले

॥ २९ ॥ विशेषणेपुंस्युपाधिःपुंसिव्याजरथाङ्गयोः । कबन्धोऽस्त्रीक्रिया

युक्तव्यपमूर्द्धकलेवरे ॥ ३० ॥ क्लीवंजलेपुंस्युदरेबाहुरक्षोविशेषयोः ।

दुर्विधोवाच्यलिङ्गःस्याद्दुर्गतेपिखलेपिच ॥ ३१ ॥ न्यग्रोधस्तुपुमान्व्याम

वटयोस्त्वशमीतरौ । न्यग्रोधीतूपचित्रायांनिरोधोनाशरोधयोः ॥ ३२ ॥

निषधःकठिनेदेशेतद्राजेपर्वतान्तरे । परिधिर्न्नायज्ञियद्रुशाखायामु

पसूर्यके ॥ ३३ ॥ प्रसिद्धोभूषितेख्यातेप्रणिधिर्नाऽनुचरेचरे । माग

धीस्त्रीकणायूथ्योर्वाच्यवन्मगधोद्भवे ॥ ३४ ॥ पुंसिवैश्यात्क्षत्रियाजेप्यु

क्तजीरकवन्दिनोः । विबधोवीवधस्त्वापिपर्य्याहारेऽध्वभावयोः ॥ ३५ ॥

विस्रब्धोऽनुद्भटेपिस्याद्गाढविश्वस्तयोस्त्रिषु । विबुधोज्ञेसुरेवीरु

त्प्रतानाविटपयोःस्त्रियां ॥ ३६ ॥ सन्नद्धोवर्मितेव्यूढेसम्बाधःसङ्कटेभगे ।

सन्निधिःसन्निधानेपिपुमानिन्द्रियगोचरे ॥ ३७ ॥ संसिद्धिःप्रकृतौ

सिद्धौ मदोग्रायामपि स्त्रियां । सम्बाधो बाधने क्षेपे समाधिर्ना समर्थने मेदि॰
॥ ३८ ॥ ध्याननीवाकनियमे काव्यस्य च गुणान्तरे । ॥ धचतुः ॥ अवरो धान्त॰
धस्तिरोधाने राजदारेषु तद्गृहे ॥ ३९ ॥ अवष्टब्धो विदूरे स्यादाक्रान्ते चावि
लम्बिते । अनुबन्धस्त्वनुबन्धे स्याद्दोषोत्पादे विनश्वरे ॥ ४० ॥ मुख्यानुया
यिबाले च प्रकृतस्यानिवर्त्तने । अनुबन्धी तु हिक्कायां तृष्णायामपि योषि
ति ॥ ४१ ॥ अनिरुद्ध उषानाथे पुंसि पानद्धने ऽन्यवत् । आशाबन्धः स
माश्वासे पुंसि मर्कटजालके ॥ ४२ ॥ इष्टगन्धः सुगन्धौ स्यात् त्रिषु क्ली
बन्तु वालुके । इक्षुगन्धा किलाकोष्ट्रे क्रोष्ट्र्यां काशे च गोक्षुरे ॥ ४३ ॥ उप
लब्धिर्मितौ प्राप्तावपि ज्ञाने च योषिति । उग्रगन्धा ऽजमोदायां वचायां छि
क्किकौषधा ॥ ४४ ॥ कालस्कन्धस्तमाले स्यात्तिन्दुके जीवकद्रुमे । ती
क्ष्णगन्धा वचाराजिकयोः शोभाञ्जने पुमान् ॥ ४५ ॥ तृणगोधा चित्रको
लेकृकलासे ऽपि योषिति । परिव्याधस्तु पुंसि स्याद्वेतसे च द्रुमोत्पले ॥ ४६ ॥
ब्रह्मबन्धुरधिक्षेपे निर्देशे ब्राह्मणस्य ना । महौषधं तु शुण्ठ्यां स्याद्वि
षायां लशुनेऽपि च ॥ ४७ ॥ समुन्नद्धः समुद्भूते पण्डितंमन्यगर्विते । ॥ ध
पञ्च ॥ योजनगन्धा कस्तूर्यां सितायां व्यासमातरि ॥ ४८ ॥

इति धान्तवर्गः

* * * * * * * * * * * * * * * * * * * * * * *

॥ नैकं ॥ नः पुमान्सुगते बंधे द्विरण्डे प्रस्तुते ऽपि च । ॥ नद्विः ॥ अग्नि नान्त॰

वैश्वानरेपिस्याच्चित्रकाख्यौषधौपुमान् ॥ १ ॥ अन्नंभक्तेचभुक्तेस्यादिनः
पत्यौनृपार्कयोः। ऊनंक्लिन्नेचस्तुरतेक्ष्णत्वंसर्वाम्बुकुक्षिषु ॥ २ ॥ घनं
स्यात्कांस्यतालादिवाद्यमध्यमनृत्ययोः। नामुस्ताओघदार्ढ्येषुविस्तारेलो
हमुद्गरे ॥ ३ ॥ त्रिषुसान्द्रेदृढेवाथचिह्नंलक्ष्मपताकयोः। चीनोदेशां
शुकव्रीहिभेदेतन्तौमृगान्तरे ॥ ४ ॥ छन्नंतुरहसिक्लीबंछादितेवाच्य
लिङ्गकम्। छिन्नंकृत्तेत्रिलिङ्गंस्याद्गुडुच्यामपियोषिति ॥ ५ ॥ जनोलो
केमहर्लोकोत्परलोकेचपामरे। जनीसीमन्तिनीवध्वोरुत्पत्तावोषधी
भिदि ॥ ६ ॥ जह्नुःस्यात्पुंसिराजर्षिभेदेचमधुसूदने। ज्यानिर्जीर्णौ
चहानौचतटिन्यामपियोषिति ॥ ७ ॥ जिनोर्हतिचबुद्धेचपुंसिस्याज्जि
त्वरेत्रिषु। ज्योत्स्नाचन्द्रातपेपिस्याज्ज्योत्स्नायुक्तनिशिस्मृता ॥ ८ ॥
ज्योत्स्नीपटोलिकायांस्याज्ज्योत्स्नायुक्तनिशिस्त्रियां। तनुःकायेत्वचिस्त्री
स्यात्त्रिष्वल्पेविरलेकृशे ॥ ९ ॥ दानंगजमदेत्यागेपालनच्छेदशुद्धि
षु। दानुर्दातरिविक्रान्तेदीनास्त्रीमूषिकेस्त्रियां ॥ १० ॥ वाच्यवत्दु
र्गतेभीतेद्युम्नंवित्तेबलेपिच। धनुःपुमान्पियालद्रौराशिभेदेशरासने
॥ ११ ॥ धनन्तुगोधनेवित्तेधानाभृष्टयवेऽपिच। धन्याकेभिनवोद्भिन्नेधेनी
नद्यांनदेपुमान् ॥ १२ ॥ नग्नोवन्दिक्षपणयोःपुंसित्रिषुविवाससि। न्यू
नंगर्ह्योनयोःपानंपीतिभाजनरक्षणे ॥ १३ ॥ भानुर्नाकिरणेसूर्येभि
न्नःस्यात्त्रिषुदारिते। संगतेऽन्यच्चफुल्लेचमानश्चित्तोन्नतौग्रहे ॥ १४ ॥

क्लीबं प्रमाणेप्रस्थादौ मीनोशश्च न्तरे भषे । मुनिः पुंसि वशिष्ठादै वंकसेन तरै जिने ॥ १५ ॥ मृत्स्नामृत्सातु वर्ज्यौः स्त्रीयानं स्यादाहनेगतौ । योनिः स्त्रीपुंसयोस्स्याद्‌ाकरेस्मरमन्दिरे ॥ १६ ॥ रत्नंस्वजातिश्रेष्ठेपिमणावपि नपुंसकम् । रत्ना चस्याज्जंगाख्यामेला पर्ण्यामपिस्त्रियाम् ॥ १७ ॥ लग्नं राश्युदये क्लीवं सक्त लज्जितयोस्त्रिषु । वस्नस्त्वविक्रयेपुंसि वेतनेस्या न्नपुंसकं ॥ १८ ॥ वनंनपुंसकंनीरे निवासालयकानने । वह्निर्वैश्वानरे पिस्याच्चित्रकाख्यौषधौपुमान् ॥ १९ ॥ वानंशुष्कफलेशुष्कस्मृतिकर्मकटेगतौ । विन्नंविचारिते लब्धेबध्नोनामूलरुद्रयोः ॥ २० ॥ श्वापुमान्कुक्कुरे स्थानःस्यानभेदेचवाल्लुनः । श्येनोमूर्खेचाजगरेश्येनः पक्षिणि पांडुरे ॥ २१ ॥ स्वप्नः स्वापेप्रसुप्तस्यविज्ञानेदर्शनेपुमान् । सानुरस्त्री वनेप्रस्थेवात्यामार्गाग्रणीविदे ॥ २२ ॥ स्थानंसादृश्येऽवकाशेस्थितौ वृद्धिक्षयेतरे । स्यानंस्निग्धेप्रतिध्वानेघनत्वालस्ययोरपि ॥ २३ ॥ स्नानंस्नानीयेऽभिषवेसूनंप्रसवपुष्पयोः । सूनापुत्र्यांबधस्थानेगलशुण्डिकयोःस्त्रियां ॥ २४ ॥ सूनुःपुत्रेऽनुजेऽर्कनासूनःकिरणसूर्ययोः । ह नुर्हट्टविलासिन्यां सूनावज्रेगदेस्त्रियाम् ॥ २५ ॥ हयोःकपोलावयवे हीनंन्यूनेयस्त्रिषु । ॥ नत्रिः ॥ अंजनंकज्जलेचापौसौवीरेचरसांजने ॥ २६ ॥ पुंसिज्येष्ठादिगजयोरंजनावानरीभिदि । अंजनीलेप्ययाचावनंप्री नौचरक्षणे ॥ २७ ॥ अयनंपथिभानोरप्युदग्दः

मेदि० स्त्रियांतोगतौ । अपानंतुगुदेक्लीवंपुंसिस्यात्तस्यमारुते ॥ २८ ॥ असं
नान्त० मंक्षेपणेक्लीवंपुंसिस्याज्जीवकद्रुमे । अंगनंप्राङ्गणेयानिकामिन्यामंगना
मता ॥ २९ ॥ अर्जुनःककुभेपार्थेकार्त्तवीर्य्यमयूरयोः । मातुरेकसु
तेपिस्यात्पुंल्लिङ्गोधवलेन्यवत् ॥ ३० ॥ नपुंसकंतृणेनेत्रगदेचाप्यर्जु
नोगवि । उषायांवाक्रुदानद्यांकुट्टिन्यामपिचक्कचित् ॥ ३१ ॥ अह्ना
नोमह्नासह्नायांनान्यलिङ्गस्तुनिर्मले । अर्शोघ्नीनासमूल्यांस्यादर्शोघ्नः
सूरणेपिच ॥ ३२ ॥ असिक्नीस्यादवृद्धान्तःपुरप्रेष्यानदीभिदोः । अ
शनिःस्त्रीपुंसयोःस्याद्द्वयंचलायाम्पवावपि ॥ ३३ ॥ अरत्निर्नासप्रकोष्ठ
ततांगुलिकरेपिच । कफोणावप्यथास्त्रीस्याद्वृश्चिकेभ्रमरेपुमान् ॥ ३४ ॥
अर्थीपुमान्याचकेस्यात्सेवकेचविवादिनि । अध्वानापथिसंस्थानेस्यादव
स्कंधकालयोः ॥ ३५ ॥ अर्वातुरंगमेपुंसिकुत्सितेवाच्यलिङ्गकः । आ
सनंद्विरदस्कन्धेपीठेयात्रानिवर्त्तने ॥ ३६ ॥ आसनीविपणौस्त्रियन्त्वा
मासनोनातुजीरके । आदानंग्रहणेपिस्यादलंकारेचवाजिनां ॥ ३७ ॥
आपन्नःसविपत्प्राप्तिप्राप्तेवाच्यवदीरितः । आत्मापुंसिस्वभावेपिप्रय
त्नमनसोरपि ॥ ३८ ॥ धृतावपिमनीषायांशरीरब्रह्मणोरपि । आ
लानंकरिणांबंधस्तम्भेरज्जौचनस्त्रियाम् ॥ ३९ ॥ ईशानंज्योतिषिक्ली
वंपुंल्लिङ्गःस्यात्त्रिलोचने । उत्तानमगभीरेस्यादूर्द्ध्वास्यशयितेत्रिषु
॥ ४० ॥ उत्थानमुद्यमेतंत्रेपौरुषेपुस्तकेरणे । प्राङ्गणेदूमहर्षेपुमल

नं खंजरीटे स्त्री सर्षप्यां खंजनं गतौ ॥ ५५ ॥ खङ्गी ना गण्डके मंजुघोषे खङ्गध
रे त्रिषु । गर्जनं निनदे कोपे गहनं तु कलिले त्रिषु ॥ ५६ ॥ नपुंसकं गह्वरे
स्याद्दुःखकाननयोरपि । गन्धनमुत्साहे स्यात्प्रकाशने सूचनेऽपि हिं
सायाम् ॥ ५७ ॥ ग्रामीणः शुनि काके पुंसि त्रिषु संभूते ग्रामैः । ग्रावा तु प्रस्त
रे पृथ्वीधरे पुंस्यथ गृञ्जनं ॥ ५८ ॥ विषदिग्धपशोर्मांसे क्लीबं पुंसि रसोन
के । गोस्तनो हारभेदे ना द्राक्षायां गोस्तनी स्त्रियां ॥ ५९ ॥ गोमी शृगाले पुं
सि स्यात्त्रिषु गोमत्युपासके । घटना चलनावृत्त्योश्चंदनो तु नदीभिदि ॥ ६० ॥
चन्दनोऽस्त्री मलयजे भद्रकाल्यां नपुंसकम् । चलनं भ्रमणे कम्पे कम्रे तु वाच्य
लिङ्गकम् ॥ ६१ ॥ चलनी वस्त्रयोधिन्यां वारीभेदेऽपि च क्वचित् । च
र्मी जालिकभित्कोकुलात्थाऽजाहिसूचके ॥ ६२ ॥ चर्मी फलकपाणौ
स्याद्भूर्जे भृङ्गिरिटावपि । चर्मण्वती च फलके चेतना संविदि स्त्रियाम्
॥ ६३ ॥ वाच्यवत्प्राणयुक्तेऽथ छद्मव्याजापदेशयोः । छद्मं नवम
नि क्लीबं बिम्बालंबुषयोः पुमान् ॥ ६४ ॥ छदनं च्छदने पक्षे पिधाने छे
दनं भिदि । कर्त्तने जगनुः पुंसि जन्तौ वैश्वानरेऽपि च ॥ ६५ ॥ जवन
न्तु स्याद्वेगि ह्येनावेगिनि त्रिषु । जननी तु दयायां चाजे नर्मवज्जन्म
नोः ॥ ६६ ॥ जयनं स्यात्तुरङ्गादिसंज्ञाहे विजयेऽपि च । जघनं स्त्रि
याः श्रोणिपुरोभागे कटावपि ॥ ६७ ॥ ज्ञानी स्यात्पुंसि दैवज्ञे ज्ञानयुक्तेऽन्य
लिङ्गकम् । जीवनं वर्त्तने नीरप्राणधारणयोरपि ॥ ६८ ॥ जीवनी जी

वनाचापिजीवन्तीभेदयोः क्रमात्। तपनोऽहृष्करेपिस्याद्भास्करेनिरया मेदि०
न्तरे ॥ ६९ ॥ तनूनःपवनेयूनियुवत्यान्तुनीस्मृता। तलिनंविरले नान्त०
स्तोकेस्वच्छेपिवाच्यलिङ्गकम् ॥ ७० ॥ तमोघ्नःसूर्यवह्नीन्दुबुद्धश
ङ्करविष्णुषु। त्यागीदातरिशूरेऽथतेवनक्रेलिकानने ॥ ७१ ॥ क्रीडा
यान्तेमनत्वार्द्रीकरणेव्यञ्जनेपिच। तेजनःपुंसिवंशेस्यात्तेजनीतृणपू
लके ॥ ७२ ॥ तोदनंव्यथनेतोचेदंशनंदंशवर्म्मणोः। दर्शनंनयनस्व
प्नबुद्धिधर्म्मोपलब्धिषु ॥ ७३ ॥ शास्त्रदर्पणयोश्चाथदमनःपुष्पधीर
योः। दशनःशिखरेदन्तेकवचेतुनपुंसकं ॥ ७४ ॥ दहनश्चित्रकेभल्लातके
ऽग्नौदुष्टचेष्टिते। दृशानंज्योतिषिक्लीवंपुंलिङ्गःस्याद्विरोचने ॥ ७५ ॥ देवनं
व्यवहारेस्याज्जिगीषाक्रीडयोरपि। देवनोऽक्षेषुपुंसिस्याद्देवजीतुपृथिवीध
रे ॥ ७६ ॥ रथवर्त्मन्ययोश्चापिभुजङ्गमतुरङ्गयोः। धन्वीधनुर्द्धरेपिस्या
दर्जुनेककुभद्रुमे ॥ ७७ ॥ धन्वातुमरुदेशेनाक्लीवंचापेस्थलेपिच। धमनो
नाऽनलेभस्त्राध्मापकक्रूरयोःत्रिषु ॥ ७८ ॥ धमनीतुशिराहट्टविलासि
न्योश्चयोषिति। धावनंगमनेऽम्बुशौचपृश्निपर्ण्यांतुधावनी ॥ ७९ ॥ धा
मदेहेगृहेरश्मौस्थानेजन्मप्रभावयोः। नंदनंवासवोद्यानेनंदनोहर्षके
सुते ॥ ८० ॥ नंदीहरप्रतीहारेगर्दभांडेवनद्रुमे। नंदिन्युमायांगंगा
यांननांदृघेनुभेदयोः ॥ ८१ ॥ नलिनीपद्मनीव्योमनिम्नगाकमला
कौ। नपुंसकंनीलिकायांनपुंसिसरसीरुहे ॥ ८२ ॥ निदानंकारणे

बंधनं वधबंधयोः । वंदनीमतिजीवातुकटीमाचलकर्मसु ॥ ९७ ॥ मेदि०
वाहिनीस्यात्तरंगिण्यांसेनासैन्यप्रभेदयोः । वाशिनीमर्त्तकी मत्ताविदग्ध नान्त०
वनितासुच ॥ ९८ ॥ बुधानस्तुगुरौविज्ञेबोधनंगंधदीपने । बोधिनीबो
धिपिप्पल्योर्भमेस्याच्चौ पनेभृतौ ॥ ९९ ॥ भंडनंकवचेयुद्धे खलीकारेपि
मत्द्दयोः । भट्टिनीद्विजभार्यायांनाट्योक्त्याराजयोषिति ॥ १०० ॥ भवनं
स्याद्गृहेभाविभाजनंयोग्यपात्रयोः । भावनानुननाध्याने षथीलोचेधिवासने
॥ १०१ ॥ भुवनंपिष्टपेपिस्यात्सलिलेगगनेजले । भोगीभुजंगमेपिस्याद्ग्रा
मपाचेन्टपेपुमान् ॥ १०२ ॥ विहायमहिषीमन्यराजयोषितिभोगिनी । मद
नः स्मरवसंतद्रुभिद्धूस्तूरसिक्थके ॥ १०३ ॥ मलनः पटवासेना मर्द्दनेतु
नपुंसकं । मसिमंदूषितिकृष्णेऽत्रतुमत्यांतुयोषिति ॥ १०४ ॥ मण्डनंभू
षणेक्लीबंस्यात्रिष्वलङ्करिष्णुनि । मार्जनंनद्दयोर्भोर्द्दैपुंसिस्याल्लोध्रशा
खिनि ॥ १०५ ॥ मालिनीमातृकावृत्तभिदोर्मालिकयोषिति । गैरीचम्पाम
गर्योश्चमन्दाकिन्यांनदीभिदि ॥ १०६ ॥ मानिनीतुस्त्रियांफल्यांमानीमा
नवतिचिषु । मिथुनंतुद्दयोराशिभेदेस्त्रीपुंसयुग्मके ॥ १०७ ॥ मुण्डनं
वपनेत्राणेमेहनंमूत्रशिश्नयोः । मैथुनंस्तुरतेपिस्यात्सङ्गतेपिनपुंसकं
॥ १०८ ॥ यमनंबन्धनेचोपरतौक्लीबंयमेपुमान् । यवनोदेशभेदेना
वेगिवेगाधिकाश्वयोः ॥ १०९ ॥ यवान्यौषधभेदेस्त्रीवाच्यवद्वेगिनिस्मृ
ता । यापनंवर्त्तनेकालक्षेपेनिरसनेपिच ॥ ११० ॥ युवास्यात्तरुणेश्रेष्ठे

मेदि॰ लिसर्गबलशालिनि। युञ्जानः सारथौ विप्रेयोजनेपरमात्मनि॥ १११॥
नाना॰ चतुःक्रोशयायां योगेऽथ रसनं स्वदनेध्वनौ। जिह्वायां तु नपुंसि स्याद्रा
स्नायां रसनास्त्रियां॥ ११२॥ रञ्जनो राग जनमे रञ्जनं रक्तचन्दने।
मुराडा रोचनिकानीलीमञ्जिष्ठास्तु च रञ्जिनी॥ ११३॥ रजनीमोलिनीर
त्रिहरिद्राजतुकास्तु च। राधनं साधनेप्राप्तौ राधना भाषणेस्त्रियां॥ ११४॥
राजाप्रभौ चन्द्रपतौ स्त्रियेर जनीपतौ। यक्षेशक्रे च पुंसि स्याद्रागी रक्त
विकामुके॥ ११५॥ रेचनी चित्रताद न्त्योरोचनी कर्कशे स्त्रियां। रोचना
रक्तकह्लारेगोपित्तवरयोषितोः॥ ११६॥ रोचनः कूटशाल्मल्यां पुंसि
स्याद्रोचके त्रिषु। रोदनं क्रन्दनेऽस्त्रेपि दुरालभौषधौ स्त्रियाम्॥ ११७॥
रोही रोहितकेऽश्वत्थवटपादपयोः पुमान्। लंघनन्तूपवासे स्यात्क्रमणे
प्लवनेपि च॥ ११८॥ ललनाकामिनीनारीभेदजिह्वास्तु योषिति
। लक्ष्म चिह्नप्रधानेऽथ लाञ्छनं नामचिह्नयोः॥ ११९॥ लेखनञ्छ
र्दने भूर्जे लिपिन्यासेऽथ वर्जनं। हिंसात्यागयोर्वपनं बीजाधाने च मुण्डने
॥ १२०॥ वसनञ्छादने वस्त्रे वमनञ्छर्दनेऽर्दने। बर्द्धनम्वृद्धिव
र्द्धिष्णुच्छेदेघट्यां तु बर्द्धनी॥ १२१॥ व्यञ्जनं तेमने चिह्ने श्मश्रुण्यव
यवेऽहनि। व्यसनं च शुभे सक्तौ पानस्त्रीमृगयादिषु॥ १२२॥ दैवा
निष्टफलेपापे विपत्तौ निष्फलोद्यमे। वर्त्तनो वामने क्लीवं वृत्तौ स्त्री प्रेषणा
ध्वनोः॥ १२३॥ नपुंसि तूलनालायां तर्कुपीठे च जीवने। वर्त्तिस्त्रौ चि

पुवत्स्त्रीतुबुद्धेदेवाधिपेपुमान् ॥ १२४ ॥ वचक्नुस्तुपुमान्विप्रेवावदूकेऽभि मेदि०
धेयवत् । वर्णीस्याल्लेखकेचित्रकरेपिब्रह्मचारिणि ॥ १२५ ॥ वर्ष्मदे नान्त०
हप्रमाणाकृतिसुन्दरताक्तिषुस्मृतं । वर्त्मनेत्रच्छदेमार्गेवाजीवाणापक्षि
षु ॥ १२६ ॥ वामनोप्यतिखर्वेचत्रिषुपुंसितुदिग्गजे । हरणवङ्कोठवृक्षे
ऽथवासनंधूपनेपिच ॥ १२७ ॥ वारिधान्याम्बुवस्त्रेचप्रत्याख्याऽज्ञान
योःस्त्रियाम् । वाग्मीपटौसुरचार्येविज्ञानंज्ञानकर्मणोः ॥ १२८ ॥ विनु
न्नंस्तुनिषण्णेचशैवालेपनपुंसकम् । विमानोव्योमयानेचसार्वभौमगृहेपिच
॥ १२९ ॥ घोटकेयानपात्रेचपुन्नपुंसकयोर्मतः । वितानोयज्ञउल्लोचेवि
स्तारेपुन्नपुंसकम् ॥ १३० ॥ क्लीवंवृत्तविशेषेस्यात्त्रिलिङ्गोमन्दतुच्छयोः ।
विक्लिन्नोजरसाजीर्णोशीर्णेचार्द्रेचवाच्यवत् ॥ १३१ ॥ विपन्नंविपदाक्रान्ते
त्रिषुपुंसिभुजङ्गमे । विच्छिन्नंचसमालब्धेविभक्तेऽप्यभिधेयवत् ॥ १३२ ॥
विलग्नंनस्त्रियांमध्येत्रिषुस्यात्लग्नमात्रके । विषघ्नस्तुशिरीषेनागुडूची
त्रिवृतोःस्त्रियाम् ॥ १३३ ॥ व्युत्थानंस्यात्स्वतन्त्रत्वेविरोधाचरणेपिच ।
वृजिनङ्कल्मषेक्लीवंकेशेनाकुटिलेत्रिषु ॥ १३४ ॥ वृषाकर्णोमहेन्द्रेना
वेदनाज्ञानदुःखयोः । वेष्टनंकर्णशष्कुल्यामुष्णीषेमुकुटेवृतौ ॥ १३५ ॥
व्योमवारिणिचाकाशेभास्कररस्यार्चनाश्रये । शकुनिःपुंसिविहगेसौबले
करणान्तरे ॥ १३६ ॥ शयनंसुरतेनिद्राशय्ययोस्तुनपुंसकम् । श
मनंशान्तिवधयोःशमनःश्राद्धदेवते ॥ १३७ ॥ श्वसनःश्वसितेपु

 सिमारुतेमदनद्रुमे । शकुनस्तुपुमान्पक्षिमात्रपक्षिविशेषयोः
 ॥ १३८ ॥ शुभशंसिनिमित्तेचशकुनंस्यान्नपुंसकम् । शङ्खिनीस्त्री
न्तुकायांचोरपुष्प्यांवधूभिदि ॥ १३९ ॥ शङ्खीहरौसमुद्रेनाशङ्ख
वत्यभिधेयवत् । शतघ्नीशस्त्रभेदेस्याद्वृश्चिकाल्यांकरञ्जके ॥ १४० ॥
शासनंराजदत्तोर्व्यांलेखाज्ञाशास्त्रशास्तिषु । शाखीस्यात्पादपेवेदेतुरु
ष्काख्यजनेपुमान् ॥ १४१ ॥ शिखीवह्नौबलीवर्देशरेकेतुग्रहेद्रुमे । म
यूरेकुक्कुटेपुंसिशिखावत्यन्यलिङ्गकः ॥ १४२ ॥ शिल्पीतुवाच्यवत्कारौ
स्त्रियांकोलदलौषधौ । शृङ्गीशृङ्गयुतेनागेवृक्षपर्वतयोरपि ॥ १४३ ॥
श्लेष्मघ्नीमल्लिकायाञ्चज्योतिष्मत्याञ्चयोषिति । शोभनोयोगभेदेना
सुन्दरेवाच्यलिङ्गकः ॥ १४४ ॥ सवनंत्वध्वरेस्नानेसोमनिर्दलनेपि
च । स्तननंध्वनिमात्रेस्यान्मेघशब्देचकुन्थिते ॥ १४५ ॥ समानंस
त्समैकेषुत्रिषुनानाभिमारुते । सन्तानःसन्ततौगोत्रेस्यादपत्येसुरद्रुमे
॥ १४६ ॥ स्पर्शनोमारुतेपुंसिदानेस्पर्शेनपुंसकम् । संस्थानमा
कृतौमृत्यौसंनिवेशेचतुष्पथे ॥ १४७ ॥ स्यन्दनन्तुस्रुतौनीरेतिनिशेना
रथेऽस्त्रियाम् । सज्जनन्तुभवेत्क्लीबमुपरक्षणघट्टयोः ॥ १४८ ॥
वाच्यलिङ्गंकुलीनेस्यात्कल्पनायान्तुयोषिति । सन्धानंस्यादभिषवेतथा
संघट्टनेपिच ॥ १४९ ॥ संपन्नंसाधितेपिस्यात्सम्पत्तिसहितेऽन्यवत् ।
सन्धिनीवृषभाक्रान्ताऽकालदुग्धास्त्रयोःस्त्रियां ॥ १५० ॥ सद्मस्यान्मदि

रैनेरे संख्यानञ्छादनेंम्बुके। सदनम्मन्दिरेनीये स्वामी प्रभुविशाखयोः 
॥ १५१ ॥ सादी तुरङ्गमातङ्गरथारोहेषु दृश्यते । स्थापनं रोपणे पुंसिव 
वेपाठौषधौ स्त्रियाम् ॥ १५२ ॥ सावनीयज्ञकर्मान्ते यजमानप्रचेतसोः ।
साधनं मृतसंस्कारे सैन्ये सिद्धौषधौ गतौ ॥ १५३ ॥ निर्वर्त्तनोपायमेढ्रदापने
ऽनुगमे धने । सामन्त्रीवमुपायस्य भेदे वेदान्तरेऽपि च ॥ १५४ ॥ सीमा
घाटस्थितिक्षेत्रेष्वण्डकोषेऽपि च स्त्रियाम् । सूचना व्यधने दुष्टेगन्धने
ऽभिनयेऽपि च ॥ १५५ ॥ सेचनं रक्षणे सेके सेकाकायाः सेकभाजने । से
वानी स्यात्पुमान्कार्त्तिकेये सेनापतावपि ॥ १५६ ॥ सेवनं सेवनेपास्त्यो
र्हलीरमे च कर्षके । हस्तिनी गजयोषायां जातिभेदे च योषितः ॥ १५७ ॥
हसनं न द्वयोर्हासेऽङ्गारधान्यानुयोषिति । हायनो न स्त्रियां वर्षे पुंस्य
र्चिर्व्रीहिभेदयोः ॥ १५८ ॥ ह्लादिनी वज्रतडितोर्हिण्डनं भ्रमणे रते ।
स्व चतुः ॥ अवलग्नो स्त्रियां मध्ये चिपुस्याल्लग्नमाचके ॥ १५९ ॥ अनू
चानो विनीते स्यात्साङ्गवेदविचक्षणे । अवाचीनमवागन्धे विपर्यस्ते च वा
च्यवत् ॥ १६० ॥ अभिपन्नोऽपराधेऽभिग्रस्ते चापद्गते चिषु । अव
दानं खण्डने स्यान्निवृत्ते च कर्म्मणि ॥ १६१ ॥ अभिमानोऽर्थादिदर्पेऽज्ञा
ने प्रणयहिंसयोः । अनीकिनी स्त्रियां सेनामात्रे सेनाविशेषयोः ॥ १६२ ॥
अधिष्ठानं पुरे चक्रे प्रभावेऽध्यासनेऽपि च । अन्वासनं [illegible] वस्त्रावुप
स्थावनुशोचने ॥ १६३ ॥ अर्य्यमा तु पुमान्सूर्ये पितृदेवा[illegible]रेऽपि च । अ

मेदि॰ थर्वाब्राह्मणेपुंसिवेदेतुस्यान्नपुंसकम् ॥ १६४ ॥ भवेदभिजनःख्यातौज
नान्त॰ न्मभूम्यांकुलध्वजे । कुलेपिचपुमानायोधनंयुद्धेवधेपिच ॥ १६५ ॥
स्यादाकलनमाकांक्षापरिसंख्यानबन्धने । आतञ्चनंप्रतीवापपवना
प्यायनेषुच ॥ १६६ ॥ आराधनंचपचनेप्राप्तौसन्तोषणेपिच । आच्छाद
नंसंपिधानेवस्त्रेऽपवृतिमाचके ॥ १६७ ॥ आस्कन्दनंतिरस्कारेरणेसंशो
षणेपिच । आवेशनंशिल्पिशालेभूतावेशप्रवेशयोः ॥ १६८ ॥ आत्मयो
निःपुमान्कामदेवेचपरमेष्ठिनि । उपधानंविषेगेसडौप्रणयेपिनपुंसकम्
॥ १६९ ॥ उत्सादनंसमुल्लेखोदाहनोदर्त्तनेषुच । स्यादुत्पतनमुत्पत्तौत
थोर्ध्वगमनेपिच ॥ २७० ॥ उद्वर्त्तमुत्पतनेविलेपनेघर्षणेक्लीवं । उदयन
मुदयेक्लीवंवत्सेशागस्त्ययोःपुंसि ॥ १७१ ॥ उद्वाहनंप्रणीतेस्याद्रज्वा
मुद्वाहिनीमता । उपासनंशराभ्यासेप्युपास्तावासनेपिच ॥ १७२ ॥ क
पीतनोगर्दभाण्डशिरीषाम्रातकेषुच । अश्वत्थेचकलापीतुप्लक्षबर्हिण
योःपुमान् ॥ १७२ ॥ कलध्वनिःपुमान्पारावतेपिकमयूरयोः । कंचु
कयन्तःपुराध्यक्षेपिड्गेहेजोङ्गकद्रुमे ॥ १७४ ॥ कात्यायनोवररुचौ
विशेषेचमुनेःपुमान् । काषायवस्त्रविधवार्द्धजरत्युमयोःस्त्रियां ॥ १७५ ॥
कुम्भयोनिरगस्त्येस्याद्वसिष्ठद्रोणयोःपुमान् । कुचन्दनञ्चपद्माङ्गे
द्रुमभेदेरक्तचन्दने ॥ १७६ ॥ कुण्डलीवरुणेकेकिभोगिनोश्चसकु
ण्डले । केसरीतुरगेसिंहेपुन्नागेनागकेसरे ॥ १७७ ॥ क्रौञ्चादनन्तु

र्घेचुल्ल्यां चिंचोटकामृणालयोः । खड्गधेनुः स्त्रियां खड्गपुत्रिकागण्डकस्त्रि मेदि॰
योः ॥ १७८ ॥ गवादनीन्द्रवारुण्यां गवां घासादनाश्रये । गदयित्नुः नान्त॰
पुमान्कामे जल्पाके कामुकेपि च ॥ १७९ ॥ घनाघनो वर्षुकाब्दे मत्तघा
तुककुञ्जरे । चक्रे च घोषयित्नुस्तु विप्रकोकिलयोः पुमान् ॥ १८० ॥ चि
त्रभानुः पुमान्वैश्वानरे चाहस्करेपि च । चालकीतुकरीरे स्यान्नारङ्गेकि
स्कुपर्वणि ॥ १८१ ॥ जलाटनो लोहपृष्ठे जलौकायां जलाटनी । त
पस्वी तापसे चानुकम्प्ये चिप्ययोषिति ॥ १८२ ॥ मांसिका कटुरोहि
ण्योस्तरस्वी शूरवेगिनोः । तपोधनस्तापसे स्यान्मुण्डिर्यां तु तपोधना
॥ १८३ ॥ द्विजन्मा दशने विप्रे दुर्नामा क्लीबमर्शसि । स्याद्दीर्घकोशिका
यां स्त्री देवसेना तु वज्रिणः ॥ १८४ ॥ सुतायामग्निसेनायां देवतानां च यो
षिति । नागाञ्जनेभ स्तम्भ्यां नागयष्टौ च योषिति ॥ १८५ ॥ भवेत्त्रिभुव
नं क्रम्ये सुरते च नपुंसकम् । निर्वासनं हिंसने स्यान्नगरादेर्बहिष्कृतौ
॥ १८६ ॥ निर्भर्त्सनं खलीकारेऽलक्तकेपि नपुंसकम् । निर्यातनं वैरशु
द्धौ दाने न्यासार्पणेऽपि च ॥ १८७ ॥ निशामनं दर्शने स्यादालोचने च न
योः । निशामनमुक्तं दृष्टौ श्रुतौ निरसनं वधे प्रतिक्षेपे ॥ १८८ ॥ निष्ठीवने
प्रजननं योनौ जन्मन्यपि क्लीबं । प्रहसनमपि भङ्गे स्यात्क्षेपे पञ्चाननः शि
वे सिंहे ॥ १८९ ॥ प्रहसनमपि प्रहासे रूपकभेदे च परिहासे । प्रणिधानं प्र
यत्ने स्यात्समाधौ च प्रवेशने ॥ १९० ॥ प्रयोजनं कार्ये त्वोः पलाशीवृ

स्त्ररक्षसोः। अथप्रवचनंवेदेप्रकृष्टवचनेपिच ॥ १९१ ॥ प्रतिपन्नो
न्यलिङ्गः स्याद्विज्ञातेङ्गीकृतेपिच। प्रस्फोटनंतुशूर्पेस्यात्ताडनेचविकाश
ने ॥ १९२ ॥ प्रतिमानंप्रतिच्छायागजकुम्भान्तरालयोः। प्रतियत्नस्तु
संस्कारलिप्सोपग्रहणेषुच ॥ १९३ ॥ प्रत्यर्थीवाच्यलिङ्गःस्याच्छत्रौचाप्र
तिवादिनि। परिज्वातुपुमान्चन्द्रेयाज्ञिकेपरिचारके ॥ १९४ ॥ प्रसाध
नीतुकङ्कत्यांसिद्धौवेशेप्रसाधनं। पयस्विनीनदीधेन्वोर्विभावर्य्याञ्चयो
षिति ॥ १९५ ॥ अथपुण्यजनोयक्षेराक्षसेसज्जनेपिच। पृथग्जनस्तु
पुंलिङ्गः कथितोनीचमूर्खयोः ॥ १९६ ॥ फलकीमत्स्यभेदेनावाच्यवत्फल
शालिनि। वारकीशत्रुचित्राम्बुपर्णीजीवपयोधिषु ॥ १९७ ॥ भूतात्मा
पुंसिनिर्दिष्टोदेहेचपरमेष्ठिनि। महाधनंमहामूल्येस्तुवर्णेसिह्लकेपिच
॥ १९८ ॥ महासेनःकार्त्तिकेयेमहासैन्यपतावपि। मदयिन्तुर्मदयु
तेपुमान्मद्येनपुंसकं ॥ १९९ ॥ महामुनिरगस्त्येनाकुस्तुम्बुरुणिनद्योः।
मातुलानीकलायेस्याद्भंगायांमातुलस्त्रियाम् ॥ २०० ॥ मातुधानोमातुलाहे।
मातुधानीलतान्तरे। मेधावीनाम्नुकेब्राह्म्यांस्त्रियांमेधान्वितेत्रिषु ॥ २०१ ॥
रसायनंविषेपिस्याज्जराव्याधिजिदौषधे। पुल्लिङ्गःपक्षिराजेचविडङ्गा।
ख्यौषधेपिच ॥ २०२ ॥ राजादनंक्षीरिकायांपियालेकिंशुकेपिच। लला
मस्यात्प्रभावेचलाञ्छनध्वजवाजिषु ॥ २०३ ॥ शृङ्गेप्रधानेभूषायाम
पिवालधिपुंड्रयोः। लाङ्गलीनारिकेलेद्वेरेवतीरमणेपुमान् ॥ २०४ ॥

वनेस्याद्गन्धमार्जारेवञ्चकव्याघ्रयोःपुमान् । वर्द्धमानःपञ्चभेदेश मेदि॰
रावेरण्डविष्णुषु ॥ २०५ ॥ विस्मापनःस्यात्कुहकेगन्धर्वनगरेस्मरे । नान्त॰
विसर्जनम्परित्यागेदानेसम्प्रेषणेपिच ॥ २०६ ॥ विरोचनःप्रह्लादसु
तनयेऽर्केऽग्निचन्द्रयोः । विहेठनन्तुहिंसायांमर्द्दनेचविडम्बने
॥ २०७ ॥ भवेद्विहननंविघ्नेहिंसयोस्तूलपिञ्जने । विषयीविषयासक्तेवा
च्यवत्क्लीबमिंद्रिये ॥ २०८ ॥ पुंसिस्यान्नृपतौकामदेवेवैषयिकेपिच । विष्व
क्सेनाफलिन्यांस्याद्विष्वक्सेनोजनार्द्दने ॥ २०९ ॥ विलेपनीतुवेश्यास्त्री
यवाग्वोरपियोषिति । विलासीभोगिनिव्यालेविष्वक्सेनेऽग्निचन्द्रयोः
॥ २१० ॥ वृक्षादनस्तुलट्टेमधुच्छत्रकुठारयोः । वृक्षादनीतुवन्दायांवि
दारीकन्दकेपिच ॥ २११ ॥ वैरोचनिस्तुसुगतेबलिदैत्यार्कपुत्रयोः ।
शिखरीस्यादपामार्गेशैलपादपयोःपुमान् ॥ २१२ ॥ शिखण्डिनीयूथि
कायांगुञ्जायामपियोषिति । शिखण्डीनाकलापेस्याद्गाङ्गेयारिमयूरयोः
॥ २१३ ॥ शृङ्गारीपूगगजयोःसशृङ्गारसुवेशयोः । अथस्त्रीस्मघनाम
च्यांकेतक्यामपियोषिति ॥ २१४ ॥ संमूर्छनमभिव्याप्तावुच्छ्रायमोहयोरपि ।
समुत्थानंसमुद्योगेव्याधीनांनिर्णयेपिच ॥ २१५ ॥ सदादानोऽभ्रमात
ङ्गेऐरावणेगन्धहस्तिनि । स्यात्संवदनमालोचेवशीकारेनपुंसकम् ॥ २१६ ॥
समादानंसमीचीनग्रहणेसौभगाह्निके । संवाहनंवाहनेस्यादङ्गसंदे
रङ्गमर्द्दने ॥ २१७ ॥ समापनंपरिच्छेदेसमाप्तिवधयोरपि । सनातनः

मेदि०
ना०म०

णा स्मृतेऽजेपितृतिथ्यंतरेहरे ॥ २१८ ॥ स्तनयित्नुः पुमान्वारिधरेपिस्त
नितेपिच । सरोजिनीतुकमलाकरेपद्मेचयोषिति ॥ २१९ ॥ समापन्नंस
माप्तेस्यात्प्राप्तेक्लिष्टेवधेपिच । संबाधनंद्वाःसदनेमूलाग्रद्वारपालयोः
॥ २२० ॥ संयमनीयमपुर्य्यांसंयमनंबन्धनेव्रतेपिस्यात् । सारसनम
प्युरस्त्रेतनुचीणांमेखलायांच ॥ २२१ ॥ सामिधेनीतुधाय्यायांसमिध्यपि
चयोषिति । सामयोनिस्तुसामोत्थेब्रह्मकुञ्जरयोरपि ॥ २२२ ॥ सुदर्श
नोहरेश्चक्रेमेरुजंबुद्रुमेपुमान् । नद्योःशक्रनगरेआज्ञौषधिभिदोः
स्त्रियां ॥ २२३ ॥ सुयामुनोवत्सराजेप्रासादेऽभ्रान्तरेऽच्युते । सुकर्मातुपु
मान्योगभेदेस्याद्देवशिल्पिनि ॥ २२४ ॥ सुधन्वाप्रौढधानुष्केचित्रिषुनावि
श्वकर्मणि । सुपर्वानाशरेवंशेपर्वधूमसुरेपिच ॥ २२५ ॥ सुदामातुपु
मान्वारिधरपर्वतभेदयोः । सौदामन्यप्सरोभेदेतडिन्नद्भेदयोःस्त्रिया
म् ॥ २२६ ॥ हर्षयित्नुःपुमान्पुत्रेकाञ्चनेतुनपुंसकम् । ॥ नपञ्च ॥
अथातिसर्जनंदानेवधेपिचनपुंसकम् ॥ २२७ ॥ अपवर्जनंतुदानेनि
र्वाणत्यागयोरपि । अपसर्ज्जनमाम्नातेपरिवर्ज्जनदानयोः ॥ २२८ ॥
अग्रजन्मद्विजेज्येष्ठभ्रातरिब्रह्मणिस्मृतः । अथानुवासनंस्नेहवस्ति
धूपनयोरपि ॥ २२९ ॥ अभिनिष्टानोघ्यक्षरमात्रेपिस्याद्विसर्जनीयेच ।
अन्तेवासीशिष्येस्याच्चण्डालेप्रान्तगेचापि ॥ २३० ॥ स्यादुपस्पर्शनं
स्पर्शेस्नानाचमनयोरपि । उपसंपन्नमुद्दिष्टंनिहतेचसुसंस्कृते ॥ २३१ ॥

कारन्धमीकांस्यकारेधातुवादरतेपिच। कामचारीकामुकेस्यात्स्वच्छ मेदि०
न्दकलविङ्कयोः ॥ २३२ ॥ किष्कुपर्वापुमानिक्षौवेणौपिटगलेपि नाना०
च। कृष्णवर्त्मापुमानग्नौदुराचारेविधुन्तुदे ॥ २३३ ॥ स्याद्गन्ध
मादनोभृङ्गेगन्धकेवानरान्तरे। स्त्रीसुरायान्नगेनस्त्रीचिरजीवीद्वि
काजयोः ॥ २३४ ॥ तिक्तपर्वाहिलमोचीगुडूचीयष्टिषुस्त्रियाम्। द
न्तधावनःखदिरेदन्तकाष्ठेनपुंसकम् ॥ २३५ ॥ स्याद्धूमकेतनःपुंसि
केतुग्रहकृशानुयोः। स्यान्नंदिवर्द्धनोभर्गेपक्षान्तेतनयेपिच ॥ २३६ ॥
प्रतिपादनमुद्दानेप्रतिपत्तौचबोधने। स्यात्पृष्टहायनोधान्यविशेषेच
मतङ्गजे ॥ २३७ ॥ प्रचलाकीमयूरेस्याद्भुजङ्गेचापिदृश्यते। स्या
त्पद्मलांछनोलोकेश्वरेब्रह्मणिभास्करे ॥ २३८ ॥ धनदेचस्त्रिया
न्तारलक्ष्मीवाग्देवतासुच। पीतचन्दनमुद्दिष्टंकालीयकहरिद्रयोः
॥ २३९ ॥ पृष्ठशृङ्गीपुमान्द्वंशभीरौषण्ढवृकोदरे। वरचन्दनमाख्यातं
कालीयेदेवदारुणि ॥ २४० ॥ वरवर्णिनीतुलाक्षाहरिद्रारोचनासुच।
फलिन्यामुत्तमानारीसाध्वीयस्यामपिस्त्रियां ॥ २४१ ॥ मधुसूदनस्तु
पुंसिभ्रमरेवनमालिनि। महारजनमुद्दिष्टंशातकुम्भकुसुम्भयोः
॥ २४२ ॥ स्यान्मृत्युवञ्चनःशंभौश्रीफलद्रोणकाकयोः। वनमालीतुगोवि
न्देवाराह्यांवनमालिनी ॥ २४३ ॥ विषयायीपुमान्नाज्ञिवैषयिकजनेपिच।
इन्द्रियेकामदेवेचविषयासक्तपूरुषे ॥ २४४ ॥ विश्वकर्मा [illegible]

भेदि॰ निभिद्दे वशिल्पिनोः । विप्रकारीस्मृतोचोरद्दशैनेपिविघातिनि ॥ २४५ ॥
नाग॰ वृषपर्वापुमान्दैत्यभेदेपंधकसूदने । व्योमचारीतुनिर्दिष्टोदेवनायो
विहंगमे ॥ २४६ ॥ शकुलादनीस्त्रियांक्ष्माजभेदीकटुकशाकयोः । शाल
ङ्कायनउद्दिष्टोमुनिभेदेचनंदिनि ॥ २४७ ॥ शिवकीर्त्तनस्तुपुंसिभृङ्ग
रीटेसुरद्विषि । श्वेतवाहनइत्येषसुधाधाम्निधनंजये ॥ २४८ ॥ श्वे
तधामापुमानिष्टोघनसारशशिप्लिनयोः । स्यात्षष्टिहायनोधान्यविशेषेकु
ञ्जरेपुमान् ॥ २४९ ॥ संप्रयोगीकलाकेलोकामुकेसंप्रयोजने । हरिचंद
नमस्त्रीस्याचिदशानांमहीरुहे ॥ २५० ॥ नपुंसकंतुगोशीर्षेज्योत्स्नाकुङ्कुम
योरपि । हरिवाहनस्तुपुंसिशचीपतिविवस्वतोः ॥ २५१ ॥ नमद ॥
अन्नावशायीभूपचेमुनिभेदेचनापिते । कलानुनादीरसेंबेकलविंकेकपि
ञ्जले ॥ २५२ ॥ जायानुजीवीपुंसिस्यान्नटेषवकपक्षिणि । सहस्रवेधि
क्लीबंस्याद्रामठेनाम्लवेतसे ॥ ५३ ॥

इतिनान्तवर्गः

॥ ✱✱✱✱✱✱✱✱✱✱✱ ॥

पाप्म॰ ॥ पैकम् ॥ पोतोवालानगर्डपूतेषुपापानरिचक्रो त्रिनः । स्त्रियांतुराक्षसीपानेपूते
पूरितकेचसः ॥ १ ॥ पद्धिः ॥ कल्पःशास्त्रेविधौन्यायेसंवर्त्तेब्रह्मणोदि
ने । कपिनासिंहलकेशाखामृगेचमधुसूदने ॥ २ ॥ कूपःकूपकमृन्मानेग
र्त्तेगुणवृक्षके । स्तूपोद्रोणशलेस्यात्स्तूपःपत्न्यांकूपीस्मृता ॥ ३ ॥

भेदि॰ वर्हेकाच्यांभूषणातूणयोः ॥ १७ ॥ चंद्रेविदग्धेव्याकरणभेदेऽपिकच्छ
पान्त॰ नेबुधेः । कशिपुर्भक्ताच्छाद नयोरेकोत्त्यापृथक्तयोःपुंसि ॥ १८ ॥ का
श्यपऽचक्रोमुनिमृगयोर्भेदेचकाश्यपीक्ष्मायां । कृतपोस्त्रियांदौहित्रेवा
द्येच्छागलकंबले ॥ १९ ॥ कुशेदिनस्याष्टमांशेनास्तूर्येकुशपीपुनः । विट्
सारिकायांकुणपःपूतिगन्धेशवेपिच ॥२०॥ जिह्वापःश्वमुनिमार्जारेप्रताप
स्तापतेजसोः । पादपःपादपीठादौपादुकायांतुपादपा ॥ २१ ॥ रक्तपा
स्याज्जलौकायांडाकिन्यांनातुराक्षसे । विटपोनस्त्रियांस्तंबशाखाविस्तार
पल्लवे ॥ २२ ॥ विटाधिपेनाविकल्पःपुंसिभ्रान्तौपकल्पने । पचतुः ॥ अ
भिरूपोबुधेरम्येऽपलापःप्रेम्ण्यपह्नवे ॥ २३ ॥ अवलेपस्तुगर्वस्याल्लेपनेभू
षणेपिच । उपतापस्त्वरायांस्यादुत्तापगदयोरपि ॥ २४ ॥ जलकूपीकू
पगर्तेपुष्करिण्यांचयोषिति । नागपुष्पस्तुपुन्नागनागकेसरचंपके ॥ २५ ॥
परिवापस्तुपर्युप्तेजलस्थानेपरिच्छदे । परितापस्तुपुंसिस्याद्दुःखेचन
रकांतरे ॥ २६ ॥ परिकल्पोभयेकम्पेप्राप्तरूपोऽज्ञरम्ययोः । पिण्डपुष्पम
शोकेचजवायांचकुशेशये ॥ २७ ॥ बहुरूपःशिवेविष्णौधूनकेसरटेस्मरे
। मेचपुष्पन्तुपिण्डाभ्राम्बुनादेयेनाहरीहये ॥ २८ ॥ विप्रलापोविरोधोक्ता
वपार्थवचनेपिच । बीजपुष्पंमरुबकेतथामदनकेपिच ॥ २९ ॥ वृ
कधूपस्तुसरलद्रवकृत्रिमधूपयोः । वृषाकपिःपुमान्ब्रह्मविष्णुशंकरेजातवेद
सि ॥ ३० ॥ हेमपुष्पमशोकेचजवापुष्पेनपुंसकं ॥ पपंच ॥ भवेद्धाम

रपुष्यन्नुपूगेकाशाम्रकेतके ॥ ३१ ॥ मदि॰

इतिपांतवर्गः यान्त॰

———————*************———————

॥ फैकम् ॥ फोयक्षसाधनेस्फानेभंभावातेऽपिपुंस्ययम् । फंरुक्षोक्तौ फान्त॰
फूत्कृतौचतथानिःफलभाषणे ॥ १ ॥ फद्विः ॥ गुम्फस्तुगुंफनेबाहोरलंका
रेचकीर्त्यते । रेफोरवर्णेपुंसिस्यात्कुत्सितेपुनरन्यवत् ॥ २ ॥ शफंमूलेतरू
णांस्याद्गवादीनांखुरेपिच । शिफाजटायांसरितिमांसिकायांचमातरि ॥ ३ ॥

इतिफांतवर्गः

———————*************———————

॥ बैकं ॥ बःपुमान्वरुणेसिन्धौभगेतोयेगतेतुबा । गंधनेतंतुसन्तानेपुं बान्त॰
स्येववपनेस्मृतः ॥ बद्विः ॥ १ ॥ कम्बुःशंखेऽस्त्रियांपुंसिसंबूकेवलयेगजे ।
कम्बिरंशे चवंशस्य खजाकायांस्त्रियामपि ॥ २ ॥ क्लीबंस्यात्पंडकेनस्त्रीवा
च्यलिंगस्तुविक्रमे । खर्बेसंख्यांतरे क्लीबंनीचेवामनकेत्रिषु ॥ ३ ॥ गर्बोऽ
भिमानेऽवलेपेजंबुःस्यात्पादपांतरे । तथाऽम्बुमेरुसरितिद्वीपभेदेपिचस्त्रि
यां ॥ ४ ॥ डिम्बोभयध्वनावंडेपुप्फुसक्लीबविप्लवे । दर्वीस्त्रियांखजाका
यांफणायामुरगस्यच ॥ ५ ॥ पूर्बंतुपूर्बजेऽपिस्यापूर्बःप्रागाद्ययोस्त्रिषु ।
लम्बापद्मालयागौर्य्योस्त्रिक्तुंब्यामपिस्त्रियां ॥ ६ ॥ विम्बस्तुप्रतिविम्बेपि
मंडलेपुन्नपुंसकं । विम्बिकायाःफलेक्लीबंक्लकलासेपुनःपुमान् ॥ ७ ॥ स

मेदि० म्बः स्यान्मुसलग्रंथलोहमंडलयोपयो। प्रभान्विनेप्नियुत्तम्बोऽप्रकांउद्रुम
शाब्द० गुच्छयोः ॥ ८ ॥ बचिः ॥ कदंबनिकुरम्बेस्यान्नीपसिद्धार्थयोःपुमान् । क
लंबीशाकभेदेस्यात्कडम्बशरयोःपुमान् ॥ ९ ॥ काटम्बःस्यात्पुमान्पक्षिविशे
बेसायकेपिच । गजाह्वाकरिपिप्पल्यांगजाह्वंहस्तिनापुरे ॥ १० ॥ गंधः
र्बः पशुभेदेस्यात्पुंस्कोकिलतुरंगयोः । अंतराभवसत्त्वेचगायनेखेचरेपि
च ॥ ११ ॥ गोडुम्बः शीर्णवृन्तेचगवादन्यांतुयोषिति । द्विजिह्वकुबलेस
र्पेनितम्बःस्कंधपेधसोः ॥ १२ ॥ स्त्रियाःपश्चात्कटिनटेकटकेकटिमात्रके ।
प्रलम्बोदैत्यभेदेस्याच्चपुवेपिपयोधरे ॥ १३ ॥ लतांकुरेऽपिशाखायांहारभे
देप्रलम्बने । भूजम्बूरपिगोधूमेविकंकतफलेस्त्रियां ॥ १४ ॥ हेरम्बोवि
घ्नराजेस्यान्माहिषेशौर्यगर्विते । बचतुः ॥ राजजम्बूस्तुजम्बूभित्पिंडखर्जू
रयोःस्त्रियां ॥ १५ ॥ सलम्बिनहो न्यबद्धिंसेक्रमेलकसुमोःपुमान् । श
तपर्वाचदूर्वायांवचाभार्गवयोषितोः ॥ बपंच ॥ १६ ॥ धूलीकदम्बोनीपेस्या
त्तिनिशेवहणद्रुमे । शृगालजम्बूर्गोडिम्बेतथाघोटाफलेस्त्रियां ॥ १७ ॥

इतिबांतवर्गः

*************

शाब्द० ॥ भैकं ॥ भम्नक्षत्रेगभस्तौस्त्रीपुंसिस्याद्भृगुनंदने । भूःस्यान्माचेकथिताध
रण्यामपियोषिति ॥ १ ॥ भद्विः ॥ कुम्भोराश्यंतरेहस्तिमूर्द्धांसेराक्षसांतरे
। कार्मुकेवारनार्य्यांचघटेक्लीबंतुगुग्गुलौ ॥ २ ॥ स्त्रियामुखाकटूफलयोःपु

म्भिकायांचपाटलौ। गर्भोभ्रूणेऽर्भकेकुक्षौसंधौपनसकंटके॥ ३ ॥ जंभोदैत्य भद्रि॰
विशेषेदन्तेजम्बीरभक्षणयोः। जृम्भाविकाशजृम्भणयोस्त्रिषुडिंभोपिबालि भा ग॰
शेबाले॥ ४॥ दंभस्तुकैतवेकल्केदृम्भूःस्त्रीसर्पवज्रयोः। नाभिर्मुख्यनृपेचक्र
मध्यक्षत्रिययोःपुमान् ॥५॥ द्वयोःप्राणिप्रतीकेस्यात्स्त्रियांकस्तूरिकामदे
। निभस्तुकथितोव्याजेपुंलिंगःसदृशेत्रिषु॥ ६॥ रंभाकदल्यप्सरसोर्नावे
णौवारणांतरे। विभुःप्रभौसर्वगतेशंकरब्रह्मणोस्तुना॥ ७॥ शंभुःपुंसि
महादेवेपरमेष्ठिनिचार्हति। शुभोयोगेशुभंक्षेमेवाच्यवच्छोभनेलिंगि
॥ ८ ॥ खसंचारिपुरेस्त्रीतुशोभाकांतीच्छयोर्मता। सभासामाजिकेगोष्ठ्यां
द्यूतमंदिरयोरपि॥ ९॥ स्वभूर्नाब्रह्मणिहरेस्तंभःस्थूणाजडत्वयोः। ॥ भ
त्रिः॥ आरंभस्तुत्वरायांस्यादुद्यमेवधदर्पयोः॥ १०॥ आत्मभूर्नाविधौका
मेप्यृषभस्त्वौषधांतरे। स्वरभिदृषयोःकर्णरंध्रकुंभीरपुच्छयोः॥ ११॥ उ
भ रस्यःस्मृतःश्रेष्ठेस्त्रीनरकारयोषिति। ऋषभीस्त्र्यांशिरालायांविधवा
यांक्वचिन्मता॥ १२॥ ककुप्स्त्रियांप्रवेण्यांदिक्शोभासुचंपकस्रजि। ककु
भोरागभेदेपिवीणांगेऽर्जुनपादपे॥ १३॥ कटभीवृक्षभेदेपिज्योतिष्मत्याम
पिस्त्रियां। करभोमणिबंधादिकनिष्ठांतोष्ट्रतत्सुते॥ १४ ॥ कुसुंभंहेम
निमहारजनेनाकमंडलौ। गर्दभंश्वेतकुमुदेगर्दभोगंधभिद्यपि॥ १५॥ रा
सभेगर्दभीक्षुद्रजंतुरोगविशेषयोः। दुर्लभस्त्रिषुदुष्प्रापेकाच्छूरेदुंदुभिःपुमान्
॥ १६॥ वरुणेदैत्यभेदेप्यक्षबाक्षविंदुचिकद्वये। निशुंभःशुंभकार्यस्य

मेदि० मनयेदंनिकौषधौ ॥ १७ ॥ वल्लभोदयितेऽध्यक्षे सल्लक्षणतुरंगमे
भा न० । वर्षाभूः स्त्री च शोथघ्न्यां भूलताप्लवयोः पुमान् ॥ १८ ॥ विष्कंभो योगभे
दे स्यादिस्तारप्रतिबिम्बयोः । रूपकांगप्रभेदे च बंधभेदे च योगिनां ॥ १९ ॥
विस्रंभः केलिकलहे विश्वासे प्रणयेऽपि च । विष्टंभः प्रतिबंधे स्यात्प्रभेदे चाम
यस्य च ॥ २० ॥ वृषभः श्रेष्ठवृषयोर्वैदर्भी रीतिभिद्यपि । वैदर्भवाक्यव
क्रत्वे शरभस्तु पशोर्भिदि ॥ २१ ॥ करभे वानरभिदि सनाभिर्ज्ञातितुल्य
योः । सुरभिः शल्लकीमातृभिन्मुरागोषु योषिति ॥ २२ ॥ चंपके च वसंते च
तथा जातीफले पुमान् । स्वर्णे गंधोत्पले क्लीबं सुगंधिकांतयोस्त्रिषु ॥ २३ ॥
विख्याते शचिवे धीरे चैत्रेऽपि च पुमानयं । ॥ भचतुः ॥ अनुष्टुप्स्यात्सरस्वत्यां
छंदोभेदे च योषिति ॥ २४ ॥ अवष्टंभः सुवर्णे च स्तंभप्रारंभयोरपि । शा
तकुंभं सुवर्णे स्याच्छातकुम्भोऽश्वमारके ॥ २५ ॥

इति भांतवर्गः

———✻✻✻✻✻✻✻✻✻✻✻———

मान० ॥ मैकं ॥ मो यमे समयेऽपि स्याद्विधे च मधुसूदने । मा स्त्री पद्मालयायां
स्यात्पुल्लिंगश्चन्द्रशेखरे ॥ १ ॥ मद्विः ॥ आमोहृत्कृद्रिदोः पुंसि स्याद्रूप
कान्यलिंगकः । उमाऽतसी हैमवती हरिद्राकीर्तिकांतिषु ॥ २ ॥ ऊर्मिः
स्त्रीपुंसयोर्वीच्यां प्रकाशे वेगभङ्गयोः । वस्त्रसंकोचरेखायां वेदनापीडयोर
पि ॥ ३ ॥ क्रमः स्यात्क्रमे शक्तौ कम्पे चाक्रमणेऽपि च । क्षमा भूमौ तितिक्षा

योस्त्रियांयुक्तेनपुंसकं ॥ ४ ॥ वाच्यवत्क्षतच्छिन्नयोः कामः स्मरेच्छयोःपुमा मेदि०
न्। रेतस्यपिनिकामेचकाम्येपिस्यान्नपुंसकं ॥ ५ ॥ कामिन्नीकामुकेरम्यांस्त्री मान्त०
किंक्षेपवितर्कयोः । निंदायांचपरिप्रश्नेवाच्यलिंगमुदाहृतं ॥ ६ ॥ कृ
मिर्नाकृमिवत्कीटेलाक्षायांकृमिलेखरे । किर्म्मीपलाशेशालायांहेमपुत्र्यां
चयोषिति ॥ ७ ॥ क्षमाऽतसीनीलिकयोःक्षेमोऽस्त्रीलुब्धरक्षणे । चंडायां
नाम्नुभेनस्त्रीकात्यायन्यांतुयोषिति ॥ ८ ॥ क्षौममट्टेदुकूलेऽस्त्रीक्षौमंवल्क
लजांशुके । शणजेऽतसीजेखर्मेपौरुषेकौषजांशुके ॥ ९ ॥ गमो
माऽक्षविवर्त्तेस्यात्पर्यालोचनेऽध्वनि । ग्रामःस्वरेसंवसथेग्रीष्मेचष्म
र्तुभेदयोः ॥ १० ॥ गुल्मःसेनाघकृद्भिदोःसैन्यरक्षणरुग्भिदोः । स्तम्बे
स्त्रियामामलक्यैलवलीवस्त्रवेश्मयोः ॥ ११ ॥ घर्मःस्यादातपेग्रीष्मेप्युष्ण
स्वेदांबुनोरपि । चमूःसेनाविशेषेचसेनामात्रेचयोषिति ॥ १२ ॥ जाल्मः
स्यात्पामरेक्रूरेपुंस्यसमीक्ष्यकारिणि । जिह्मस्तुकुटिलेमंदेक्लीबंतगरपा
दपे ॥ १३ ॥ तोक्मंकर्णमलेपुंसिहरितेचयवेस्वरे । दमस्तुदमथेदं
डेकर्दमेदमनेपुमान् ॥ १४ ॥ दस्मस्तुयजमानेस्यादपिचौरेहुताशने ।
द्रुमोमहीरुहेपारिजातेकिम्पुरुषेश्वरे ॥ १५ ॥ धर्मोऽस्त्रीपुण्यआचारेस्वभा
वोपमयोःक्रतौ । अहिंसोपनिषन्न्यायेनाधनुर्यमसोमपे ॥ १६ ॥ ध्यामं
दमनकेगंधतृणेऽथश्यामलेत्रिषु । नेमिर्नातिनिशेकूपत्रिकाचक्रान्त
योःस्त्रियां ॥ १७ ॥ नेमःकालेऽवधौखण्डेप्राकारेकैतवेऽपिच । पद्मोऽ

मेदि० स्त्रीपद्मकेव्यूहनिधिसंख्यान्तरेऽम्बुजे ॥ १८ ॥ नानागेस्त्रीफञ्जिकाश्री
मान्त० चारटीपन्नगेषुच । ब्राह्मीतुफंजिकायांस्याच्छाकमत्स्यप्रभेदयोः ॥ १९ ॥
ब्राह्मीतुभारतीसोमवल्लरीब्रह्मशक्तिषु । भ्रमोऽम्बुनिर्गमेभ्रान्तौ कुन्दभ्रमण
योरपि ॥ २० ॥ भामः क्रोधेरवौदीप्तौ भीष्मोगांगेयभीमयोः । भीमोऽम्लवेतसे
घोरेशम्भौमध्यमपांडवे ॥ २१ ॥ भूमिर्वसुंधरायांस्यात्स्थानमात्रेपिचस्त्रियां
। भौमः कुजेचनरकेपुंसिभूमिभवेत्रिषु ॥ २२ ॥ यमोऽन्यलिंगोयमजेना
काकेशमनेशनौ । शरीरसाधनापेक्षनित्यकर्मणिसंयमे ॥ २३ ॥ याम
स्तुपुंसिप्रहरेसंयमेपिप्रकीर्त्तितः । यामिः कुलस्त्रीस्वस्रोः स्त्रीयुग्मो
धनुषिसंयुगे ॥ २४ ॥ रश्मिः पुमान्दीधितौचपक्ष्मप्रग्रहयोरपि ।
रमालक्ष्म्यांरमः कांतेरक्ताशोककुमेस्मरे ॥ २५ ॥ रामायोषाहिंगुनद्योः क्ली
बंवास्तुककुष्ठयोः । नाराघवेचवरुणेवैणुकेयेहलायुधे ॥ २६ ॥ हयेच
पशुभेदेचत्रिषुचारौसितेऽसिते । रुमास्तुग्रीवदारेषुबिशिष्टलवणाकरे
॥ २७ ॥ रुक्मंचकांचनेलोहेलक्ष्मीः सम्पत्तिशोभयोः । ऋद्धौवधेच
पद्मायांवृद्धिनामौषधेपिच ॥ २८ ॥ स्त्रीफलिन्यांवमिर्वान्तौस्त्रियांपुंसि
हुताशने । वामंधनेहरेपुंसिकामदेवेपयोधरे ॥ २९ ॥ वल्गुप्रतीपसव्ये
षुत्रिषुनार्य्यांस्त्रियामथ । वामीसृगालीवडवारासभीकरभीषुच ॥ ३० ॥ श
मीसक्तुफलायाञ्चशिंबिकायांचवागुजौ । श्यामोवटेप्रयागस्यवारिदेवृद्ध
दारके ॥ ३१ ॥ पिकेचकृष्णहरितोः पुंसिस्यात्तद्वतित्रिषु । मरिचेसिं

धुलवणेक्लीवंस्त्रीशारिवैाषधा ॥ ३२ ॥ अप्रस्तूताङ्गनायांचप्रियंगावपि मेदि०
वागुजैा । यमुनायांचियामायांकृष्णचिवृतिकैाषधैा ॥ ३३ ॥ नीलिकाया मान०
मथश्यामोमासेमंडपकालयोः । मुष्मंतेजसिस्तूर्येनासमासंवत्सरेस्त्रियां
॥ ३४ ॥ सर्वसाधुसमानेषुसमंस्यादभिधेयवत् । सीमाघाटस्थितेक्षेत्रे
क्षेर्वंडकोषेपिचस्त्रियां ॥ ३५ ॥ सूक्ष्मंस्यात्कैतवेऽध्यात्मेपुंस्यणोचिषु
चाल्पके । सूमंक्षेीरेचनभसिसोमस्तुहिमदिधितैा ॥ ३६ ॥ वा
नरेचकुवेरेचपितृदेवेसमीरणे । वस्तुप्रभेदेकर्पूरेनीरेसोमलतैाषधैा
॥ ३७ ॥ हिमंतुषारमलयोद्भवयोःस्यान्नपुंसकं । शीतलेवाच्यलिं
गोऽथहोमिन्नापावकेघृते ॥ ३८ ॥ मत्रिः ॥ अधमःस्यान्न्यूनगर्ह्यजनेप्या
गमःशास्त्रआगमे । आश्रमोब्रह्मचर्यादैावानप्रस्थेवनेमठे ॥ ३९ ॥
अस्त्रियामुत्तमादुग्धिकायांचिषुचभद्रके । उद्दामोबंधरहितस्तंत्रेचप्र
चेतसि ॥ ४० ॥ कलमःपुंसिलेखन्यांशालैापाटच्चरेपिच । कुसुमंस्त्री
रजोनेत्ररोगयोःफलपुष्पयोः ॥ ४१ ॥ कृत्रिमंलवणभेदेनासिह्लकेरपि
तेचिषु । गोलोमीश्वेतदूर्वायांस्याद्वचाभूतकेशयोः ॥ ४२ ॥ गोधूमोना
गरंगेस्यादोषधिव्रीहिभेदयोः । गैातमोनामुनैाबुद्धेरोचनीदुर्गयोःस्त्रियां
॥ ४३ ॥ तलिमंकुट्टिमेतल्पेचंद्रहासेवितानके । दाडिमस्तुचिलिंगः
स्यादेलायांकरकेचिषु ॥ ४४ ॥ निष्कमोबुद्धिसम्पत्तैानिर्गमेदुष्कुलेपिच
। निगमोवाणिजेपुर्यांकटेवेदेवणिक्पथे ॥ ४५ ॥ नियमोसंयमायांप्र

मेदि० प्रतिज्ञानिश्चयेब्रूते । नैगमंस्यादुपनिषद्वणिजोन्नैगरेपिच ॥ ४६॥ प
नान० रमंस्यादनुज्ञायामव्ययंपरमःपरे । प्रथमस्तुभवेदाद्येप्रधानेपिचवाच्य
वत् ॥ ४७ ॥ प्रतिमागजदंतस्यबन्धेचानुकृतावपि । पंचमोरागभेदे
स्यात्स्वरभेदेचपंचमी ॥ ४८ ॥ पांडवानांसपत्न्यांस्त्रीपंचानांपूरणेचिषु
। प्रक्रमःक्रमेऽवसरेमध्यमोमध्यजेन्यवत् ॥ ४९ ॥ पुमान्स्वरेमध्य
देशेप्यवलग्नेतुनस्त्रियां । स्त्रियांदृष्टरजोनार्य्यांकर्णिकांगुलिभेदयोः
॥ ५० ॥ व्यक्षरकंदसितथाललामंलांछनेध्वजे । शृङ्गेप्रधानेभूषायांरश्मि
वालधिपुंड्रयोः ॥ ५१ ॥ तुरंगेचप्रभावेऽथव्यायामःपौरुषेश्रमे । विभ्र
मेदुर्गसंचारेविभ्रमोभ्रांतिहावयोः ॥ ५२ ॥ विद्रुमोरत्नवृक्षेपिप्रवाले
पिपुमानयम् । विलोमस्तुप्रतीपेस्याद्भुजंगेवरुणेश्वनि ॥ ५३ ॥ आम
लक्यांविलोमीचविलोमंचारपट्टने । विक्रमस्तुपुमानक्रांतिमात्रेस्याच्छ
क्तिसंपदि ॥ ५४ ॥ संक्रमःक्रमणेपुंसिनस्त्रीस्याद्दुर्गसंचरे । संभ्रमःसा
ध्वसेपिस्यात्संवेगादरयोरपि ॥ ५५॥ सत्तमःस्यात्पूज्यतमेसाधीयस्युत्त
मेचिषु । सरमाशुक्कुरीदेवशुन्योःस्याद्राक्षसीभिदि ॥ ५६ ॥ सुखमा
ऽनंतशोभायांस्त्रीचारौचसमेचिषु । सुषीमःशीतलेचारौचिषुनापन्नगां
तरे ॥ ५७ ॥ मत्तुः ॥ भवेदनुपमासुप्रतीकिन्यांस्त्रीचिषूत्तमे । अभ्या
गमोविरोधाभिघाताभ्युद्गमनांतिके ॥ ५८ ॥ उपक्रमस्तूपधायांज्ञात्वा
रंभेचविक्रमे । भिक्षायामुपगमःस्त्रीकारेऽन्तिकासर्पणे ॥ ५९ ॥ वस

गुल्मो जलावर्तकच्छपे जलचत्वरे । दंडायामस्तु कीनाशे दिवसे कुम्भसम्भ मेदि०
वे ॥ ६० ॥ प्लवंगमस्तु मंडूके तथा शाखामृगेऽपि च । पराक्रमो विक्रमे स्यात्सा माना०
मर्थ्योद्योगयोरपि ॥ ६१ ॥ महापद्मः पुमान्नागनिधिसंख्यान्तरेषु च ।
यातयामोन्यवज्जीर्णपरिभुक्तोज्झितेषु च ॥ ६२ ॥ सार्वभौमं तु दिग्नागेह
र्वे पृथ्वीपतावपि । ॥ मपञ्च ॥ अभ्युपगमस्तु पुंसि स्वीकारेऽभिवासमागमे
च ॥ ६२ ॥ नक्षत्रनेमिर्तारेवत्यां ना ध्रुवे चंद्रे ।

इति मान्तवर्गः

———***********———

॥ यैमं ॥ योनावायौ यमनेयायाग्निधूमितत्यगेषु । वारणायोगसमज्ञा यान्त०
यानेषु पुमांस्तु गन्तरिख्यातः ॥ १ ॥ ज्यामातरि वसुधायां मौर्व्यां द्युस्त्री
वमस्त्रिगमनेच । नाज्यालनेद्यौस्त्विद शालयचिद श वर्मनोर्योषिति
॥ २ ॥ यद्धिः ॥ अर्घ्यं शिलाजतुन्यधुवेचन्याय्ये चवाच्यवत् । अन्यस्तु
पुंसि मुख्यायामन्तोऽङ्गतेऽधमे चिषु ॥ ३ ॥ अर्घ्यं मधेस्त्ययोग्येस्यादर्घ्योर्थेपि
चवाच्यवत् । अन्योऽसदृशेतरयोरर्ज्यस्स्यात्स्वामिवैश्ययोः ॥ ४ ॥
आस्यं मुखे च तन्मध्ये तद्भवे च स्त्रियां स्थितौ । इज्यादानेऽध्वरेऽर्चायां सं
गमे स्त्रीगुरौ चिषु ॥ ५ ॥ इभ्या करेणुश्रत्नक्योः स्त्रियामाढ्ये च वाच्यवत् ।
कश्यस्त्रिषु कशार्हे स्यात्क्लीबं मद्यास्वमध्ययोः ॥ ६ ॥ कन्या कुमारिकानार्ये
रोमधी राशिभेदयोः । क्षयो रोगान्तरे वेश्मकल्पान्तापचयेषु च ॥ ७ ॥

 कल्यमुप्रभाते क्लीवं स्यात्कल्यो वा क्रश्रुतिवर्जिते । सज्ये नीरोगदक्षेषु क
 ल्याणवचनेपि च ॥ ८ ॥ उपायवचनेपि स्यात्त्रिषु मद्ये तु योषिति । क
क्ष्या बृहतिकायां स्यात्काञ्च्यां मध्येभबंधने ॥ ९ ॥ हर्म्यादीनामुप्रकोष्ठे च
कार्यं हेतौ प्रयोजने । काव्यं ग्रन्थे पुमानुशुक्रे काव्या स्यात्पूतनाधियोः ॥ १० ॥
कांस्यं वाद्यान्तरे पानपात्रे स्यात्तैजसान्तरे । कायः कदे वतेमूर्त्तौ संघे लक्ष्य
स्वभावयोः ॥ ११ ॥ मनुष्यतीर्थे कार्यं स्यात् क्रियायां तू पायचेष्टयोः । आर
म्भे निष्कृतौ पूजा संप्रधारणकर्मसु ॥ १२ ॥ शिक्षा चिकित्साकरणे कुड्यं
भित्तौ विलेपने । कुल्यं स्यात्कीकसे ष्युष्ट्रद्रोणी सूर्प्यामिषेषु च ॥ १३ ॥ कु
ल्या पयःप्रणाल्यां च नद्यां जीवंतिकौषधौ । कुलोद्भवे कुलहिते त्रिषु मान्ये पुमः
पुमान् ॥ १४ ॥ कृत्या क्रियादेवतयोस्त्रिषु विद्विष्टकार्ययोः । गयः स्यात्प
मुराजर्षौ भेदे तीर्थे पुनर्गया ॥ १५ ॥ गव्यं नपुंसकं ज्यायां रागद्रव्येप्यथ
स्त्रियां । गोसमूहे चिलिङ्गन्तु गोदुग्धादौ च गोहिते ॥ १६ ॥ ग्राम्यं स्त्रीक
रणे क्लीवे श्लीलप्राकृतयोस्त्रिषु । गुह्यं रहस्युपस्थे च गुह्यः कमठदंभ
योः ॥ १७ ॥ गुह्यं गुदे ग्रन्थभेदे क्लीवं शाखापुरे स्त्रियां । गृह्या सक्तमृगा
दौना त्रिषु चास्वैरिपक्षयोः ॥ १८ ॥ गेयं तु गीते गेयः स्याद्गातव्ये गायने त्रि
षु । गोप्यो दासीसुते पुंसि रक्षणीयेऽभिधेयवत् ॥ १९ ॥ चव्यं तु चविके क्ली
बं वचायामपि योषिति । चयः समूहे प्राकारमूलबन्धे समाहृतौ ॥ २० ॥
चित्यं मृतकचैत्ये स्याच्चित्या मृतचिता स्त्रियां । चैत्यमायतने बुद्धवेद्ये नो दे

श्यपादपे ॥ २१ ॥ चोद्यंस्यादद्भुतेप्रश्नेचोदनार्हेतुवाच्यवत्। छायास्या
दातपाभावेप्रतिबिम्बार्कयोषितोः ॥ २२ ॥ पालनोत्कोचयोःकान्तिसच्छोभा
पंक्तिषुस्त्रियां। जयाजयंतीतिथिभित्पथ्योमातन्सखीषुच ॥ २३ ॥ अग्निम
न्थेनाजयन्तेनिजयेचयुधिष्ठिरे। जन्यंहट्टेपरीवादेसंग्रामेचनपुंसकम्
॥ २४ ॥ जन्यामातृवयस्यायांजन्यःस्याज्जनकेपुमान्। त्रिषूत्याद्यज
निचोत्स्नवोढाज्ञातिभृत्ययोः ॥ २५ ॥ वरस्निग्धेऽथजन्युस्स्यान्नपुंसिप्रा
ण्यग्निधातृषु। त्रयीत्रिवेद्यांचितयेननानार्थ्योऽम्बुसर्प्ययोः ॥ २६ ॥ ग
रुडाग्रजेस्तुवर्णेचपुंसिक्लीबेरसांजने। तिष्योनक्षत्रभेदेस्यात्कलौधान्या
न्त्ययोषिति ॥ २७ ॥ द्रव्यंस्यात्पित्तलेवित्तेपृथ्व्यादौचविलेपने। क्ली
बेचभेषजेभव्येद्रुविकारेचवाच्यवत् ॥ २८ ॥ दस्युश्चौरेपुंसिरिपौदा
यःसोल्लुण्ठभाषणे। विभक्तव्यपितृद्रव्येतथाहरणदानयोः ॥ २९ ॥
दिव्यंलवङ्गेधात्र्यांस्त्रीवलोदिविभवेत्रिषु। दूष्यंत्रिषुदूषणीयेक्लीबंवस्त्रेष
तद्गृहे ॥ ३० ॥ दूत्यंदूतस्वभावेचभावेकर्मण्यपिस्मृतं। दैत्योऽसुरेमुरायां
तुदैत्याचण्डौषधावपि ॥ ३१ ॥ धन्याधात्र्यामलक्योःस्याद्धन्यंपुण्यव
तित्रिषु। धान्यंव्रीहिषुधन्याकेधिष्ण्यंस्थानाग्निसद्मसु ॥ ३२ ॥ धिष्ण्या
वृक्षेप्यथनयोनीतिद्यूतविशेषयोः। नाट्यन्नौर्य्यत्रिकेलास्येनित्यंस्यान्त्स
ततेपिच ॥ ३३ ॥ शान्तेत्रिषुपथ्यास्त्रीहरीतक्यांहितेत्रिषु। पद्यं
श्लोकेपुमान्शूद्रेपद्यावर्त्मनिकीर्त्तिता ॥ ३४ ॥ पाक्यंबिडाख्यलवणेय

मेदि॰ वक्षारेपुनःपुमान्। प्रायोमरणानशनेमृत्यौवाऽऽकल्यतुल्ययोः ॥ ३५ ॥
यान्त॰ प्रियोहृद्येऽन्यत्रतत्पुंसिवृद्धिनामौषधेधवे। पीयुःकालेरवौघूकेनापुण्यंशे
भनेत्रिषु ॥ ३६ ॥ क्लीबंधर्मेचसुकृतेपुष्यःकलियुगेस्मृतः। नक्षत्रमा
सयोर्भेदेपूज्यःश्वशुरवंद्ययोः ॥ ३७ ॥ पेयम्पातव्यपयसोःपेयाश्रा
णाच्छमण्डयोः। बंध्यस्त्वफलवृक्षादौस्त्रियांस्यादप्रजःस्त्रियाम्
॥ ३८ ॥ बर्य्यापतिंवरयांस्त्रीवरेण्येत्रिषुनास्मरे। बल्यंप्रधानेधातौस्या
त्क्लीबंबलकरेत्रिषु ॥ ३९ ॥ वीर्य्यंशुक्रेप्रभावेचतेजःसामर्थ्ययोरपि
। भयंप्रतिभयेघोरेप्रसूनेकुब्जकस्यच ॥ ४० ॥ भव्यंशुभेचसत्येचयो
ग्येभाविनितुत्रिषु। कर्म्मरङ्गतरौपुंसिस्त्रियांकरिकर्णामयोः ॥ ४१ ॥ क्ली
बमस्थनिभाग्यन्तुस्याच्छुभाशुभकर्मणोः । भृत्योदासेभृतौभृत्यामयु
र्ना किन्नरेमृगे ॥ ४२ ॥ मयःशिल्पिनिदैत्यानांकरभेऽश्वतरेपिच। म
ध्यंविलग्नेनस्त्रीस्यान्न्याय्येऽन्तरेऽधमेपिच ॥ ४३ ॥ मत्स्योमीनेऽथपुंभूम्नि
देशेमन्युःपुमान्क्रुधि। दैन्येशोकेचयज्ञेचमाल्यंकुसुमतत्स्रजोः ॥ ४४ ॥
मायास्याच्छाम्बरीबुद्ध्योर्मायःपीताम्बरेऽसुरे। मूल्यंस्याद्वेतनेप्रश्नेमृत्युर्न्नाम
रणेयमे ॥ ४५ ॥ मेध्यंत्रिषुशुचौरक्तवचायेचनयोःस्त्रियाम्। ययुःपु
मानश्वमेधतुरगेचतुरङ्गमे ॥ ४६ ॥ याप्यस्तुयापनीयस्यान्निन्दितेप्यभि
धेयवत्। याम्याप्राच्याम्भरण्यांचपुंस्यगस्त्येचचन्दने ॥ ४७ ॥ योग्यः
प्रवीणयोगार्होपायशक्तोप्युवाच्यवत्। क्लीबमृद्ध्यौषधेपुष्येनाश्यभ्यासा

र्कयोषितोः ॥ ४८ ॥ रम्या रात्रौ चम्पके ना मनोज्ञे त्वभिधेयवत् । नपुंसकं प मेदि॰
टोलस्य मूले सूरिभिरिष्यते ॥ ४९ ॥ रथ्या रथौघे विशिखावर्त्मनोश्च यान्त॰
योषिति । रथवोढरि पुल्लिङ्गो रूप्यः स्यात्सुन्दरे त्रिषु ॥ ५० ॥ आहतस्वर्णे
रजते रजते च नपुंसकं । लयो विनाशे संश्लेषे साम्ये तौर्यत्रिकस्य च ॥ ५१ ॥
लक्ष्यं स्यादपदेशेऽपि शरव्येऽपि नपुंसकं । लभ्यं युक्ते च लब्धव्ये लास्यं नौर्यत्रिके
मतं ॥ ५२ ॥ नृत्ये च पव्रज्या प्रस्थाने वर्गे पर्यटनेऽपि च । वन्यं त्रिषु वनोद्भू
ते स्त्री वनाम्बुसमूहयोः ॥ ५३ ॥ वाच्यं तु कुत्सिते हीने वचनार्हे च वाच्यव
त् । विंध्या स्त्रियां लवल्यां स्यान्नपुंसि व्याधाद्रिभेदयोः ॥ ५४ ॥ वीक्ष्यं
तु विस्मये दृश्ये पुंसि लासकवाजिनोः । वेश्यं वेश्यागृहे क्लीवं गणिकायां तु
योषिति ॥ ५५ ॥ शल्यं तु न स्त्रियां शङ्कौ क्लीवं क्ष्वेडे तु तोमरे । मदनद्रुमश्वा
विधोर्ना शल्यः शय्या शिल्पाशिषु ॥ ५६ ॥ शय्या स्याच्छयनीये च गुम्फनेऽपि
च योषिति । शून्यं स्यान्निर्जने वाच्यलिङ्गं मल्यां तु योषिति ॥ ५७ ॥ शौ
र्य्यमारभटी शक्त्योः सह्यः शैलान्तरे पुमान् । सोढव्ये वाच्यलिङ्गः स्यादा
रोग्ये तु नपुंसकम् ॥ ५८ ॥ संख्यं समिति संख्या स्यात् कच्चादि विचारयोः
। संध्या पितृप्रसू नद्यन्तरयोर्युगसन्धिषु ॥ ५९ ॥ सत्यं कृते च शपथे
थे तथ्ये त्रिषु तु सद्गति । सव्यं वामे प्रतीपे च स्यादयोनाऽङ्गुतगर्वयोः ॥ ६० ॥
सायः काण्डे दिनान्ते च साध्यो योगान्तरे सुरे । गणदेवविशेषे च साधनीये
तु वाच्यवत् ॥ ६१ ॥ सूर्य्योऽर्कपर्य्योत पने स्त्री तज्जायौषधीभिदोः । स्थेयो

मेदि॰ विवादपक्षस्य निर्णीतरिपुरोहिते ॥ ६२ ॥ सेव्यं क्लीबमुशीरे स्यात्सेवार्हे
अ॰ना॰ पुनरन्यवत्। सैन्यं क्लीबं बले सेनासमवेते तु वाच्यवत् ॥ ६३ ॥ सौम्यो
ऽग्नेनाचित्यनुग्रे मनोज्ञे सोमदैवते। हार्य्यो बिभीतकतरौ हर्तव्ये पुनरन्य
वत् ॥ ६४ ॥ अरण्योऽथ चिषु हृद्यं हृज्जहृद्वितहृत्प्रिये। वशकृद्देदमको
माबृद्धिनामौषधौ स्त्रियाम् ॥ ६५ ॥ यचि ॥ अनयस्तु विपद्दैवाशुभ
योर्व्यसनेषु च। अत्ययोऽतिक्रमे कृच्छ्रे विनाशे दोषकृच्छ्रयोः ॥ ६६ ॥ अ
भ्यो यमभ्रसंघाते क्लीबमभ्युचितेऽन्यवत्। अधृष्या तटिनीभेदे प्रगल्भे
वाच्यलिङ्गकं ॥ ६७ ॥ अवध्यमवधार्थे स्यादनर्थकवचस्यपि। अ
क्षयोऽस्त्री गृहभेदे नाविक्षो निर्व्ययेऽचिषु ॥ ६८ ॥ अहल्या त्वप्सरो
भेदे भार्य्यायां गौतमस्य च। अहार्य्यः पर्वते ना स्यादहर्तव्ये तु वाच्यवत्
॥ ६९ ॥ अभिख्या त्वभिधाने स्याच्छोभायां च यशस्यपि। अभयास्त्री
हरीतक्यामुशीरे च नपुंसकं ॥ ७० ॥ निर्भये वाच्यलिङ्गः स्यादपत्यं
पुत्रयोर्मतं। अगस्त्यः कुम्भयोनौ स्याद्वकसेनतरावपि ॥ ७१ ॥ आशयः
स्यादभिप्राये पनसाधारयोरपि। स्यादातिथ्यमतिथ्यर्थे त्रिलिंगमतिथौ
पुमान् ॥ ७२ ॥ आत्रेयी पुष्पवत्यां स्यान्नदीभेदे च ना मुनौ। आदित्यो
भास्करे देवेप्याम्नायो नियमेपि च ॥ ७३ ॥ उपदेशेपीन्द्रियन्तु हृषीके रे
तसि स्मृतं। उदयस्तु पुमान्पूर्वपर्वते च समुन्नतौ ॥ ७४ ॥ उपायः सा
मभेदादौ तथैवोपगतौ पुमान्। ऊर्णायुर्ना स्त्रियां भङ्गे मेषकम्बलमेषयोः

॥ ७५ ॥ औचित्यमुचितत्वे स्यात्स्वत्येपि च नपुंसकं । कषायो रसभेदे च 
निर्य्यासे च विलेपने ॥ ७६ ॥ अङ्गरागे च न स्त्री स्यात्सुरभौ लोहिते त्रिषु 
। कालेयो दैत्यभेदे स्यात्कालखण्डे नपुंसकं ॥ ७७ ॥ क्षिपण्युस्तु पुमान्दे
हे सुरभौ वाच्यलिङ्गकः । कुलायस्तु पुमान्स्थानमात्रे स्यात्पक्षिवासके
॥ ७८ ॥ क्षेत्रियं क्षेत्रजतृणे परदेहचिकित्स्ययोः । परदाररतासाध्य
रोगयोः क्षेत्रियः पुमान् ॥ ७९ ॥ कौकृत्यमनुतापे स्याद्युक्ताकरणेपि
च । गाङ्गेयस्स्यात्पुमान्भीष्मे क्लीबं स्वर्णकशेरुणोः ॥ ८० ॥ पञ्चुर्यः
कोमले पुण्डरीकसंज्ञकपादपे । कुलत्थिका सुभगयोः स्त्रियामक्षिहितेऽन्यवत्
॥ ८१ ॥ चाम्पेयश्चम्पके स्वर्णे किञ्जल्के नागकेसरे । जघन्यं च मले क्ली
बं चरमे गर्हितेऽन्यवत् ॥ ८२ ॥ जटायुः पुंसि सम्पातेः कनीयसि च गुग्गु
लौ । जरायुरपि नत्यक्तिरजे गर्भाशये पुमान् ॥ ८३ ॥ तपस्या व्रत
चर्य्यायां तपस्यः फाल्गुने पुमान् । द्वितीया तिथिभित्पत्न्योः पूरणे भूमये त्रि
षु ॥ ८४ ॥ दैवयुर्वाच्यलिङ्गस्तु धार्मिके लोकयात्रिके । नादेयी नागर
ङ्गे स्याज्जयायामम्बुवेतसे ॥ ८५ ॥ भूमिजम्ब्वां जवायां च व्यङ्गुष्ठेपि
च योषिति । निकायस्तु पुमाल्लँक्ष्ये सधर्मिप्राणिसंहतौ ॥ ८६ ॥ समुच्च
ये संहतानां निलये परमात्मनि । नेपथ्यः स्यादलङ्कारे रङ्गज्यायां नपुं
सकम् ॥ ८७ ॥ प्रणयः प्रसवे प्रेम्णि याच्ञाविश्रम्भयोरपि । निर्वाणेप्य
थ पर्य्यायः प्रकारेऽवसरे क्रमे ॥ ८८ ॥ प्रलयो मृत्युकल्पान्तमूर्छाया

येषुपुंस्ययं। प्रत्ययःप्रथितत्वेचसनादिज्ञानयोरपि ॥ ८९ ॥ आचारेशपथेरंध्रेविश्वासाधीनहेतुषु । पर्जन्योमेघशब्देपिध्वनदम्बुदशक्रयोः ॥ ९० ॥ प्रसव्यंवाच्यलिङ्गःस्यात्प्रतिकूलानुकूलयोः । प्रकीर्यःपूतिकरजेविनिकीर्येतुवाच्यवत् ॥ ९१॥ प्रणाय्योऽसम्मतेऽपिस्यादभिलाषविवर्जिते । पयस्यन्तुपयोजातहितयोर्वाच्यलिङ्गकम् ॥ ९२ ॥ दुग्धिकाक्षीरिकाकोल्योःस्वर्णक्षीर्यामपिस्त्रियां। पारुष्यंपरुषत्वेचदुर्वाक्येपुंसिगीष्पतौ ॥ ९३ ॥ पानीयन्तुजलेक्लीवंपातव्येवाच्यलिङ्गकं। पौलस्त्यस्तुकुवेरेस्याद्दशग्रीवेपिपुंस्ययम् ॥ ९४ ॥ बलयःकण्ठरोगेनाकङ्कणेपुन्नपुंसकं। ब्रह्मण्यो ब्रह्म[illegible]स्याद्ब्रह्मदारुशनैश्चरे ॥ ९५ ॥ बालेयोगर्द्दभेपुंसिमृदौबालहिते[illegible]त्रिषु। ब्राह्मण्यंब्राह्मणत्वेच समूहेचद्विजन्मनाम् ॥ ९६ ॥ भुवन्युःस्या[illegible]मान्भानौज्वलनेशशलाञ्छने। भुजिष्यस्तुस्वतन्त्रेस्याद्धस्तसू[illegible]कदासयोः ॥ ९७ ॥ स्त्रियंदासीगणिकयोर्मलयःपर्वतान्तरे। शैला[illegible]आरामेचिवृतायान्तुयोषिति ॥ ९८ ॥ मङ्गल्यःस्याच्चायमाणा[illegible]विल्वमसूरके। स्त्रियांशम्यामधःपुष्पीमिसिष्मुक्लावचा[illegible]च ॥ ९[illegible] ॥ रोचनायामथोदध्निक्लीवंशिवकरेत्रिषु। मृगयुःपुंसिगोमायौव्या[illegible]चपरमेष्ठिनि ॥ १००॥ रहस्यास्त्रीनदीभेदेगोपनीयेऽभिधेयवत्। लौ[illegible]त्यंलोहितत्वेस्यात्क्लीवंपुंसिनदान्तरे ॥ १०१॥ वदान्योदानशौ[illegible]स्याच्चारुवादिनिवाच्य

वत्। व्यवायः सुरतेनन्तर्द्धौपुंसिक्लीवंतुतेजसि ॥ १०२ ॥ वक्तव्यंकुत्सि मेदि०
तेहीनेवचनार्हे चवाच्यवत्। विजयःस्याज्जयेपार्थेस्त्रियांतिथ्यन्तरेस्मृता यान०
॥ १०३ ॥ उमासख्यांविस्मयस्स्यादाश्चर्य्यगर्वयोःपुमान्। विनयानुकला
यांस्त्रीशिक्षायांप्रणतौपुमान् ॥ १०४ ॥ विषयोगोचरेदेशेतथाजनप
देपिच। प्रबन्धाद्युत्स्येज्ञातस्तुन्तरूपादिकेपुमान् ॥ १०५ ॥ विशल्या
ग्निशिखादन्तीगुडुचीत्रिपुटासुच। स्वभ्युर्य्यादेवरेश्यालेशाशिङ्वस्यःपा
वकान्तरे ॥ १०६ ॥ मुनिभेदेचमालूरेशालेयःस्यान्मिसौपुमान्। त्रिषु
शाल्युद्भवेक्षेत्रेस्यात्क्षीर्षण्यन्तुशीर्षके ॥ १०७ ॥ सुकेशेपुंसिशैलेयन्ता
लपर्ण्यांत्रसैन्धवे। शैलजेनातुमधुपेशिलातुल्येऽन्यलिङ्गकं ॥ १०८ ॥ सं
स्त्यायःसन्निवेशेचसंस्थानेविस्तृतावपि। सन्नयःसमवायेपिपृष्ठस्थायिब
लेपुमान् ॥ १०९ ॥ समयःशपथाचारसिद्धान्तेषुतथाधिपि। क्रिया
कारेचनिर्द्देशेसङ्केतेकालभाषयोः ॥ ११० ॥ सरिण्युस्तुपुमान्वारिवा
हेस्यान्मातरिश्वनि। सामर्थ्ययोग्यतायांस्यात्क्षमतावपिनपुंसकं ॥ १११ ॥
सौरभ्यन्तुमनोज्ञत्वेसौगन्ध्येगुणगौरवे। सौभाग्यंसुभगत्वेस्याद्योगभेदे
नपुंसकम् ॥ ११२ ॥ हिरण्यंरेतसिद्रव्येशातकुम्भवराटयोः। अक्ष
येमानभेदेस्यादकुप्येचनपुंसकं ॥ ११३ ॥ हृदयंमानसेबुक्कोरसोरपिनपुंस
कम्। ॥ यचतुः ॥ भवेदनुशयोद्वेषेपश्चात्तापानुबन्धयोः ॥ ११४ ॥ अथा
वसायःशेषेस्यात्समाप्तौनिश्चयेपिच। अवश्यायस्तुनीहारेप्यभिधानेपि

मेदि० पुंस्ययं ॥ ११५ ॥ अपसव्यंत्रिलिङ्गन्तुदक्षिणप्रतिकूलयोः । अन्त
यान्त० शय्यामृतेभूमिशय्यायांपितृकानने ॥ ११६ ॥ उपकार्य्योराजसद्मन्यु
पकारोचितेऽन्यवत् । जलाशयोजलाधारेस्यादुशीरेनपुंसकम् ॥ ११७ ॥
तण्डुलीयःशाकभेदेविडङ्गतरुनाम्ययोः । तृणशून्यंमल्लिकायांत्रिषु
स्यात्केतकीफले ॥ ११८ ॥ दाक्षिणात्योनारिकेलेत्रिषुदक्षिणादिभवे
। धनञ्जयोऽर्जुनेवह्निनागभिद्देहमारुते ॥ ११९ ॥ निरामयस्तुपुंसि
स्यादिडिक्केत्रिषुनीरुजि । परिधायोजनस्थानेपरिच्छेदनितम्बयोः
॥ १२० ॥ प्रतिश्रयःसभायाञ्चाश्रयेप्रतिभयम्भये । घोरेपिपाञ्चजन्य
स्तुकृष्णशङ्खेहुताशने ॥ १२१ ॥ प्रावृषेण्यःपुमान्नीपेप्राविट्कालभ
वेत्रिषु । पौरुषेयःकृतेपुंसांविकारेपुरुषस्यच ॥ १२२ ॥ त्रिषुनासङ्घ
बधयोःपुरुषस्यपदान्तरे । फलोदयःपुमान्लाभेत्रिदिवेशालयेपिच
॥ १२३ ॥ भागधेयंमतंभाग्येभागप्रत्याययोःपुमान् । महालयोविहारे
स्यात्तीर्थेचपरमात्मनि ॥ १२४ ॥ महोदयःकान्यकुब्जेचाधिपत्यापवर्ग
योः । महामूल्यःपद्मरागेनामहार्घेन्यलिङ्गकः ॥ १२५ ॥ मार्जारी
यःस्मृतःशूद्रेविडालेकायशोधने । रौहिणेयोन्यवदस्सेनाबुधेचहलायुधे
॥ १२६ ॥ विलेशयस्तुपुल्लिङ्गोमूषिकेचभुजङ्गमे । वैनतेयस्तुगरुडे
स्यात्प्रभाकरसारथौ ॥ १२७ ॥ सम्परायःसमीकेस्यादापदुत्तरकालयोः
। समाह्वयस्तुपशुभिःखगैर्द्यूतेचसङ्गरे ॥ १२८ ॥ भवेत्समुदयःसङ्घेसं

युगेच समुद्गमे । समुदायः समूहे स्याद्युद्धे समुच्छ्रयः पुमान् ॥ १२९ ॥ मेदि॰
विरोधोत्सेधयोः स्थूले स्त्वयोर्गण्डोपलेपिच । गजानां मध्यमगतेप्यसाक यान्त॰
ल्यवरखड्योः ॥ १३० ॥ हिरण्मयः स्तुरज्येष्ठेनास्तुवर्णमयेत्त्रिषु ।
॥ यपंच ॥ कालानुसार्य्यं शैलेयेकालीयेशिंशपाद्रुमे ॥ १३१ ॥ दुग्धताली
यमित्येतद्दुग्धाग्रक्षीरफेनयोः । अथप्रवचनीयस्त्वस्यात्प्रवक्तृप्रवा
च्ययोः ॥ १३२ ॥ वृषाकपायीश्री गौरीवरी जीवन्तिकास्तुच । ॥ यषट् ॥
प्रत्युद्गमनीयमुपस्थेयेधौतांशुकद्वये ॥ १३३ ॥ विम्बकेनप्रिया लक्ष्म्यां

वारस्त्यामपियोषिति ।

इतियान्तवर्गः

——✱✱✱✱✱✱✱✱✱✱✱——

॥ रैकं ॥ रःस्तुनःपावकेनीक्ष्णेऽणःपुंसिस्त्वर्णविन्नयोः । श्री र्वेशरचना रान्त॰
शोभाभारतीसरलद्रुमे ॥ १ ॥ लक्ष्म्यांचित्रिवर्गसम्पत्तिविधोपकरणेषुच ।
विभूतौचमतौचस्त्रीस्तुःस्त्रियांनिर्झरेस्तवे ॥ २ ॥ रद्विः ॥ अरंशीघ्रेचचक्रा
ङ्गेशीघ्रगेपुनरन्यवत् । अग्रंपुरस्तादुपरिपरिमाणेपलस्यच ॥ ३ ॥
आलंबनेसमूहेचप्राग्रेचस्यान्नपुंसकम् । अधिकेचप्रधानेचप्रथमेचाभिधे
यवत् ॥ ४ ॥ अस्त्रःकोणेकचेपुंसिक्लीबमश्रुणिशोणिते । अस्त्रंप्रहरणे
चापेकरवालेनपुंसकम् ॥ ५ ॥ अभ्रंमेघेचगगनेधातुभेदेचकाञ्चने । अ
द्रिःशैलद्रुमार्केनाऽप्यङ्घ्रिर्नापादमूलयोः ॥ ६ ॥ आरचर्मप्रभेदिन्यांपुं

मेदि॰ सिंभेमेश नैश्वरे। आर्द्रानक्षत्रभेदेस्यात्त्रियांक्लिन्नेऽभिधेयवत्॥७॥
रत्न॰ आरुः पुंसितरोर्भेदेतथाकर्कटदंष्ट्रयोः। इन्द्रुःशक्रादित्यभेदयोगभेदानरान्मसु॥८॥ इन्द्राफणिज्झकेस्त्रीस्यादिरभूबाकुसुरम्नुषु। उग्रःशूद्रासुतेक्षत्राद्रुद्रेपुंसिचिषूत्कटे॥९॥ स्त्रीवचाक्षतयोरुष्ट्री कर्कव्यांकरभेपुमान्। उस्रोवृषेचकिरणेप्युस्राजुंन्युपचित्रयोः॥१०॥ ऐन्द्रिःकाकेजयन्तेनाथोड्राःपुंभूम्निनीवृति। ओड्रःख्यातोजवापुष्पेक्षुरंनीरेक्षरंबुदे॥११॥ करोवर्षोपलेरश्मौपाणौप्रत्यायशुण्डयोः। कद्रुस्त्रिषुस्वर्णपिङ्गेनागानांमातरिस्त्रियाम्॥१२॥ कारोबधेनिश्चयेचबलौयत्नेयतावपि। तुषारशैलेपिपुमान्स्त्रियांदूत्यांप्रसेवके॥१३॥ सुवर्णकारिकायांचबन्धनागारबन्धयोः। क्षारोरसान्तरेधूर्तेलवणेकाचभस्मनोः॥१४॥ कारिस्त्रियांक्रियायांस्यादाच्यलिङ्गस्तुशिल्पिनि। कारुर्विश्वकर्मणिनात्रिषुकारकशिल्पिनोः॥१५॥ क्षीरस्तुम्बेजलेकीरःशुकेपुंभूम्निनीवृति। कुरुर्वेपान्तरेभक्तेपुमान्पुंभूम्निनीवृति॥१६॥ क्षुद्रःस्यादधमेक्रूरक्षपणाल्पेषुवाच्यवत्। क्षुद्राव्यंगानटीकंटकारिकासरघासुच॥१७॥ चाङ्गेरीवेश्ययोर्हिंस्रामक्षिकामात्रकेषुच। क्षुरःस्याच्छेदनद्रव्येकोकिलाक्षेचगोक्षुरे॥१८॥ क्रूरस्तुकठिनेघोरेन्हशंसेप्यभिधेयवत्। कृच्छ्रमाख्यातमाभीलेपापसंतापनादिनोः॥१९॥ क्षेत्रंशरीरेकेदारेसिद्धस्थानकलत्रयोः। क्रोष्ट्रीमृगालिकाक्षुद्रविदा

शीलाङ्गुलीषु च ॥ २० ॥ क्षौद्रं मधुनिपानीयेखरः स्यात्तीक्ष्णघर्मयोः । मेदि०
गर्द्दभे स्त्रीदेवताभेदखट्टदर्प्पहरेर्द्दये ॥ २१ ॥ दन्तोपुंसिचिबुम्बेनेखुरंकी पन्न ?
लद्रलेशफे । गरीखरयांकरणे क्लीबंनोपविषेविषे ॥ २२ ॥ गात्रंगजाग्र
जंघादौ क्लीवमङ्गकलेवरे । गीःस्त्रीभाषासरस्वत्योर्गिरिर्न्नानेत्रकग्भिदि
॥ २३ ॥ अद्रौगिरियकेयोषिदृीर्योपूज्येपुनस्त्रिषु । गुन्द्रस्तेजनकेस्त्रीतुप्रि
यङ्गौभद्रमुस्तके ॥ २४ ॥ गुरुस्त्रिलिङ्ग्यांमहतिदुर्जरलघुनोरपि । पुमा
न्निषेकादिकारेपित्रादौसुरमंत्रिणि ॥ २५ ॥ गृध्रःखगान्तरेपुंसिवाच्यलि
ङ्गःथलुब्धके । गोत्राभूगव्ययोर्गोत्रःशैलेगोत्रंकुलाख्ययोः ॥ २६ ॥ संभावनी
यबोधेचकाननक्षेत्रवर्त्मसु । गौरःपीतेऽरुणेश्वेतेविशुद्धेचाभिधेयवत्
॥ २७ ॥ नाश्वेतसर्षपेचन्द्रेनद्दयोःपद्मकेसरे । गौरीत्वसंजातरजःकन्या
शंकरभार्य्ययोः ॥ २८ ॥ रोचनीरजनीपिङ्गाप्रियंगुवसुधासुच । आप
गायाविशेषेपियादृशांपतियोषिति ॥ २९ ॥ घस्रस्तुदिवसेहिंस्रेघोरेभी
मेहरेपिच । चरोऽक्षद्यूतभेदेचभौमेचारेचसेचले ॥ ३० ॥ चन्द्रःकर्पूर
कांपिल्लसुधांशुस्वर्णवारिषु । चक्रःकोकेपुमान्क्लीवंव्रजेसैन्यरथांग
योः ॥ ३१ ॥ राष्ट्रेदम्भान्तरेकुम्भकारोपकरणास्त्रयोः । जलावर्त्तेप्यथच
रुःपुमान्हव्यान्नभाण्डयोः ॥ ३२ ॥ चारःपियालवृक्षेस्याद्गतौबन्धा
पसर्पयोः । चारुर्वृहस्पतौपुंसिशोभनेप्यभिधेयवत् ॥ ३३ ॥ चित्राखुप
र्णीगोडुम्बासुभद्रादंतिकासुच । मायायांसर्पनक्षत्रेनदीभेदेषुचस्त्रियां

॥ ३४ ॥ तिलकालेख्ययोः क्लीबं कर्बुरस्तु तयोरपि । तद्युक्तयोस्त्वन्य
लिंगं चीरी झिल्यां नपुंसकं ॥ ३५ ॥ गोस्तने वस्त्रभेदे च रेखालेखनभेदयोः
। चुक्रं वृक्षाम्ल चांगेर्यो स्त्रीपुंस्यम्लेऽम्लवेतसे ॥ ३६ ॥ चैत्रं मृते देवकुले नाभू
भृन्मासभेदयोः । चौरः पाटच्चरे पि स्याच्चौरपुष्पौषधावपि ॥ ३७ ॥
छत्रा मिसावतिच्छत्रे कुस्तुम्बुरुशिलींध्रयोः । नपुंसकं चातपत्रे छिद्रं दूष
णरंध्रयोः ॥ ३८ ॥ जारी स्यादोषधीभेदे स्त्रियामुपपतौ पुमान् । जीरस्तु
जरणे खड्गे टारे रंगतुरंगयोः ॥ ३९ ॥ तरस्तु तरणे पुंसि टंशालीपिटको
णरी । तंत्रं कुटुम्बकृत्ये स्यात्सिद्धांते चौषधोत्तमे ॥ ४० ॥ प्रधाने तंतुवाये च
शास्त्रभेदे परिच्छदे । श्रुतिशाखांतरे हेतावुभयार्थप्रयोजके ॥ ४१ ॥
इतिकर्तव्यतायां च तन्त्री वीणागुणे मता । अमृतादेवशिवयोस्तंद्री निद्रा
प्रमीलयोः ॥ ४२ ॥ तारो वानरभिन्मुक्ताविशुद्ध्योः शुद्धमौक्तिके । नान
क्षत्रेऽक्षिमध्ये च न नारूप्ये नपुंसकं ॥ ४३ ॥ स्त्री बुद्धदेवताभेदे वालि
गोप्यनिभार्ययोः । त्रिलिंगोऽत्युच्चशब्दे चाताम्रं शुल्वेऽरुणेपि च ॥ ४४ ॥
तीव्रा तु कटुरोहिण्यां राजिकागंडदूर्वयोः । त्रिष्वत्युष्णे नितांते च कटौ तीरं तु
रोधसि ॥ ४५ ॥ पुंसि त्रपुणि तोत्रं तु प्राजने वेणुकेपि च । दरोऽस्त्री साध्वसे ग
र्तेकंदरे तु दरी स्मृता ॥ ४६ ॥ दरमव्ययं मनागर्थे दस्रः खरेऽश्विनीसुते
। दारु स्यात्पित्तलेकाष्ठे देवदारौ नपुंसकं ॥ ४७ ॥ द्वारं निर्गमनेपि स्यादु
पायेधरो गिरौ । कर्पासतूलके कूर्मराजे वस्त्वंतरेपि च ॥ ४८ ॥ धराविश्व

अरण्यांचस्त्रीगर्भाशयभेदयोः। धात्रीजनन्यामलकीवसुमत्युपमातृषु मेदि॰
॥ ४९ ॥ धारासैन्याग्रिमस्कंधेतुरंगगतिपञ्चके। घटादिच्छिद्रसन्तत्योः रत्न॰
प्रपातेस्याद्द्रवस्यच ॥ ५० ॥ खड्गादेर्निशितमुखेधारोऽश्रावांतरेऽप्यृणे। धीरोधै
र्यान्वितेस्वैरेधीरःस्यात्त्रिषुपण्डिते ॥ ५१ ॥ स्वच्छन्दे धैर्ययुक्तेचकुंकुमेतुन
पुंसकं। स्त्रियांश्रवणतुल्यायांधीरास्वंधूम्रवदीरितं ॥ ५२ ॥ तथावास्तुस्थानभे
देनरेऽजेमनुजेऽर्जुने। क्लीवंतुरामकर्पूरेनक्रंस्यादग्रदारुणि ॥ ५३ ॥
नासायांपुंसिकुम्भीरेनारस्तर्णकनीरयोः। नीव्रंनेमौवल्मीकेदारेवनीभेऽ
पिकानने ॥ ५४ ॥ नेत्रंपथिगुणेवस्त्रभेदेमूलेद्रुमस्यच। रथेचक्षुषिन
क्षत्रांतुनेत्रीनेतरिवाच्यवत् ॥ ५५ ॥ परःश्रेष्ठारिदूरान्योत्तरेक्लीवन्तुकेवले
। पत्रंतुवाहनेपर्णेस्यात्पक्षेशरपक्षिणोः ॥ ५६ ॥ पारंपरतटेप्रांतेना
स्त्रीपारानदीभिदि। पारीपूरेचकर्कर्यांपादरज्ज्वांचदंतिनः ॥ ५७ ॥ पा
त्रंतुभाजनेयोग्येस्रुवादौराजमंत्रिणि। तीरद्वयांतरेपात्रपुरुःप्राज्येऽभि
धेयवत् ॥ ५८ ॥ पुंसिस्याद्देवलोकेचनृपभेदपरागयोः। पुरंनपुंसक
देहेगृहेपाटलिपुत्रयोः ॥ ५९ ॥ पुष्पादीनांदलाद्येनौनागगुग्गुलौनना
पुरि। पुंड्रोदैत्यविशेषेक्षुभेदयोरतिमुक्तके ॥ ६० ॥ चिह्नेकृमौपुंडरीक
पुंभ्मिन्नीवृदंतरे। पूरोजलसमूहेस्याद्व्रणसंशुद्धिखाद्ययोः ॥ ६१ ॥
पोत्रंवस्त्रेमुखाग्रेचशूकरस्यहलस्यच। पौरस्त्रिषुपुरोद्भूतेकरणोतुनपुंस
कं ॥ ६२ ॥ बलेजामतरिवृत्तादेवतादेरभोप्सिते। भिद्रेपुंसित्रिषुश्रेष्ठेकु

मेदि० कुमेतुनपुंसकं॥ ६३॥ बरीप्रोक्ताशतावर्य्यांबरचस्यात्फलत्रिके। मनागि
राम० ष्टेबरंक्लीवेकेचिदाङ्कस्तदव्ययं॥ ६४॥ बभ्रुर्वैश्वानरेम्मूलपाणौचगरु
डध्वजे। विशालेनकुलेपुंसिपिंगलेत्वभिधेयवत्॥ ६५॥ बक्रःश
नैश्चरेपुंसिपुटभेदेनपुंसकं। त्रिषुक्रूरेचकुटिलेबारःसूर्यादिवासरे
॥ ६६॥ द्वारेहरेकुब्जवृक्षेवृंदावसरयोःक्षणे। बारीस्याद्गजबंधन्यांक
लश्यामपियोषिति॥ ६७॥ बारिर्वागगजबंधन्योःस्त्रीक्लीवेंबुनिबालके
। बीरेरसविशेषेस्याद्गुत्तरेसुभटेत्रिषु॥ ६८॥ स्त्रीमुरक्षीरकाकोलीत
मलक्येलबालुके। पतिपुत्रवतीरंभाविदारीदुग्धिकासुच॥ ६९॥ मल
घूःक्षीरविदार्योःक्लीवंमृंगयांनलेपिच। भरुःस्वर्णेहरेपुंसिभारोऽतिशब
भारयोः॥ ७१॥ भद्रःशिवेखंजरीटेवृषभेतुकदंबके। करिजातिविशेषेचे
नाक्लीवंमंगलमुस्तयोः॥ ७१॥ कांचनेचस्त्रियांरास्नाक्षुद्राव्योमनदी
षुच। तिथिभेदेप्रसारिरायांकट्फलानंतयोरपि॥ ७२॥ त्रिषुश्रेष्ठे
चसाधौचनपुंसिकरणांतरे। भारःस्याद्वीवधेविंशौपलानांद्विसहस्रके
॥ ७३॥ भीरुरन्यैस्त्रिलिंगःस्याद्दरयोषितियोषिति। भूरिर्नावासुदे
वेचहरेचपरमेष्ठिनि॥ ७४॥ नपुंसकंसुवर्णेचप्राज्येस्याद्वाच्यलिंगकः
। मंत्रोवेदविशेषेस्याद्देवादीनांचसाधने॥ ७५॥ गुह्यवादेपिचपुमान्म
रुन्नागिरिधन्वनोः। मात्राकर्णविभूषायांवित्तेमानेपरिच्छदे॥ ७६॥
अल्पेचावयवेस्वल्पेक्लीवंकात्स्न्र्येऽवधारणे। मारोमृतौस्मरेविघ्नेमारीचण्डा

जनक्षये॥ ७७ ॥ मारिःस्त्रीमारणेवर्षेमिचंसुहृदिनदयोः । सूर्येपुंसि भेदि
मुरगंधद्रव्येदैत्यांतरेपुमान् ॥ ७८ ॥ यात्रानुयापनेपिस्याद्गमनोत्सवयोः यन्त्र
स्त्रियां । रंध्रंतुदूषणेछिद्रेरध्रंस्यादुपवर्त्तने ॥ ७९ ॥ उपद्रवेक्लीव
पुंसोरुरुर्नामृगदैत्ययोः । वेत्रं वेमसिपीयूषेपटवासेपिसूत्रके ॥ ८० ॥
रोध्रोनागालवेक्लीवमपराधेचकिल्बिषे । रौद्रोघर्मेरसेचंड्यांस्त्रीनीब्रेभी
षणेत्रिषु ॥ ८१ ॥ वज्रंस्याद्बालकेधात्र्यां क्लीवंयोगांतरेपुमान् । वज्रास्नु
ह्यांगुडूच्यास्त्ववज्रीसुह्यंतरेस्मृता ॥ ८२ ॥ दंभोलौहीरकेप्यस्त्रीवर्द्धं
चपुवरत्रयोः । वप्रस्तातेपुमानस्त्रीवेणुक्षेत्रेचयेतटे ॥ ८३ ॥ वक्त्रंमु
खेवस्त्रभेदे व्यग्रोव्यासक्तआकुले । वस्त्रोनादिवसेक्लीवंमंदिरेचचतुष्प
थे ॥ ८४ ॥ व्याघ्रःस्यात्पुंसिशार्दूलेरक्तैरंडकरंडयोः । श्रेष्ठेनरश्चुत्तर
स्थःकंटकार्यांतुयोषिति ॥ ८५ ॥ वृत्रोरिपौघनेध्वांतेशैलभेदेचदानवे
। वेरःकलेवरेक्लीवंवार्ताकौकुङ्कुमेपिच ॥ ८६ ॥ वोद्रीस्त्रीपणपादेनागो
नसाहौरुपान्तरे । शरस्तेजनकेवाणेदध्यग्रेनाशरंजले ॥ ८७ ॥ श
स्त्रंलोहास्त्रयोःक्लीवं छुरिकायांतुयोषिति । शक्रःपुमान्देवराजेकुटजार्जुनभू
रुहोः॥ ८८ ॥ शद्रिर्नांभोधरेजिष्णौशरुर्नाकोपवज्रयोः । शारिर्ना
ऽक्षोपकरणेस्त्रियांशकुनिकांतरे ॥ ८९ ॥ युद्धार्थगजपर्य्याणेव्यवहा
रांतरेपिच । शारःस्याच्छवलेवाच्यलिंगःपुंसिसमीरणे ॥ ९० ॥ अ
क्षोपकरणेशास्त्रंनद्योरगमात्रयोः । शिग्रुर्नाशाकमात्रेचशोभांजनम

दि॰मे हीरहे ॥ ९१ ॥ शिरेनापिप्पलीमूलेस्याद्धमन्यांचयोषिति । शीघ्रंम
वन॰ स्तदे चक्रांगेक्लीबंद्रुतगतौत्रिषु ॥ ९२ ॥ शुभ्रंस्यादभ्रकेक्लीबमुद्दीप्तेशुभ्रशु
क्लयोस्त्रिषु । शुक्रःस्याद्भार्गवेज्येष्ठमासेवैश्वानरेपुमान् ॥ ९३ ॥ रेतो
ऽस्त्रिहृग्मिरोः क्लीबंशूरःस्याद्यादवेभटे । स्वरुःपुमान्यूपखंडेभिदुरेप्य
ध्वरेशरे ॥ ९४ ॥ सत्रंयज्ञेसदादानाच्छादनारण्यकैतवे । सवेदध्यग्र
गत्योर्ना स्वरेनासासमीरणे ॥ ९५ ॥ उदात्तादावकारादौषड्जादौचध्व
नौपुमान् । सारोबलेस्थिरांशेचमज्जिपुंसिजलेधने ॥ ९६ ॥ न्याय्येक्ली
बंत्रिषुवरेसांद्रंवनेघनेमृदौ । स्फारःस्यात्पुंसिविकटेकनकादेश्चबुद्बुदे
॥ ९७ ॥ सिप्रोनिदाघसलिलेसिप्रातुसरिदंतरे । स्थिराभूशालपर्ण्योर्ना
मुनौमोक्षेऽचलेऽद्रिषु ॥ ९८ ॥ सीरोर्कहलयोःपुंसिसुराचषकमद्ययोः
। पुंलिंगस्त्रिदिवेशेस्यात्सूत्रंतंतुव्यवस्थयोः ॥ ९९ ॥ शास्त्रादिसूच
नाग्रंथेस्वैरःस्वच्छंदमंदयोः । हरिश्चंद्रार्कवाताश्वशुकभेकयमाहिषु
॥ १०० ॥ कपौसिंहेहरेऽजेंशौशक्रेलोकांतरेपुमान् ।वाच्यवत्पिंगहरि
तोर्हारोमुक्तावलौयुधि ॥ १०१ ॥ हारिःपथिकसंतानद्यूतादिभंगयोस्त्रि
यां । हिंस्रात्वेलावलोमांस्योःस्त्रियांस्याद्घातुकेऽन्यवत् ॥ १०२ ॥ हीर
तैलाम्बुकालक्ष्म्योःपुंसिशंकरवज्रयोः । होरालग्नेपिराश्यर्द्धेरेखाशास्त्र
भिदोरपि ॥ १०३ ॥ ॥ रत्रि ॥ अमरस्त्रिदशेप्यस्त्रीसंहारेकुलिशद्रुमे
। स्त्रीगुडूच्यमरावत्योःस्थूणादूर्वाजरायुषु ॥ १०४ ॥ अपरंगजपश्चार्द्धेस्या

ज्ञायैतुयोषिति । इतरस्त्रिष्वपि तथाऽर्वाचीनेऽप्यन्यलिंगकम् ॥ १०५ ॥ मेदि •
अधरस्तु पुमानोष्ठे हीनेऽनूर्द्ध्वे च वाच्यवत् । अध्वरः सावधाने स्याद्वसुभेदे रत्न •
क्रतौ पुमान् ॥ १०६ ॥ अन्तरमवकाशावधिपरिधानान्तर्द्धिभेदतादर्थ्ये
। छिद्रात्मीयविनाबहिरवसरमध्यान्तरात्मसदृशेषु ॥ १०७ ॥ अवरं गजा
न्यजंघादिदेशेऽपि चरमे त्रिषु । अम्बरं न द्वयोर्व्योम्नि सुगंध्यंतरवस्त्रयोः
॥ १०८ ॥ अङ्गारमुल्मुकेन स्त्रीपुंलिंगस्तु महीसुते । अंकुरो रुधिरे लो
म्निपानीयेऽभिनवोद्भिदि ॥ १०९ ॥ अजिरं प्राङ्गणे वाते विषये दर्दुरे तनौ
। स्त्री चरण्यामक्षरं ब्रह्मवर्णयोः पुंसि शङ्करे ॥ ११० ॥ अशिरो वीतिहो
त्रे स्याद्राक्षसे भास्करे पुमान् । अखडीरः पुरुषेऽण्डेऽररं छदकपाटयोः
॥ १११ ॥ अवीराऽपतिपुत्रायां स्त्री सत्त्वरहिते त्रिषु । अगुरु क्लीबं जोङ्गक
शिंशपयोर्वाच्यवल्लघुनि ॥ ११२ ॥ असुरो रजनीरश्म्योरसुरे देवारि
भास्करयोः । आकरो निवहोत्पत्तिःस्थानश्रेष्ठेपु कथ्यते ॥ ११३ ॥ आ
धारस्त्वाधिकरणेऽप्यालबालाम्बुधारणे । आसारः स्यात्प्रसरणे वेगवृष्टौ सुहृ
द्बले ॥ ११४ ॥ आहारः स्यादाहरणे भोजने च पुमानयं । आशरस्तु पुमा
न्वैश्वानरे च रजनीचरे ॥ ११५ ॥ आकार इंगिताकृत्योरितरोऽन्यश्च पा
मरे । इत्वर्य्यसत्यां पथिके क्रूरकर्मणि च त्रिषु ॥ ११६ ॥ ईश्वरो मन्म
थे शम्भौ नाढ्ये स्वामिनि वाच्यवत् । ईश्वरी चेश्वरोमायामुदरं जठरे युधि
॥ ११७ ॥ उदारो दातृमहतोर्दक्षिणेऽप्यभिधेयवत् । उर्व्वरा सर्वसस्या

मेदि० ख्यभूमौस्याद्भूमिमा च के ॥ ११८ ॥ उत्तरादिग्विशेषे च स्नुषायामर्जुन

धरणि० स्य च । विराटस्य सुतेनास्यादूर्ध्वादीच्योत्तमेत्रिषु ॥ ११९ ॥ नपुंसकं

प्रतिवाक्येऽथोद्धारस्त्वोद्धृतावृणे । उत्क्षरं वारिधारायामृक्षरस्त्वृत्विजिस्मृ

तः ॥ १२० ॥ एकाग्रमन्यलिंगंस्यादेकतानेप्यनाकुले । औशीरंशयना

सनचामरदण्डेष्वुशीरजेप्रोक्तं ॥ १२१ ॥ क्रकरः करीरवृक्षेदीनेक्रक

चेचपक्षिभेदेच । कदरः श्वेतखदिरेक्रकचव्याधिभेदयोः ॥ १२२ ॥

कर्बुरं सलिलेहेम्निकर्बुरः पापरक्षसोः । कर्बुरक्त हजवृन्तायांश बलेपु

नरन्यवत् ॥ १२३ ॥ कर्परः स्यात्कपालेचशस्त्रभेदकटाहयोः । कंधरोवा

रिवाहेस्याद्ग्रीवायांकंधरामता ॥ १२४ ॥ कर्बरः कथितोव्याघ्रेशिवायाम

पिकर्बरी । कंजारोजठरेसूर्येविरिञ्चौवारणेमुनौ ॥ १२५ ॥ करीरंवं

शांकुरेऽस्त्रीवृक्षभिद्घटयोः पुमान् । करीरीचीचिकायांचदंतमूलेचदंतिनां

॥ १२६ ॥ कठिंजरसनायांचवर्मांगेकटिवाससि । कर्कराम्बूकर्शिंब्यांचश

टीदुस्पर्शयोरपि ॥ १२७ ॥ कर्कुरेपुंस्युलेवाच्यलिंगःस्यात्यामरेऽपिच ।

कवरंलवणेऽम्लेऽस्त्रीपृथ्वीतुंगीकचान्तरे ॥ १२८ ॥ कर्वर्युमायांनारक्षः

पापयोर्भेषजान्तरे । कर्मारोजातिभेदेचत्वचिसारेचपुंस्ययं ॥ १२९ ॥ क

रेणुः कर्णिकारेचकरिणीवेश्ययोःस्त्रियां । कच्चरंकुत्सितेवाच्यलिंगंतक्रे

नपुंसकं ॥ १३० ॥ कर्करीभाण्डभेदेनादर्पणेकठिनेत्रिषु । कडारः पिङ्ग

लेदासेकलत्रंश्रोणिभार्ययोः ॥ १३१ ॥ दुर्गस्थानेन्द्रपादीनांकटप्रुः पुंसिरा

क्षसे। विद्याधरेमहादेवेतथास्यादक्षदेवने ॥ १३२॥ कंदरस्त्वङ्कुशेपुंसि
गुहायांननपुंसकं। कर्चूरःस्यात्पुमान्कच्छ्यांसुवर्णेतु नपुंसकं ॥ १३३ ॥
काश्मीरंकुङ्कुमेपिस्याट्टङ्कपुष्करमूलयोः। कावेरीस्यात्सरिद्भेदेपण्यनारी
हरिद्रयोः ॥ १३४ ॥ कांतारोऽस्त्रीमहारण्येबिलेदुर्गमवर्त्मनि। पुंसिस्या
दिक्षुभेदेऽथकिशोरोऽश्वस्यशावके ॥ १३५ ॥ तैलपर्ण्योषधौचस्यात्तरु
णावस्थसूर्ययोः। किर्म्मीरोनागरंगेचकर्बुरेराक्षसांतरे ॥ १३६ ॥ किशा
रुर्नासस्यशूकेविशिखेकंकपक्षिणि। कुहरंगह्वरेछिद्रेक्लीवंनागान्तरेपु
मान् ॥ १३७ ॥ कुक्कुरःसारमेयेनाग्रंथिपर्णेनपुंसकं। कूर्परःस्यात्कफोणौ
चजानुर्द्देशेचपुंस्ययं ॥ १३८ ॥ कुञ्जरोऽनेकपेकेशेस्त्रीधानक्यांचपाटलौ
। कुमारःस्यात्शुकेस्कंदेयुवराजेऽश्ववारके ॥ १३९ ॥ बालकेबह्मणद्रौ
मानद्वयोर्जात्यकांचने। कुमारीशैलतनयानवमाल्योर्नदीभिदि ॥ १४० ॥
सहापराजिताकन्याजंबूद्वीपेषुचस्त्रियां। कुठारुर्नाद्रुमकेशेकुद्दारंकेवले
रने ॥ १४१ ॥ कुवेरःस्यात्पुंसिनदीवृक्षेपुण्यजनेश्वरे। कूबरस्त्रिषुचारौ
नाकुब्जकेस्त्रीयुगंधरे ॥ १४२ ॥ केसरंहिंगुनिक्लीबंकिंजल्केनस्त्रियांपु
मान्। सिंहच्छटायांपुन्नागेवकुलेनागकेसरे ॥ १४३ ॥ केदारोऽद्रौशि
वक्षेत्रेभूमिभेदालवालयोः। केनारःपुंसिनरकेशिरःकपोलसंधिषु
॥ १४४ ॥ कोटिरःपुंसिनकुलेशक्रगोपकशक्रयोः। कोट्टारोनागरेकूपेपु
ष्करिण्यास्तपाटके ॥ १४५ ॥ खपुरःक्रमुकेभद्रमुस्तकेऽलसकेपिच। ख

मेदि० पंरस्तस्करेधूर्त्तेभिक्षाभाण्डकपालयोः ॥ १४६ ॥ खर्जूरं रूप्यखलयो
रत्न० र्वृश्चिकेनाद्रुमेदयोः । खदिरीशाकभेदेस्त्रीना चंद्रेदंतधावने ॥ १४७ ॥
खंडाभ्रम भ्रलेशेस्यात्तथा दंतक्षतांतरे । खिंखिरस्तु शिलाभेदे खट्वांगे
धारिधानके ॥ १४८ ॥ गणेरुः कर्णिकारद्रौ करिणीवेश्ययोः स्त्रियां । गर्गे
रोमीनभेदेस्त्रीमन्थन्यामथगह्वरः ॥ १४९ ॥ गुहागहनदंभेषु निकुंजे
पुरुमानयं । गांधारः पुंसिसिंदूरे रागदेशप्रभेदयोः ॥ १५० ॥ गायत्री
त्रिपदादेवीछन्दोभित्खदिरेषु च । गोपुरं द्वारिपूर्द्वारि कैवर्त्तीमुस्तकेपि
च ॥ १५१ ॥ घर्घरोनाचलद्वारि चोलूकनदांतरे । स्त्रीक्षुद्रघंट्यां
वीणायाभेदे स्वरांतरेपि च ॥ १५२ ॥ चमरं चामरेस्त्रीतु मंजरीमृगभेद
योः । चंद्रिरोऽनेकपे चन्द्रे चत्वरं स्थंडिलेऽङ्गने ॥ १५३ ॥ चंकरः स्यं
दनेवृक्षे चातुरोनेत्रगोचरे । चाटुकारिनियन्त्रोर्ध्वचिपुटाक्षेतु चातुरी
॥ १५४ ॥ चक्रगंडे च पुंसिस्याच्चामरं चामरेपि च । दण्डेचबालव्यज
नेचिकुरस्तरलागयोः ॥ १५५ ॥ पक्षिवृक्षभिदोः केशेगृहवभ्रोसरीसृ
पे । छिदिरः पावकेरज्जौ करवालेपरश्वधे ॥ १५६ ॥ छिद्रुरश्छेद
नद्रव्येधूर्त्ते वैरिणिचत्रिषु । जठरोनस्त्रियांकुक्षौ बृद्धकर्कटयोस्त्रिषु
॥ १५७ ॥ जर्जरं शैवलेशक्रध्वजेत्रिषुजरातुरे । जम्बीरः प्रस्थपृष्ठे
स्यात्पुंसिदन्तशठद्रुमे ॥ १५८ ॥ जलेन्द्रः पुंसिवरुणेजम्भलेचम
हाम्बुधौ । झर्झरः स्यात्कलियुगेवाद्यभाण्डेनदान्तरे ॥ १५९ ॥ झल्ल

टीमरुसरीचद्देऊतुङ्केबालकुन्तले । टट्टरीस्यान्मृषावादेलंपापटहवा मेदि०
द्ययोः ॥ १६० ॥ टङ्कारोविस्मयेपुंसिप्रसिद्धौशिञ्जिनीध्वनौ । टगरष्टं शन्त०
कणाक्षारेहेलाविभ्रमगोचरे ॥ १६१ ॥ नान्धवन्केकराक्षेस्यात् डिङ्गरो
उङ्गरेपिच । क्षेपेतमिस्त्वंतिमिरेकोपेस्त्रीतुनमस्तनौ ॥ १६२ ॥ कृष्ण
पक्षनिशायांचत्वक्पचंतुवराङ्गके । स्त्रीकारव्याघ्रतिमिरंध्वान्तेनेत्रामया
न्तरे ॥ १६३ ॥ तीवरोनाऽम्बुधौव्याधेतुंबुरीकुक्कुरेस्त्रियां । धन्याकेपितुषा
रस्तुशीकरेशीतलेहिमे ॥ १६४ ॥ तुवरस्तुकषायेस्यात्काक्ष्याढकीप्रसू
वर्यपि । तूवरोऽश्मश्रुपुरुषेप्रौढाप्यमृङ्गरकेपिच ॥ १६५ ॥ पुरुषव्य
ञ्जनत्यक्तेस्यात्कषायरसेपिच । दद्दरेमूषिकायांचस्तल्पेभ्रातरिबा
लके ॥ १६६ ॥ दन्तुरस्तून्नतरदेनतोन्ननतेचिषु । दर्दरःपर्वते
पुंसिचिन्वोशछन्नभाजने ॥ १६७ ॥ दर्दुरस्तोयदेभेकेवाद्यभाण्डाद्रि
भेदयोः । दर्दुरचण्डिकायांस्याद्ग्रामजालेनपुंसकं ॥ १६८ ॥ दरडारो
वहलेमन्नवारणेशरयन्त्रके । कुम्भकारस्यचक्रेचद्वापरःसंशयेयुगे
॥ १६९ ॥ दासेरोदासिकापत्येचिषुपुंसिक्रमेलके । दुर्द्धरःपुंसिनरका
न्तरेस्यादृषभौषधौ ॥ १७० ॥ दैत्यारिःपुंसिसामान्यदेवेचगरुडध्व
जे । धूसरीकिन्नरीभेदेनाखरेचिषुपाण्डुरे ॥ १७१ ॥ नरेन्द्रस्तुमही
पालेविषवैद्येवपुंस्ययं । नर्मरातुदरीभस्त्रासरलानिष्फलास्त्रुच ॥ १७२ ॥
नागरंमुस्तकेमुंठ्यांविदग्धेनगरोद्भवे । निकरोनिवहेसारेन्यायदेयध

मेदि॰ मेनिधौ ॥१७३॥ निर्झरस्तु सहस्रांशुतुरङ्गे तुषपावके। निर्जरः स्या
रान्त॰ त्पुमान्देवे जरत्यक्ते च वाच्यवत् ॥ १७४ ॥ निर्जरा तु गुडूच्यां च ताल प
र्ण्यामपि स्त्रियां। निकारः स्यात्परिभवे धान्यस्योत्क्षेपणेपि च ॥ १७५ ॥
निर्दरं निर्भरे सारेऽन्यवत्तु कठिनेऽत्रपे । स्यान्नीवरो वणिजके वास्तव्ये च पु
मानयं ॥ १७६ ॥ प्रवरः सन्ततौ गोत्रे क्लीबं श्रेष्ठे तु वाच्यवत्। प्रखरो हय
सन्नाहे कुक्कुरेऽश्वतरेपि च ॥ १७७ ॥ पुंसि त्रिष्वत्यन्तखरे पवित्रं वर्षणे
कुशे। ताम्रे पयसि च क्लीबं मेध्ये स्यादभिधेयवत् ॥ १७८ ॥ प्रदरो रोग
भेदे स्याद्विदारे शरभङ्गयोः । प्रकरः स्यात्पुमान्संघे विकीर्णकुसमादिषु
॥ १७९ ॥ नपुंसकंजोगके स्त्री नाट्याङ्गे चत्वरावलौ । पङ्कारः शैवले से
तौ सोपाने जलकुब्जके ॥ १८० ॥ प्रस्तरो ग्रावणि मणौ प्रकारस्तुल्यभेद
योः । पदारः पादधूलौ स्यात्पादालिन्देपि पुंस्ययं ॥ १८१ ॥ प्रसरः
प्रणये वेगे स्यात्पाटीरस्तु मूलके । केदारे वेणुसारे च वारिदे नितत्वन्यपि
॥ १८२ ॥ स्याद्रङ्गे वानिके पुंसि पामरः खलनीचयोः । पाण्डुरं स्यान्म
रुवके वर्णे नातद्वति त्रिषु ॥ १८३ ॥ पार्परो भक्तसिक्थे स्यात्क्षीणांशे रजय
क्ष्मणि । जरटेपि कदम्बस्य केसरे च गदान्तरे ॥ १८४ ॥ प्रान्तरं विपिने
दूरशून्यवर्त्मनि कोटरे । पिठरः स्थाल्यां ना क्लीबं मुस्तामन्थानदण्ड
योः ॥ १८५ ॥ पिञ्जरोऽश्वान्तरे क्लीबं स्वर्णे पीते च वाच्यवत् । पिण्डारः
क्षपणे गोपे महिषीरक्षके द्रुमे ॥ १८६ ॥ पीवरः कच्छपे स्थूले पुष्करं

ऽम्बुपद्मयोः। तूर्यवक्त्रोष्ठ ऋफलेहस्तिहस्तागकाण्डयोः ॥ १८७ ॥ मेदि०
कुष्ठौषधेद्वीपतीर्थभेदयोस्त्वनपुंसकं । नारीगनागविहगन्धपभेदे युवा राज०
रुणे ॥ १८८ ॥ बंठरः स्थगिका रज्जौ लांगुले कुक्कुरस्य च। करीरकोषे
नालस्य पल्लवे च पयोधरे ॥ १८९ ॥ बन्धुरं मुकुटे पुंसि स्त्री च ऋतैलक
ल्कयोः। बन्धूके बधिरे हंसे चि पुस्याद्रम्यनम्रयोः ॥ १९० ॥ बन्धुर
पण्ययोषायां स्त्रियां भूम्नि च सक्तुषु। बन्धुरः शोभने नम्रे वरचारण्डुक
श्चयोः ॥ १९१ ॥ भ्रमरः कामुके भृङ्गे भ्रामरं मधुनि स्मृतं। पुंसि प्रस्तरभे
दे ऽथ भास्करोऽग्नौ प्रभाकरे ॥ १९२ ॥ भार्य्याटः शैलभेदे स्यान्मृगभेदे च
न च च। स्त्री उयापरभार्यायां पुत्रो येनोपपादितः ॥ १९३ ॥ भृङ्गारी झि
ल्लिकायां स्यात्कनकालौ पुनः पुमान्। मत्सरः मक्षिकायां स्यान्मात्सर्यक्रोध
योः पुमान् ॥ १९४ ॥ असह्यपरसंपत्तौ कृपणेचाभिधेयवत्। मधुरा श
तपुष्पायां मिश्रेया नगरीभिदोः ॥ १९५ ॥ मधुकर्कटिकामेदा मधूली य
ष्टिका सु च। क्लीवं विषे पुंसि रसे तद्वत्स्वादु प्रिये ऽन्यवत् ॥ १९६ ॥ मन्द
रस्तु पुमान्मन्थशैले मन्दारपादपे। बाध्यवद्बहले मन्दे मन्दारः स्यात्सुर
द्रुमे ॥ १९७ ॥ पारिभद्रेऽर्कपर्णे च मन्दारो हस्तिधूर्तयोः। मन्दिरं न
गरेऽगारे क्लीवं नामकरालये ॥ १९८ ॥ मन्थरः कोषफलयोर्बाधम
न्थानयोः पुमान्। कुसुंभ्यान्नद्योर्मन्दे पृथौ वक्रेऽभिधेयवत् ॥ १९९ ॥
मकरो यादसो भेदे निधिराशिप्रभेदयोः। मयूरो बर्हि चूडायामपामार्गे भि

मेदि १ खगिडनि॥ २०० ॥ महेंद्रः पर्वतेश क्रोमधुद्रोऽश्चौ चकामुके। मन्दुरा वाजि
शाला १ शालायां प्रयनीयार्थवस्तुनि॥ २०१ ॥ मसूरा मसुरा वानी वेश्या व्रीहि
भेदयोः। मसूरी पापरोगे स्यादुपधानेपुनः पुमान् ॥ २०२॥ मर्म्मरो वस्त्रभेदे च मुष्कपर्यायचिनो तथा। पुंसि स्त्रियां पुनः प्रोक्ता मर्मरी पीतदारुणि ॥ २०३॥ मंजरीतिलकद्रुमुक्तयोर्वल्लरौ द्वयोः। मकुरः स्यान्मुकुरवद्दर्पणे वकुलद्रुमे ॥ २०४ ॥ कुलालदण्डे मात्सर्येव्यासेऽर्क्षे पारिपार्श्विके। मार्ज्जार अतौ खट्टाशे मिहिरः सूर्यबृद्धयोः ॥ २०५॥ मुद्गरं मल्लिकाभेदे पुंसि लोष्टादिभेदने। मुदिरः कामुके मेघे मुहिरः काममूर्खयोः ॥ २०६॥ मुर्मुरस्तुषवह्नौ स्यान्मन्मथे रविवाजिनि। मृगारिः स्यात्पुंसि करणी रवशादूर्लयोरपि ॥ २०७॥ रुधिरोऽङ्गारके पुंसि क्लीवं तु कुङ्कुमासृजोः। वदरा गृष्टिका प्योस्थीरेला पर्यंस्त्रियां पुमान् ॥ २०८ ॥ कार्पासस्यास्थि वदरी कोलो क्लीवं तु तत्फले। वचरः कुक्कुटे पुंसि शठे च वशिरः पुमान् ॥ २०९॥ किणिहीहस्तिपिप्पल्योः क्लीवे ब्धिलवणेस्मृतः। वर्व्वरः पामरे केशे चक्रलेनीवृद्दनारे ॥ २१०॥ फंजिकायां पुमान् शाकभेदे पुष्पभिदोः स्त्रियां। वर्करः परिहासे स्याच्छागेयुवपशावपि ॥ २११॥ वल्लुरं शाद्वले गहनौषधयोरपि। वल्लूरं त्रिषु संशुष्कमांसशूकरमांसयोः ॥ २१२॥ बार्दरं क्षजलावीजदक्षिणावर्तशंखयोः। वीरं च काकचिञ्चायां भार्यायां च मप्रुंसकं ॥ २१३॥ वागरस्तु गतातङ्के मुमुक्षौ नाम नेहके। विश

रदेविषाणेपिनिर्म्मेयेवारकेपिच ॥ २१४ ॥ वासरस्तुपुमान्नागप्रभेदेदिन भेदि०
योरपि। वासुरावासितायांस्याद्रासतेयभुविस्त्रियां ॥ २१५ ॥ विष्टरःकु रान०
शमुष्टौस्याद्रासनेपिमहीरुहे। विस्तरोवाक्प्रपञ्चेस्याद्विस्तारेप्रणयेपि
च ॥ २१६ ॥ विदुरोनागरेधीरे कैरवाणांचमंत्रिणि। विधुरंस्यात्परिश्लेषे
नद्वयोविकलेत्रिषु ॥ २१७ ॥ रसालायांस्त्रीविदारेजलोच्छ्वासाऽ
जिदारयोः। विदारीशालपर्ण्यांचरोगभेदेक्षुगन्धयोः ॥ २१८ ॥ वि
वरंदूषणेगर्त्तेविसरःप्रसरेव्रजे। विस्तारोविटपेस्तम्बेविकारेविकृतौ
रुजि ॥ २१९ ॥ विहारोभ्रमणेस्कंधेलीलायांसुगतालये। शवरोम्लेच्छभेदे
चपानीयेशंकरेपिच ॥ २२० ॥ शम्बरंसलिलेपुंसिमृगदैत्यविशेषयोः। श
म्बरीचाखुपर्ण्यांस्याच्छर्वरीयामिनीस्त्रियोः ॥ २२१ ॥ शर्करःखंडविकृता
वुपलाकर्परांशयोः। शर्करान्वितदेशेपिरुग्भेदेशकलेपिच ॥ २२२ ॥ शर्क
रीछन्दसोभेदेनदीमेखलयोरपि। शरीरंशोणमध्यस्थेपुलिनेदर्दरीत
टे ॥ २२३ ॥ श्वशुरःपूज्येस्त्रीबाह्यांशारीरद्वैद्विजेवृषे। शार्करःस्याद्दुग्ध
फेनेशर्करान्वितदेशयोः ॥ २२४ ॥ शाङ्करस्तुबलीवर्दैछन्दोभेदेनपुंसकं
। शार्वरंत्वन्धतमसेघातुकेभेद्यलिङ्गकं ॥ २२५ ॥ शालारंस्याद्धस्ति
नखेसोपानेपक्षिपञ्जरे। शावरीम्लूकशिंब्यांस्यात्पुंसिपापापराधयोः
॥ २२६ ॥ लोध्रेचशाङ्करिःपुंसिकार्तिकेयेगणाधिपे। शिखरोऽस्त्रीद्रुमा
ग्राद्रिशृङ्गेपुलककक्षयोः ॥ २२७ ॥ पक्वदाडिमबीजाभमाणिक्यश

मेदि॰ कलाग्रयोः। शिशिरोना हिमेनस्त्री ऋतुभेदे जडेत्रिषु ॥ २२८ ॥ शिली
रत्न॰ ध्रंकन्दलीपुष्पेकरकेनाम्रघातरे। क्षुभेदेस्त्रीतुविहगी भेदगैरडूपदीमृदोः
॥ २२९ ॥ शीकरं शरजेवातस्तुताम्बुकणयोःपुमान्। सुषिरंवंशादिवाद्ये
विवरेपिनपुंसकं ॥ २३० ॥ मूषिकेनास्त्रियांगर्तेवह्नौरंध्रान्वितेत्रिषु।
शृङ्गारःसुरतेनाट्यरसेचगजमंडने ॥ २३१ ॥ नपुंसकंलवङ्गेपिना
गसम्भवचूर्णयोः। सम्वरोदैत्यहरिणमत्स्यशैलजिनान्तरे ॥ २३२ ॥
नपुंसकन्तुसलिलबौद्धव्रतविशेषयोः। सङ्करोऽग्निचटत्कारेसंमार्ज
न्यवपुञ्जिते ॥ २३३ ॥ नवदूषितकन्यायांसङ्कारीपुनरुच्यते। संस्का
रःप्रतियत्नेऽनुभवेमानसकर्मणि ॥ २३४ ॥ संस्तरःप्रस्तरेयज्ञेसङ्गरोप्यु
धिचापदि। क्रियाकारेविषेचाङ्गीकारेक्लीवंशमीफले ॥ २३५ ॥ सम्भा
रःसम्भृतौसंघेसामुद्रन्देहलक्षणे। समुद्रजेऽन्यलिङ्गोथसावित्रःश
ङ्करेवसौ ॥ २३६ ॥ सावित्रीसत्यवत्पत्न्यां ब्रह्मपत्न्युमयोरपि। सिन्दू
रस्तरुभेदेस्यात्सिन्दूरंरक्तचूर्णके ॥ २३७ ॥ सिन्दूरीरोचनीरक्तचेलि
काधातकीषुच। सुनारस्तुशुनीस्तन्येसर्पाण्डकलविङ्कयोः ॥ २३८ ॥
सुन्दरीतनुभिन्नारीभिदोःस्त्रीरुचिरेऽन्यवत्। सैरिंध्रीपरवेश्मस्थशि
ल्पकृत्स्ववशस्त्रियां ॥ २३९ ॥ वर्णसङ्करसम्भूतस्त्रीमहल्लिकयोर
पि। सौवीरंकाञ्जिकेस्रोतोंजनेचवदरीफले ॥ २४० ॥ नातुनोवृतिहारि
द्रंहरिद्रारञ्जितेत्रिषु। नानीपवृक्षेहिण्डीरःफेनवार्ताकुपूरुषे ॥ १४१ ॥

रचतुः ॥ अरुष्करोव्रणकृन्निचिषुभल्लातकेपुमान् । भवेदभिमरोयुद्धेवधे मेदि॰
स्वबलसाधने ॥ २४२ ॥ अनुत्तरंत्रिषुश्रेष्ठेप्रतिजल्पविवर्जिते । अलंका रत्न॰
रस्तुहारादावुपमादावलंकृतौ ॥ २४३ ॥ अवहारःपुमांश्चौरेद्यूतयुद्धादि
विश्रमे । निमंत्रणोपनेतव्यद्रव्येग्राहाख्ययादसि ॥ २४४ ॥ अवतारोऽ
वतरणेपुष्करिण्यादितीर्थयोः । अवस्करोऽपिवर्चस्केगुह्योऽथावसरःपु
मान् ॥ २४५ ॥ प्रस्तावेमन्त्रभेदेचवर्षणेचापिकीर्तितः । उपलादावकू
पारःकूर्मराजेमहोदधौ ॥ २४६ ॥ असिपत्रःखड्गकोषेपुमानिक्षोचनार
के । भवेदन्तरवेगस्तरेनागान्तरेपिच ॥ २४७ ॥ अभिहारोऽभियोगे
चचौर्येसन्नहनेपिच । अग्निहोत्राग्निहविषोरर्द्धचन्द्रःनखक्षते
॥ २४८ ॥ गलहस्तेवाणभेदेकृष्णचिवृतितुस्त्रियां । आडम्बरस्तूर्यप
क्षसंरम्भेगजगर्जिते ॥ २४९ ॥ आम्नबीरःप्राणबनिश्यालकेचवि
दूषके । इन्दीवरंकुवलयेशमावर्यांतुयोषिति ॥ २५० ॥ उडुम्बरस्तु
देहल्यांवृक्षभेदेचषंडके । कुष्ठभेदेपिचपुमान्ताम्रेतुस्यान्नपुंसकं ॥ २५१ ॥
उपह्वरंसमीपेस्यादेकान्तेपिनपुंसकं । उदन्तुरस्त्रिषूत्तुङ्गेकरालोन्नट
दन्तयोः ॥ २५२ ॥ उपकारश्चोपकृतौविकीर्णकुसुमादिषु । औदुम्ब
रःश्राद्धदेवेरोगभेदेनपुंसकं ॥ २५३ ॥ अथकर्मकरोभृत्येवेतनाजीव
निचिषु । कीनाशेपुंसिमूर्छायांविम्बिकायामपिस्त्रियां ॥ २५४ ॥ कलिका
रस्तुधूम्याटेकरंजेपीतमस्तके । कर्णिकारःपुमानारग्वधद्रौचद्रुमोत्य

करवीरःकृपाणे

नोलोत्पलवतंसयोः । करवीरःकृपाणे

मेदि॰ ले ॥ २५५ ॥ कर्णपूरः शिरीषेस्यान्नीलोत्पलवतंसयोः । करवीरःकृपाणे

वन॰ स्याद्दैत्यभेदाश्वमारयोः ॥ २५६ ॥ करवीर्य्यदितिश्रेष्ठगवीपुत्रवतीषुच ।

कटम्भराप्रसारण्यांरोहिण्यांगजयोषिति ॥ २५७ ॥ कलंबिकायांगोलायां

वर्षाभूमूर्वयोरपि । कादम्बरस्तुदध्यग्रेमद्यभेदेनपुंसकम् ॥ २५८ ॥ स्त्री

वारुणीपरभृताभारतीशारिकासुच । कालञ्जरोयोगिचक्रमेलकेभैरवेगिरौ

॥ २५९ ॥ कुम्भकारीकुलथ्यायांपुंलिङ्गोघटकारके । काष्ठसाराशिंशपा

यांपुंसिस्तुत्यांमृगान्तरे ॥ २६० ॥ गिरिसारःपुमाल्लौहेरङ्गेमलयपर्वते

। घनसारस्तुकर्पूरेदक्षिणावर्त्तपारदे ॥ २६१ ॥ चराचरंवाच्यलिङ्गमिङ्गे

जगतिनदयोः । चर्म्मकारःपादुकाकृति स्त्रियांचर्म्मकषावधौ ॥ २६२ ॥ अ

थचक्रधरोऽजेऽहेर्नाविषुग्रामजालिनि । चिचाटीरोविधौभालमङ्कितयेन

नचच ॥ २६३ ॥ घण्टाकर्णोपहारावहताक्षागास्तविन्दुषु । तालपत्रन्तुता

टङ्केरगडायान्तालपत्र्यपि ॥ २६४ ॥ तुङ्गभद्रानदीभेदेस्त्रियांपुंसिनदे

न्काटे । तुण्डिकेरीतुकर्पास्यांविम्बिकायामपिस्त्रियां ॥ २६५ ॥ तुलाधार

स्तुलाराशौपुंसिवाणिजकेचिषु । अथतोयधरोमुस्ताक्तनिषसौषधी घने

॥ २६६ ॥ दंडयात्रादिग्विजयेसंपानवरयात्रयोः । अथादशपुरंदेशेपूरे

पिस्यान्नपुंसकं ॥ २६७ ॥ दंडधारःपुमान्पृथ्वीनाथेप्रेताधिपेपिच । दिग

म्बरःस्यात्क्षपसेनग्रेतमसिशंकरे ॥ २६८ ॥ दुरोदरंद्यूतभेदेद्यूतकृत्पण

ख्याःपुमान् । देहयात्रायमपुरीगमनेभोजनेपिच ॥ २६९ ॥ द्वैमातुरोजरासं

धवा रणाननयोः पुमान् । धराधरो हरौ शैले धाराधरोऽसिमेघयोः ॥ २७० ॥ मेदि०
धरांकुरस्तु नाशीरे शीकरेऽपि घनोपले । धार्त्तराष्ट्रोऽसिताङ्घ्रिहंसे कौर रत्न०
वसर्पयोः ॥ २७१ ॥ धुन्धुमारेन्द्रगोपे गृहधूमे पदालिके । धुरंधरो धव
वृक्षे नावाच्यलिङ्गस्तु धूर्वहे ॥ २७२ ॥ धृतराष्ट्रस्तु राज्ञि स्यान्नागहंसविभे
दयोः । धृतराष्ट्री हंसपत्न्यां नभस्सरो विहङ्गमे ॥ २७३ ॥ विद्याधरे घनेवा
मे निशाचरस्तु रक्षसि । फेरुपेचकसर्प्पेषु पांसुलायां निशाचरी ॥ २७४ ॥
निषद्वरस्तु जम्बाले निशायां तु निषद्वरा । नीलाम्बरः प्रलम्बघ्ने कौणपे च शनै
श्चरे ॥ २७५ ॥ भवेत्परिकरः सङ्घे पर्यङ्कपरिवारयोः । प्रगाढगात्रिकाब
न्धे समाचारविवेकयोः ॥ २७६ ॥ अथ पक्षचरश्चन्द्रे पृथक्चारिगजे
ऽपि च । भवेत्प्रतिसरो मन्त्रभेदे माल्ये च कङ्कणे ॥ २७७ ॥ व्रणशुद्धौ चमूपृष्ठे
पुंसि न स्त्री तु मण्डने । आरक्षे करसूत्रे च नियोज्येऽन्यवाच्यलिङ्गकः ॥ २७८ ॥
भवेत्परिसरो मृत्यौ विधावपि च पुंस्ययं । परम्परो मृगभेदे प्रपौत्रे तनयस्य च
॥ २७९ ॥ परंपरा परिपाट्यां हिंसासंतानयोरपि । पयोधरः कोषका
रे नारिकेले स्तनेऽपि च ॥ २८० ॥ कशेरु मेघयोः पुंसि प्रभाकरोऽग्निसूर्ययोः
। प्रतीहारो द्वारि द्वाःस्थे द्वाःस्थितायां तु योषिति ॥ २८१ ॥ परिवारः परि
जने खड्गकोषे परिच्छदे । पारावारः समुद्रे ना तटद्वये नपुंसकं ॥ २८२ ॥
पाचटीरस्तु पुंल्लिङ्गो मुक्ताव्यापारमंचिशि । लोहकांस्यरजत्या चेसिंघाणे
वकेपि च ॥ २८३ ॥ पारिभद्रस्तु मन्दारे निम्बद्रौ देवदारुणि । पीता

मेदि॰ म्बरस्तु शैलूषे पुंसि कैटभसूदने ॥ २८४ ॥ पीतसारो मलयजे गोमेद
रत्न॰ कमणावपि । पूर्णपात्रं वस्तुपूर्णपात्रे वर्द्धापकेऽपि च ॥ २८५ ॥ बलभद्रा
त्रायमाणाकुमार्य्योः पुंसि सीरिणि । ब्रह्मपुत्रः स्त्री च भेदे नदभेदे च पुंस्य ब
म् ॥ २८६ ॥ वक्रनक्रस्तु पिशुनेऽतनौ वस्तुकपस्थिरा । वार्वटीरो रङ्ग
आम्रास्थ्यङ्कुरे गणिकासुते ॥ २८७ ॥ वारबीरस्तु पुंसि स्याद्वारग्राहि
णिका उवे । यूकायां रोलरोधिन्यां मीरजित हयेऽपि च ॥ २८८ ॥ बिन्दु
तन्त्रः पुमान्शारिफलके चतुरङ्गके । वीरभद्रोऽश्वमेधाश्वे वीरश्रेष्ठे च वी
रणे ॥ २८९ ॥ स्याद्वीरतरं वीरणे वीरश्रेष्ठे शरे वेषना । महावीरस्तु ग
रुडे शूरे सिंहे मखानले ॥ २९० ॥ वज्रेश्वेतनतुरङ्गे च संधानविहगेऽपि
च । महामात्रः समृद्धे च मात्ये हस्तिपकाधिपे ॥ २९१ ॥ मणिच्छिद्रा तु
मेदायामृषभाख्यौषधेऽपि च । महेश्वरो महादेवे कथितोऽधीश्वरेऽपि च
॥ २९२ ॥ मृगनेत्रा रात्रिभेदे विशेषेयोषित्स्तथा । रथकारस्तु माहिष्या
त्करणीजे च तक्षणि ॥ २९३ ॥ रगसूच नतुलासूत्रे च पद्मसूत्रेन पुंसकं
। लम्बोदरः स्याद्धुण्ढाने गणानामधिपेऽपि हि ॥ २९४ ॥ लक्ष्मीपुत्र
स्तु पुंलिङ्गः कामदेवे तुरङ्गमे । व्यवहारो द्रुभेदे स्याद्व्यासे पि च गणस्थिते
॥ २९५ ॥ अथ व्यतिकरः पुंसि व्यसन व्यतिषङ्गयोः । वातपुत्रो म
हाधूर्त्ते भीमसेने हनूमति ॥ २९६ ॥ विश्वम्भरोऽच्युते शक्रे पुंसि वि
श्वम्भराभुवि । विम्बकद्रु स्त्रि पुंसके ध्वानाखेटश्मुनोः पुमान् ॥ २९७ ॥

विभावरीनिशायन्योः कुट्टन्यां वक्रयोषिति । विभाद्वस्त्रगुरुफाग्नि वि मेदि०
भाकरेऽग्निसूर्ययोः ॥ २९८ ॥ वीतिहोत्रोऽनलेऽर्केच शतपत्रः रान्ना०
शिखण्डिनि । दार्वाघाटे सारसे पद्मे तु नपुंसकं ॥ २९९ ॥ शताव
रीतु शट्यांस्यादिन्द्री वयोमर्पिस्त्रियां । शिशुमारोऽम्बुसम्भूतजन्तौ तारा
त्मकाऽच्युते ॥ ३०० ॥ भवेत्सहचरो गिंट्यां द्वयोरनुचरेऽपि चु । समुद्रा
रुः पुमान्ग्राहे सेतुबन्धे तिमिङ्गिले ॥ ३०१ ॥ संप्रहारो गतौ युद्धे स्थिरदंष्ट्रो
भुजंगमे । वाराहाकृतिविष्णौ च सुकुमारो मृदौ त्रिषु ॥ ३०२ ॥ पुंसि पुण्ड्राभि
धाने स्यात्सूत्रधारः स्थपतौ । नानाद्यन्नरसस्वारि पारिपार्श्वप्रभेद
योः ॥ ३०३ ॥ रपंच ॥ तमालपत्रं तापिच्छे तिलके पत्रकेऽपि च । तालीशप
त्रं भूम्यामलकी तालीशयोः स्मृतं ॥ ३०४ ॥ स्यात्यांशुचामरः पुंसि दूर्वास्विन
नटीभुवि । बर्हापके प्रशंसायां पुरीटौ धूलिगुच्छके ॥ ३०५ ॥ स्यात्पाद
चतुरश्छागे सैकते पिप्पलेऽपि च । करके परदेवीके प्रवक्तृपुरुषेऽपि च
॥ ३०६ ॥ पीतकावेरमित्येतत्कुङ्कुमे पित्तलेऽपि च । स्याद्राजबदरं रक्त
मेलकेलवणेऽपि च ॥ ३०७ ॥ वस्त्रोकसारेन्द्रपुरे कुबेरनलिनीपुरे ।
विप्रतीसारस्तूद्दिष्टः कौकृत्येऽनुशयेऽपि च ॥ ३०८ ॥ भवेत्समभिहारस्तु
पौनःपुन्यभृशार्थयोः । सर्वतोभद्र इत्युक्तः काव्यचित्रे गृहान्तरे ॥ ३०९ ॥

निम्बेना सर्वतोभद्रागम्भारी नटवेष्टिताः ।

इतिरान्तवर्गः





॥ लैकम् ॥ लः शक्रे लातृदाने स्याद्ध्रस्वोपि निगद्यते । लीश्लेषणे च चप
लेऽम्बोधरण्यां निशापतौ ॥ १ ॥ लद्विः ॥ अल्लो रसस्य भेदे स्यात् स्त्री चांगे
रिकौषधौ । अलिः सुरापुष्पलिहोः पुंस्यालिर्विशदाशये ॥ २ ॥ त्रिषु
स्त्रियां वयस्यायां सेतौ पंक्तौ च कीर्त्तिता । आलुर्गलंतिकायां स्त्री क्लीबं मूले च भे
लके ॥ ३ ॥ ईला कलत्रे सौम्यस्य धरित्र्यां गवि वाचि च । ओल्लस्तुम्बूर
ण्ये पुंसि स्यादार्द्रवाच्यलिंगकः ॥ ४ ॥ कला स्यान्मूलरैवृद्धौ शिल्पादावंश
मात्रके । षोडशांशे च चंद्रस्य कलनाकालमानयोः ॥ ५ ॥ कलं शुक्रे त्रि
ष्वजीर्णे नास्योक्तमधुरध्वनौ । कलिः स्त्री कलिकायां ना शूराजिकल
हे युगे ॥ ६ ॥ कालो मृत्यौ महाकाले समये यमकृष्णयोः । काला तु कृष्ण
त्रिवृतामंजिष्ठानीलिकासु च ॥ ७ ॥ काली गौर्य्यां क्षीरकीटे कालिकामा
तृभेदयोः । कोलो लेशे द्वयोः शस्त्रज्वालाकफोणिषु ॥ ८ ॥ कुलं
जनपदे गोत्रे सजातीयगणेऽपि च । भवने च तनौ क्लीबं करटकार्य्यौषधौ
कुली ॥ ९ ॥ अथ कूलं तटे स्तूपे सैन्यपृष्ठतडागयोः । कोलं कोलिफले
क्रोडे पिप्पलीचव्ययोः स्त्रियां ॥ १० ॥ माण्डूकपाले शनौ चित्रे वराहे । खलं गभ
लके । खलं भूस्थानकल्केषु नीचक्रूराधमे त्रिषु ॥ ११ ॥ खल्लो वस्त्रप्रभेदे स्या
न्निम्ने चर्म्मणि पात्रके । खल्ली तु हस्तपादावमर्द्दनाख्यरुजि स्त्रियां ॥ १२ ॥
खिलमप्रहते क्लीबं सारसंक्षिप्तवेश्मसोः । गल्लः सर्जरसे कण्ठे गुलः स्याद्दे

ह्वेपुमान् ॥ १३ ॥ गुलोनुगुटिकारोगभिदोःस्नुह्यांगुलःस्मृता। गोलागो मेदि०
द्वावरीसख्योःकुनटीदुर्गयोःस्त्रियां ॥ १४ ॥ पचांजनेमंडलेचालिंजरेबा लान०
लखेलने। चलालक्ष्यांपुमान्कंपेकंपयुतेऽभिधेयवत् ॥ १५ ॥ चिल्लः
पुमान् क्लिन्ननेत्रेक्लिन्नाक्षेप्यभिधेयवत्। आततायिनितत्प्रोक्तः चिल्ली
स्यात्क्षुद्रवास्तुके ॥ १६ ॥ चुल्लीचितायामुद्धानेचोलः कूर्पासकेपुमान्।
नपुंसकंतुवसनेछलंस्खलितशाठ्ययोः ॥ १७ ॥ छल्लीवीरुधिसंता
नेवल्कलेकुसुमांतरे। जलंगोकलनेनीरेह्रीवेरेप्यम्यवज्जडे ॥ १८ ॥
जालंगवाक्षआनायेक्षारकेदंभवृंदयोः। जालोनीपद्रुमेजालीपटोलि
कौषधोस्त्रियां ॥ १९ ॥ झल्लास्यादातपस्योर्मौदहितर्य्यपिचस्त्रियां।
झिल्लीचीर्य्यातपरुचोर्वर्त्तौमुद्वर्तनांशुके ॥ २० ॥ तलंस्वरूपेऽनू
र्द्धेत्वीज्ञीवंज्याघातवारणे। काननेकार्य्यबीजेचपुंसिमालमहीरुहि
॥ २१ ॥ चपेटेचत्सरैतंचीघातेसव्येनपाणिना। तल्लोतरुण्यांतल्लस्तु ज
लाधारांतरेपुमान् ॥ २२ ॥ तालः करतलेंगुष्ठमध्यमाभ्यांचसंमिते। गीत
कालक्रियामानेकरस्फालेद्रुमांतरे ॥ २३ ॥ वाद्यभांडेचकांसस्यत्सरौता
लीजटौषधौ। क्लीवंतुहरितालेस्यात्तुलासादृश्यमानयोः ॥ २४ ॥
गृहाणांदारुबंधायपीठिकायामपीष्यते। तूलोपलशनेभाराडेतूलंस्या
द्ब्रह्मदारुणि ॥ २५ ॥ आकाशेऽथपिचौतस्त्रीदलमुत्सेधखंडयोः। ग्र
लीछदेप्यवद्रव्येपत्रेप्यथदलिःस्त्रियां ॥ २६ ॥ कमठ्यांनामुनेर्द्वो

मेदि॰ लानीत्यांयानांतरेपि च । नलः पोटगले राज्ञि पितृदेवे कपीश्वरे ॥ २७ ॥

लान्त॰ कमलेपि कुनट्यां च क्रमेण क्लीबयोषितोः । नालं ना नापदन्मदंडे नाली शा

ककडंबके ॥ २८ ॥ नीलं तु नीली रक्तेना निध्यद्रिवानरांतरे । नीली रुग्भे

दनीलिन्योः पलमुन्मानमांसयोः ॥ २९ ॥ पल्यस्त्वग्रामकुट्टन्योः प

ल्लः स्थूलकुसूलके । पालिः कर्णलताग्रेऽश्रौ पंक्त्यावंकप्रभेदयोः ॥ ३० ॥

छात्रादिदेयखाद्ये पाली यूका सश्मश्रुयोषितोः । पिल्लः पुमान् क्लिन्ननेत्रे क्लि

न्नाक्षे पुनरन्यवत् ॥ ३१ ॥ पीलुः पुमान्प्रसूने स्यात्परमाणौ मतंगजे । अ

स्थिखण्डे च तालस्य कांडपादपभेदयोः ॥ ३२ ॥ पुलः स्यात्पुलके पुंसि विपु

लेप्यन्यलिंगकः । फलं जातीफले सस्ये हेतूत्थे व्युष्टिलाभयोः ॥ ३३ ॥

त्रिफलायां च कक्कोले प्रियङ्गौ तु फली स्मृता । फालः पुंसि महादेवे कालिंदीभे

दनेपि च ॥ ३४ ॥ क्लीबं सीरोपकरणे चिपुकर्पासवाससि । बलिर्दैत्यप्रभे

दे च करचामरदंडयोः ॥ ३५ ॥ उपहारे पुमान्स्त्री तु जरया श्लथचर्मणि ।

गृहदारुप्रभेदे च जठरावयवेपि च ॥ ३६ ॥ बलं गंधरसे रूपे स्थामनि स्थौ

ल्यसैन्ययोः । पुमान्हलायुधे दैत्यप्रभेदे वायसेपि च ॥ ३७ ॥ बलयुक्तेऽ

न्यलिंगः स्याद्वाट्यालके तु योषिति । बल्ली स्यादजमोदायां व्रतत्यामपि यो

षिति ॥ ३८ ॥ बालो ना कुंतलेऽश्वस्य करिणश्चापि बालधौ । नारिकेले ह

रिद्रायां मल्लिका भिद्यपि स्त्रियां ॥ ३९ ॥ वाच्यलिङ्गोऽर्भके मूर्खे ह्रीबेरे पु

न्नपुंसकं । अलंकारांतरे मेध्ये बाली बाला त्रुटिस्त्रियोः ॥ ४० ॥ बेला काले च

सीमायामब्धेःकूलविकारयोः । अक्लिष्टमरणेरोगेईश्वरस्यचभोजने 
॥ ४१ ॥ भल्लःस्यात्पुंसिभल्लूकेशस्त्रभेदेतुनद्वयोः । भल्लातक्यांस्त्रियांभल्ली 
भालंतेजोललाटयोः ॥ ४२ ॥ भेलःप्लवेमुनौपुंसिभीरुवक्तव्यवाच्यवत् । म
ल्लोऽस्त्रीपापविट्किट्टेकृपणेत्वभिधेयवत् ॥ ४३ ॥ मल्लःपात्रेकपोलेच
मत्स्यभेदेबलीयसि । मालःक्षेत्रेस्त्रियांपुष्पस्रजोजात्यंतरेपुमान् ॥ ४४ ॥
मालुःपत्रलतानार्योःस्त्रियांमूलंशिफाऽऽद्ययोः । मूलविभेऽन्तिकेवानामेला
स्यान्मेलकेमसौ ॥ ४५ ॥ मौलिःकिरीटेधम्मिल्लेचूडायामनपुंसकं । नाऽ
शोकद्रौस्त्रियांभूमौलीलाकेलिविलासयोः ॥ ४६ ॥ शृङ्गारभावचेष्टायांलो
लःस्याद्वाच्यलिंगकः । सतृष्णेचंचलेलोलाजिह्वाकमलयोःस्त्रियां ॥ ४७ ॥
व्यालोदुष्टगजेसर्पेश्वापदेनाऽन्यवत्खले । विलंछिद्रेगुहायांचपुमानुच्चैः
श्रवोहये ॥ ४८ ॥ शलस्तुशललिपुंसिभृङ्गिक्षेत्रभिदोर्विधौ । शालुःकषा
यद्रव्येस्याच्चौरकाख्यौषधौपुमान् ॥ ४९ ॥ शालिस्तुकलमादौचगंधमार्जा
रकेपुमान् । शालाद्रुस्कंधशाखायांगृहगेहैकदेशयोः ॥ ५० ॥ नामत्स्येशि
लमुञ्छेस्याज्जंडूपद्यांशिलीमता । स्तंभशीर्षेशिलाशिल्यौशिलातुप्रस्तरेम
ता ॥ ५१ ॥ तथामनःशिलायांचद्वाराधःस्थितदारुणि । शीलंस्वभावे
सद्वृत्तेशुक्लोयोगांतरेसिते ॥ ५२ ॥ नपुंसकंतुरजतेशूलोऽस्त्रीरोगआ
युधे । मृत्युकेतनयोगेषुशूलास्यात्पण्ययोषिति ॥ ५३ ॥ शैलोभूभृतिशै
लंतुशैलेयेताक्ष्र्येशैलके । सालःपादपमात्रेस्यात्प्राकारेसर्जपादपे ॥ ५४ ॥

मेदि॰ स्थालंभाजनभेदेऽपिस्थालीस्यात्पाटलेद्वयोः। स्थूलंकूटेऽथनिश्चेपीव

लान्त॰ रेऽप्यन्यलिङ्गकः ॥ ५५॥ हालोहलेपुमान्हालामदिरायांचयोषिति

। हेलास्त्रियामवज्ञायांविलासेवरयोषितां ॥ ५६॥ त्र्यचि:॥ अनलोव

सुभेदेऽग्नावनिलोवसुवातयोः। अर्गलाविष्कम्भोलेदण्डेऽन्तरकपाट

योः ॥ ५७॥ अगलःकुटिलेसर्ज्जरसेसमदद्न्तिनि। अंगुलीकरशा

खायांकर्णिकायांगजस्यच ॥ ५८॥ अचलावसुधायांस्यादचलःशैल

कीलयोः। अमलंत्वभ्रकेक्लीबंलक्ष्म्यांस्त्रीनिर्मलेत्रिषु ॥ ५९॥ अ

ञ्जलिस्तुपुमान्हस्तसम्पुटेकुडवेऽपिच।अवेलस्त्वपलापेस्याद्वेलापूगच

र्विते ॥ ६०॥ अभीलंनद्वयोःकष्टेवाच्यलिङ्गंभयानके। इल्वलातारका

भेदेनामेदेदैत्यमत्स्ययोः ॥ ६१॥ उत्पलीतुषचर्पट्यांक्लीबंकुष्ठप्रसू

नयोः। उपलःप्रस्तरेरत्नेशर्करायान्तुयोषिति ॥ ६२॥ उज्ज्वलोदीप्त

शृङ्गारविशदेषुविकाशिनि। उत्फुल्लंकरणस्त्रीणामुत्तानेऽपिविकस्वरे

॥ ६३॥ उत्तालउत्कटेश्रेष्ठेविकरालेप्लवङ्गमे। कमलंसलिलेताम्रेज

लजेक्लोम्निभेषजे॥ ६४॥ मृगभेदेतुकमलःकमलाश्रीवरस्त्रियोः। कपिला

रेणुकायाञ्चशिंशपागोविशेषयोः ॥ ६५॥ पुण्डरीककरिण्यांस्त्रीवर्णभे

देत्रिलिङ्गकं। नाऽनलेवासुदेवेचमुनिभेदेचकुक्कुरे ॥ ६६॥ कम्बलोनाग

राजेस्यात्सास्नाप्रावारयोरपि। कृमावप्युत्तरासङ्गेसलिलेतुनपुंसकम्

॥ ६७॥ करालोदन्तुरेतुङ्गेभीषणेचाभिधेयवत्। सर्जरसेतैलेनाक्लीबं

क्षुद्रकुठेरके ॥ ६८ ॥ कन्दलं चिपुकपालेप्युपरागे नवाङ्कुरे । कलध्वनौ मेदि॰
कन्दली तु मृगगुल्मप्रभेदयोः ॥ ६९ ॥ कदलः कदली पृश्न्यां कदलीकद लान्त॰
लौ पुनः । रम्भावृक्षेऽथ कदली पताकामृगभेदयोः ॥ ७० ॥ कदला डिम्बि
कायाञ्च शाल्मलीभूरुहेपि च । कपालोऽस्त्री शिरोऽस्थ्नि स्याद्घटादेः शक
लेव्रजे ॥ ७१ ॥ करणीला तु दयोर्द्रोणीप्रभेदे नाक्रमेलके । कल्लोलः पुंसि
हर्षे स्यादुल्लोलवैरिणोरपि ॥ ७२ ॥ कामला रोगभेदे वा नाना मरुवसन्त
योः । कामुके वाच्यलिङ्गोऽथ काकोलं नरकान्तरे ॥ ७३ ॥ नाकुलोल्ले द्रो
णकाके विषभेदे तु न स्त्रियां । काहला वाद्यभाण्डस्य भेदे चाप्सरसां भिदि
॥ ७४ ॥ काहली तु महत्यां स्यात्काहलस्तरणायुधे । शब्दमात्रेपि पुल्लिङ्ग
स्त्रिषु स्पष्टेभृशे खले ॥ ७५ ॥ किट्टालः पुंसि ताम्रस्य कलसे लोहगूथके
। कीलालं रुधिरे तोये कुशलः शिक्षिते त्रिषु ॥ ७६ ॥ क्षेमे च सुकृते चापि
पर्य्याप्ते च नपुंसकं । कुवलञ्चोत्पले मुक्ताफलेपि बदरीफले ॥ ७७ ॥
कुड्मलो मुकुले पुंसि न द्वयोर्नरकान्तरे । कुटिला नगरपाद्यो स्त्री भुग्ने वा
च्यलिङ्गकः ॥ ७८ ॥ कुन्तलस्तु षंके बाले जवे पुंभूम्नि नीवृति । कुलालः कुक्कु
भे कुम्भकारे स्त्री त्वञ्जनान्तरे ॥ ७९ ॥ कुम्भिलः शालमीने च चौरे श्लोकार्थचौ
रयोः । कुद्दालः स्यात्पुमान्भूमिदारणे युगपाचके ॥ ८० ॥ कुचेला विद्धप
र्ण्यां स्त्री वाच्यवत्तु कुवाससि । कुकूलं शंकुसंकीर्णश्वभ्रेनातु तुषानले ॥ ८१ ॥
कुण्डलं कर्णभूषायां पाशेपि वलयेपि च । कांचनद्रुगुडूच्योः स्त्री केवलः कु

मेदि० हृतेपुमान् ॥ ८२ ॥ नपुंसकंतुनिर्णीतेवाच्यवच्चैकतानयोः । केरली
स्वाम्म० ज्ञानभेदेऽथकोमलंमृदुलेजले ॥ ८३ ॥ कोहलोवाद्यभेदेस्यान्नाट्यशास्त्र
प्रवक्तरि । ग्रंथिलस्तुकरीरद्रौविकंकतनरैपुमान् ॥ ८४ ॥ संग्रन्थौचि
षुगन्धालीभद्राग्रन्थ्योस्त्रयोषिति । गरलंतृणपूलेचविषेमानेनपुंसकं
॥ ८५ ॥ गोपालोन्टपगोपेशेगोकुलेमुसलेहले । गोरिलस्तुपुमान्सिद्धार्थचू
र्णस्याद्गौरसर्षपे ॥ ८६ ॥ चपलःपारदेमीनेचोरकेप्रस्तरान्तरे । चपलाक
मलाविद्युत्पुंश्चलीपिप्पलीषुच ॥ ८७ ॥ नपुंसकंतुशीघ्रेस्याद्वाच्यवत्तर
लेचले । चत्वालोहोमकुण्डेस्यात्पुंसिदर्भेपिदृश्यते ॥ ८८ ॥ चन्द्रिलः
पुंसिवास्तूकशाकेभर्गेचनापिते । चंचलातुतडिल्लक्ष्म्योश्चंचलःकामुकेऽ
निले ॥ ८९ ॥ चूडालातूच्चटायांस्त्रीचूडावतिचवाच्यवत् । छगलंनी
लवस्त्रेनाछागेस्त्रीवृद्धदारके ॥ ९० ॥ जंबालःशैवलेपंकेजगलोमदनद्रु
मे । मेदकेपिष्टमद्येचपुंसिधूर्तेऽभिधेयवत् ॥ ९१ ॥ जटिलापिप्पलीमां
स्योर्जटायुक्तेतुवाच्यवत् । जंगलंनिर्जनस्थानेचिलिग्यांपिशितेऽस्त्रियां
॥ ९२ ॥ जंभलःपुंसिजंबीरेबुद्धदेवान्तरेऽपिच । जंबूलस्तुपुमान्जंबू
विटपेक्रकचच्छदे ॥ ९३ ॥ जांगलीविषविद्यायांजाङ्गलंजालिनीफ
ले । जांगलीमूकशिंब्यांस्त्रीजाङ्गलोनाकपिञ्जले ॥ ९४ ॥ तरलश्चं
चलेविद्गेभास्वरेपिचलिङ्गकं । हारमध्यमणौपुंसियवागूसुरयोःस्त्रि
यां ॥ ९५ ॥ तण्डुलःस्याद्विडङ्गेचधान्यादिनिकरेपुमान् । तमालस्ति

लकेऽखञ्जेनापिच्छेबहुशाद्भुते ॥ ९६ ॥ नामूलीनागवल्ल्यांस्त्रीक्लमुकेतुन मेदि०
पुंसकं । नालतलोहृजिपाकेचलोहकूटेमनोजवे ॥ ९७ ॥ नुमुलःक लान्त०
लिवृक्षेनाक्लीवन्तुरशसंकुले । तैतिलोगण्डकेपुंसिक्लीवन्तुकरणांतरे
॥ ९८ ॥ दुकूलंश्लक्ष्णवस्त्रेस्यात्क्षौमेचधवलागवि । वृषश्रेष्ठेपुमान्वा
च्यलिङ्गःस्त्रीचसुंदरे ॥ ९९ ॥ नकुलीकुक्कुटीमांस्योःपशुपाण्ड
वयोःपुमान् । नाकुलीकुक्कुटीकन्दे रास्नायांचविकेस्त्रियां ॥ १०० ॥ नाभी
लंवंक्षणेनार्य्योःक्लक्लगर्भाण्डयोरपि । निचूलस्तुनिचोलेस्यादिज्ज
लाख्यमहीरुहे ॥ १०१ ॥ निर्मलंस्यात्तुनिर्माल्येचाभ्रकेचनपुंसकं ।
मलहीनेऽन्यलिंगंचनिस्तलंवर्तुलेचले ॥ १०२ ॥ निष्कलस्तुकला
शून्येनष्टवीर्य्येचवाच्यवत् । नैपालीतुनवमालीकुनटीस्तुबहास्तुच
॥ १०३ ॥ पललन्तिलचूर्णेचपङ्केमांसेनपुंसकं । नाराक्षसेऽथपटलं
पिटकेचपरिच्छदे ॥ १०४ ॥ छदिर्दृग्रोगतिलकेक्लीबंवृजेपुनर्नना ।
प्रतलंपातालभेदेततांगुलिकरेपुमान् ॥ १०५ ॥ पटोलंवस्त्रभेदेनौषधी
ज्योत्स्न्यांतुयोषिति । प्रवालोऽस्त्रीकिसलयेवीणादण्डेचविद्रुमे ॥ १०६ ॥ पं
चालीपुत्रिकागीत्योःस्त्रियांपुंभूम्निनीवृति । पांशुलःपुंश्चलेशम्भोःखट्वांगेस्त्र्य
सतीभुवोः ॥ १०७ ॥ पाकलंकुष्ठभेषजेपुंसिस्यात्कुञ्जरज्वरे । पाचालंपा
चनेनाऽग्नौबाधनद्रव्यवातयोः ॥ १०८ ॥ पाटलापाटलीस्त्रीस्यादस्यपुष्पेपु
ननैना । आशुधान्येपुमान्श्वेतरक्तवर्णेपिवाच्यवत् ॥ १०९ ॥ पातालंनागलो

भेदि॰ केस्यादिवरे वडवानले। पातिलीवागुरायांस्यान्नारीपात्रप्रभेदयोः ॥ १९०॥

लान्त॰ पिप्पलंसलिलेवस्त्रच्छेदभेदे चनातरे। निरंशुकेपक्षिभेदेकणायांपिप्पलीस्मृता ॥ १९१॥ पिचुलो झवुकेपिस्यादिज्जलेजलवायसे। पिङ्गलोनागभिद्रुद्रचण्डांशुपारिपार्श्विके ॥ १९२॥ निधिभेदेकपावग्नौपुंसिस्यात्कपिलेऽन्यवत्। स्त्रियांवेश्याविशेषेचकरिण्यांकुमुदस्यच ॥ १९३॥ पिच्छलातोयपिप्पल्यांस्त्र्यन्यवत्पिच्छसंयुते। क्लीवन्तुतेजसद्रव्येपिच्छलोविजिनेऽन्यवत् ॥ १९४॥ स्तोपोतिकाशिंशपयोःशाल्मलीसिन्धुभेदयोः। पुत्तलःसुंदरस्कारेचिषुपुंस्यान्नभेदयोः ॥ १९५॥ पेशलोरुचिरेदक्षेफेनिलोऽरिष्टपादपे। नासफेनेचिषुक्लीवंकोलीमदनयोःफले ॥ १९६॥ बकुलानीलिकायांस्यादेलायांगवियोषिति। कृत्तिकास्तुस्त्रियाम्भूम्निविहायसिनपुंसकं ॥ १९७॥ पुंस्यग्नौकृष्णपक्षेचवाच्यवच्चाज्यकृष्णयोः। बरलाबारलाचापिगन्धोलीहंसकांतयोः ॥ १९८॥ बार्दलन्तुर्दिनेमेलानंदायांबार्दलःस्मृतः। मंगलासितदूर्वायामुमायांपुंसिभूमिजे ॥ १९९॥ नपुंसकन्तुकल्याणेसर्वार्थरक्षणेपिच। मण्डलम्परिधौकोठेदेशेद्वादशराजसु ॥ १२०॥ क्लीवेऽथनिवहेविम्बेचिषुपुंसितुकुक्कुरे। मंजुलंचिषुमंजौनाजलरङ्कौनपुंसकं ॥ १२१॥ जलांचलेनिकुंजेचमहिलाफलिनीस्त्रियोः। मातुलोव्रीहिभिन्मातृभ्रात्रोःश्वमनद्रुमे ॥ १२२॥ धूस्तूरेमाचलोवन्दिचौरेचग्राहरोगयोः। मुसलंस्यादयोग्रेतुपुंनपुंसकयोः

स्त्रियां ॥ १२३ ॥ तालमूल्यामाखुपर्णीगृहगोधिकयोरपि । मृणालं नल मेदि०
दे क्लीबंस्त्री नपुंसकयोर्बिसे ॥ १२४ ॥ मेखला खड्गबन्धेस्यात्कांचीशैलनि लान्त०
तम्बयोः । यमलंयुगले क्लीबेयमली चोटिकाद्वये ॥ १२५ ॥ रसाला
रसनादूर्वाविदारीमार्जितासु च । रसालंसिह्लकेवोलेरसालस्त्विक्षुचूत
योः ॥ १२६ ॥ शमिलोरमणीकामिलाङ्गलंपुच्छशेफसोः । लाङ्गलीतोय
पिप्पल्यां क्लीबंतुकुसुमान्तरे ॥ १२७ ॥ गोदारशीतृणराजगृहदारुवि
शेषयोः । लोहलःश्रृङ्खलाचार्य्येऽव्यक्तवाचिनिचत्रिषु ॥ १२८ ॥ वं
जुलःपुंसितिनिशेवेतसाशोकयोरपि । वरुणलोयुद्धभेदेचनैकायाञ्चख
निचके ॥ १२९ ॥ वातूलःपुंसिवात्यायांबाच्यवन्मारुतासहे । वामिलो
दाम्भिकेवामेत्रिषुस्याद्विमलास्त्रियां ॥ १३० ॥ शातलायांभुवोभेदेनिर्मले
त्वभिधेयवत् । विपुलःपृथुलेऽगाधेमेरुपश्चिमभूधरे ॥ १३१ ॥ विदु
लस्तुपुमानम्बुवेतसेवेतसेपिच । विडालोनेत्रपिण्डेस्याद्वृषदंशककेपु
मान् ॥ १३२ ॥ विशालात्विन्द्रवारुण्यामुज्जयिन्यांतुयोषिति । मृगप
क्षिभिदोःपुंसिपृथुलेत्वभिधेयवत् ॥ १३३ ॥ वृषलोगृञ्जनेशूद्रेचन्द्रगु
प्तेचराजिनि । शकलन्त्वचिखण्डेस्याद्रागवस्तुनिवल्कले ॥ १३४ ॥
शम्बलोऽस्त्रीसम्बलवत्कुलपाथेयमत्सरे । शयालुःस्यादजगरेनिद्रा
शीलेचकुक्कुरे ॥ १३५ ॥ श्रद्धालुर्दोहदिन्यांस्त्रीश्रद्धायुतेतुवाच्यवत्
। श्यामलःपिप्पलेकृष्णेशार्दूलोराक्षसान्तरे ॥ १३६ ॥ व्याघ्रेचपशुभे

मेदि० द्वेचसत्तमेतूत्तरस्थितः । शाल्मलिस्तरुभेदेस्याद्द्वीपभेदेपिचद्वयोः
लाना० ॥ १३७ ॥ श्रीफलः पुंसिमालूरेधात्रीनीलिकयोःस्त्रियां । शीबलंस्याच्च
शैवालेशैलेयेचनपुंसकं ॥ १३८ ॥ शीतलंपुष्पकाशीशेशैलजेमलयोद्भ
वे । पुमानासनपर्णेस्याच्छिशिरेवाच्यलिङ्गकम् ॥ १३९ ॥ शृगालोव
ञ्चकेदैत्यभेदेनाडमरेस्त्रियां । शृङ्खलापुंस्कटीवस्त्रबन्धेचनिगडे
त्रिषु ॥ १४० ॥ शैवलंपद्मकाष्ठेस्याच्छैवालेपिपुमानयं । शौष्कलःशु
ष्कमांसस्यपणकेपिशिताशिनि ॥ १४१ ॥ खण्डालीतैलमानेचसरसी
कामुकस्त्रियोः । सरलःपद्मकाष्ठेनाऽथोदारावक्रयोस्त्रिषु ॥ १४२ ॥ स
ङ्कुलंत्रिषुविस्पष्टवाचिव्याप्तेऽथसप्तला । नवमालीचर्मकषागुञ्जासुपा
टलैस्त्रियां ॥ १४३ ॥ सन्धिलासुरुङ्गायांनदीमदिरयोःस्त्रियाम्
। सिध्मलामत्स्यविकृतौवाच्यवत्तुकिलासिनि ॥ १४४ ॥ सुवेलःप्रण
तेशान्तेत्रिषुनापर्वतान्तरे । सुतलोऽट्टालिकाबन्धनागलोकप्रभेदयोः
॥ १४५ ॥ हिंगुलोवर्णकद्रव्येनाभण्टाक्यान्तुहिंगुली । हेमलःस्वर्णकारे
स्यात्कृकलासेशिलान्तरे ॥ १४६ ॥ लचतुः ॥ अक्षमालाऽक्षसूत्रेस्यादरु
न्धत्यामपिस्त्रियाम् । अङ्कपालीपरीरम्भधात्रीवेदिकयोःस्त्रियां ॥ १४७ ॥
अथातिबलःप्रबलेत्रिषुस्त्रीत्वौषधीभिदि । उदूखलंगुग्गुलौस्यादुलू
खलेपिनद्वयोः ॥ १४८ ॥ एकाष्ठीलावनतिक्तिकौषधौपुंसिवक
पुष्पे । कलकलउक्तःकोलाहलेतथासर्जनिर्यासे ॥ १४९ ॥ अथक

मेफलंकमैरङ्ग कर्मविपाकयोः । कन्दरालःपुमान्गर्द्दभाण्डेप्लक्षतरावपि ॥ १५० ॥ कमंडलुःस्यात्करकेनस्त्रीनाप्लक्षपादपे । कुतूहलंकौतुकेस्यात्प्रशस्तेपिचदृश्यते ॥ १५१ ॥ खतमालस्तुपुल्लिङ्गोधूमेपिचवलाहके । गण्डशैलोललाटेस्याच्च्युतस्थूलोपलेगिरेः ॥ १५२ ॥ गन्धफल्यपिगुन्द्रायांचम्पकस्यचकोरके । चक्रवालोऽद्रिभेदेस्याच्चक्रवालन्तुमण्डले ॥ १५३ ॥ जलाञ्चलंस्वतोवारिनिर्गमेशैवलेऽपिच । दलामलंमरुबकेदमनेपिनपुंसकं ॥ १५४ ॥ ध्वनिनालातुवीणायांवेणुकाहलयोरपि । स्यात्परिमलोऽतिमर्द्दोतिमनोहरगन्धयोस्त्वपि ॥ १५५ ॥ सुरतोपमर्द्दविकसच्छरीररागादिसौरभेपुंसि । अथपाटगलःपुंसिनलेघकाशमत्स्ययोः ॥ १५६ ॥ भवेद्भल्लूकफलोनीपेनाऽमलक्यान्तुयोषिति । भस्मतूलंग्रामकूटेपांशुवर्षेहिमेपिच ॥ १५७ ॥ भद्रकालीतुगन्धोल्यांकात्यायन्यामपिस्त्रियां । महाकालोमहादेवेकिंपाकेप्रमथान्तरे ॥ १५८ ॥ भवेन्मदकलोमत्तेभेमदाव्यक्तवाचिनोः । महाबलंशासकेऽतिबलायांस्त्रीबलोत्कटे ॥ १५९ ॥ त्रिलिङ्गंमणिमालातुहारेदन्तक्षतान्तरे । महानीलोभृङ्गराजेमणिनागविशेषयोः ॥ १६० ॥ मुक्ताफलन्तुकर्पूरेमौक्तिकेलवलीफले । स्यान्मृत्युफलाकदल्यांमहाकालफलेपुमान् ॥ १६१ ॥ भवेद्यवफलोवेणौमांसीकुटजयोरपि । रजस्वलापुष्पवत्यांस्त्रियांस्यात्सैरभेपुमान् ॥ १६२ ॥ वातकेलिःकलालापेपिङ्गदन्तक्षतेपुमान् । अथवायुफलं

मेदि०
लान्त०

भेदि॰ शृङ्गकार्मुकेकरकेपिच ॥ १६३ ॥ भवेद्धिचकिलोमल्लीप्रभेदेमदनेपुं
मान् । वृहन्नलागुडाकेशेमहापोटगलेपुमान् ॥ १६४ ॥ सदाफलः
स्यान्धफलेनारिकेलेप्युदुम्बरे । सिनीवालीतुदृष्टेन्दुकलामादुर्गयोःस्त्रि
यां ॥ १६५ ॥ अथसौवर्चलंसर्जक्षारेचलवणान्तरे । हस्तिमल्लोऽभ्र
मातङ्गेशङ्खनागेविनायके ॥ १६६ ॥ हरितालंधातुभेदेस्त्रीदूर्वाकाश्य
रीखयोः । हलाहलोब्रह्मसर्पेअञ्जनायांविषेस्त्रियां ॥ १६७ ॥ लपंच ॥
आमुनीबलआख्यातः कन्यापालकयज्वनोः । उदग्डपालःपुंसिस्यान्म
पेमत्स्यप्रभेदयोः ॥ १६८ ॥ एककुण्डलआख्यातोबलभद्रेधनाधिपे
। कपोटपालउद्दिष्टःकेलितातसमुद्रयोः ॥ १६९ ॥ स्यात्यांडुकंबलःश्वे
तप्रावारग्रावभेदयोः । भवेत्सुरततालीतुदूतिकायांशिरःस्रजि ॥ १७० ॥
इतिलान्तवर्गः



वान्त॰ वैकं ॥ वःसान्त्वनेचवातेचवरुणेचनिगद्यते । वम्प्रचेतसिजानीयादिवा
र्थेवतदव्ययं ॥ १ ॥ स्वःस्यात्पुंस्यात्मनिज्ञातौचिष्वात्मीयेधनेऽस्त्रियां ॥ ॥ व
द्विः ॥ अविर्नाथेरवैमेषेशैलेमूषिककम्बले ॥ २ ॥ अश्वःपुञ्जातिभेदेच
तुरगेचपुमानयम् । ऊर्ध्वंस्यादुच्छ्रितेतुङ्गेचोपरिष्टादपिस्मृतं ॥ ३ ॥
ध्रुवःध्रुतेराजिकायांकविर्वाल्मीकिशुक्रयोः । स्रुवैकाव्यकरेपुंसिखली
नेस्यात्तुयोषिति ॥ ४ ॥ कण्वंपापेमुनौपुंसिकिण्वंबीजेचपुंधुनः । पापेऽश्री

वन्नपुंसके शराडेऽन्यवद्विक्रमे ॥ ५ ॥ स्यात्तु ग्रीवा कन्धराया न्तच्छिरण्या मेदि०
श्चयोषिति । चार्वीतु शोभनाबुध्योर्ज्योत्स्नाधनद्भार्ययोः ॥ ६ ॥ छविः वा न्त०
शोभाहृवेर्यो षिज्जवोवेग वतिचिषु । पुल्लिङ्गस्तु भवेद्देगे चोड्रपुष्पे जवा
स्मृता ॥ ७ ॥ जीवः प्राणिनिवृत्तौ च वृक्षभेदे वृहस्पतौ । जीवा जीवन्तिका
मौर्व्वी वचाशिंजितभूमिषु ॥ ८ ॥ नस्त्रीतु जीविते तत्त्वं स्वरूपे परमा
त्मनि । स्यादिलंबितनृत्ये च द्रुवः प्रद्रावनर्मणोः ॥ ९ ॥ रसेपिद्रवदा
वौतु वनवह्नौ वनेप्युभौ । द्वंद्वं रहस्येक लहे तथामिथुनयुग्मयोः ॥ १० ॥
द र्वीदाहृहरिद्रायां तथा गोजिह्विकौषधौ । द्यौः स्त्री स्वर्गे च गगनेदि
वंक्लीव न्तयोः स्मृतं ॥ ११ ॥ देवा मेघे सुरे राज्ञि स्यान्नपुंसकमिन्द्रिये ।
देवी कृतामिषेकाया नोजनीपृक्कयो रपि ॥ १२ ॥ धवः पुमान्नरे धूर्त्तेपत्यौ
वृक्षान्तरे पिच । ध्रुवः शङ्कौ हरे विष्णौ वटे चोत्तानपादजे ॥ १३ ॥ वसु
योग भिदोः पुंसि क्लीवं निश्चित तर्कयोः । स्त्री मूर्वाक्षौः शालपर्ण्यां गीतिसु
भेदयोस्त्रिषु ॥ १४ ॥ सन्ततेशाश्वतिचाथ नवं नव्येपुमान्स्तुतौ । नीवी
परिपणेस्त्रीणां कटीवसनबन्धने ॥ १५ ॥ पक्वं परिणतेपि स्यादिनाशा
भिमुखेत्रिषु । प्लवः स्यात्प्लवने भेले भेकेऽवौ श्वपचे कपौ ॥ १६ ॥ जलका
के च कुलके प्रवणेपर्कटीद्रुमे । कारण्डवाख्य विहगे शब्दे प्रतिगतौ पुमान्
॥ १७ ॥ केवर्त्तीमुस्तके गन्धतृणेपि स्यान्नपुंसकं । पार्श्वं कक्षांतरे चक्रो
पान्तेपर्शुगणेपि च ॥ १८ ॥ प्राध्वन्तु प्रगते चातिदूर वर्त्मनिबंधने ।

मेदि० पृथ्वीभूमौ महत्यां च त्वक्पत्र्यां कृष्णजीरके ॥ १९ ॥ भवः क्षेमेश संसारेस
वान्त० त्तायां प्राप्तिजन्मनोः । भावः सत्तास्वभावाभिप्रायचेष्टात्मजन्मसु ॥ २० ॥
क्रियालीलापदार्थेषु विभूतिबुधजन्तुषु । रत्यादौ चाथ रेवा स्यान्नील्यां रत्यां
नदीभिदि ॥ २१ ॥ लवो लेशे विनाशे च छेदने रामनन्दने । लक्षाकरंज
भेदे स्यात्फले वा द्वौ खगान्तरे ॥ २२ ॥ लघ्वी लाघवयुक्तायां स्त्रीभेदे स्यन्द
नस्य च । विश्वा त्वतिविषायां स्त्री जगति स्यान्नपुंसकं ॥ २३ ॥ न नाम्नु
षट्यां पुंसि देवप्रभेदेष्वखिले त्रिषु । विल्वं फले श्रीफले ना शवः स्यात्कुणपे पुमान्
॥ २४ ॥ नपुंसकं तु पानीये शिविर्भूर्जेन्द्रपे पुमान् । शिवो मोक्षे महादेवे कीलक
ग्रहयोगयोः ॥ २५ ॥ वालुके गुग्गुलौ वेदे पुण्डरीकद्रुमे पुमान् । सुखक्षेम
जले क्लीवं शिवा झाटामलौ षधौ ॥ २६ ॥ अभयामलकी गौरी फेरुसक्तान्
फला सु च । शिवस्तु भूर्जपत्रे स्यात्तथोदार महीपतौ ॥ २७ ॥ स्रुवस्त्वा
मेयज्ञ कर्मण्याचारे जलसन्निधौ । सत्त्वं गुणे पिशाचादौ बले द्रव्य स्वभाव
योः ॥ २८ ॥ आत्मत्वे व्यवसाये तु चित्ते ष्वस्त्री तु जन्तुषु । स्त्रवाय
ज्ञे वसन्धाने सान्त्वं दाक्षिण्य सामनोः ॥ २९ ॥ स्रुवा दर्व्यां होमपात्रे शल्ल
कीमूर्वयोः स्त्रियां । हवआज्ञाध्वराह्वाने ह्रस्वोन्यक्खर्वयोस्त्रिषु ॥ ३० ॥
वत्रि ॥ अक्षीवं वशिरे शिग्रौ नामन्तेपुनरन्यवत् । अभावो मरणेऽसत्त्वे
आहवो युद्धयज्ञयोः ॥ ३१ ॥ आर्तवं स्त्रीरजे पुष्पे क्लीवं स्यादृतुजे त्रिषु ।
आस्रवो ङ्गीकृतौ क्लेशे नाम्यवद्वचनस्थिते ॥ ३२ ॥ उद्भवो यादवभिदि

